# तैत्तिरीयब्राह्मण

ब्रह्म संधत्तं तन्मे जिन्वतम् । क्षत्रँ संधत्तं तन्मे जिन्वतम् । इषँ संधत्तं तां मे जिन्वतम् । ऊर्जँ संधत्तं तां मे जिन्वतम् । रयिँ संधत्तं तां मे जिन्वतम् । पुष्टिँ संधत्तं तां मे जिन्वतम् । प्रजाँ संधत्तं तां मे जिन्वतम् । पशून्संधत्तं तान्मे जिन्वतम् । स्तुतोऽसि जनधाः । देवास्त्वा शुक्रपाः प्रणयन्तु १

सुवीराः प्रजाः प्रजनयन्परीहि । शुक्रः शुक्रशोचिषा । स्तुतोऽसि जनधाः । देवास्त्वा मन्थिपाः प्रणयन्तु । सुप्रजाः प्रजाः प्रजनयन्परीहि । मन्थी मन्थिशोचिषा । संजग्मानौ दिव आ पृथिव्यायुः । संधत्तं तन्मे जिन्वतम् । प्राणँ संधत्तं तं मे जिन्वतम् । अपानँ संधत्तं तं मे जिन्वतम् २

व्यानँ संधत्तं तं मे जिन्वतम् । चक्षुः संधत्तं तन्मे जिन्वतम् । श्रोत्रँ संधत्तं तन्मे जिन्वतम् । मनः संधत्तं तन्मे जिन्वतम् । वाचँ संधत्तं तां मे जिन्वतम् । आयुः स्थ आयुर्मे धत्तम् । आयुर्यज्ञाय धत्तम् । आयुर्यज्ञपतये धत्तम् । प्राणः स्थः प्राणं मे धत्तं । प्राणं यज्ञाय धत्तम् ३

प्राणं यज्ञपतये धत्तम् । चक्षुः स्थश्चक्षुर्मे धत्तम् । चक्षुर्यज्ञाय धत्तम् । चक्षुर्यज्ञपतये धत्तम् । श्रोत्रँ स्थः श्रोत्रं मे धत्तम् । श्रोत्रं यज्ञाय धत्तम् । श्रोत्रं यज्ञपतये धत्तम् । तौ देवौ शुक्रामन्थिनौ । कल्पयतं दैवीर्विशः । कल्पयतं मानुषीः ४

इषमूर्जमस्मासु धत्तम् । प्राणान्पशुषु । प्रजां मयि च यजमाने च । निरस्तः शण्डः । निरस्तो मर्कः । अपनुत्तौ शण्डामर्कौ सहामुना । शुक्रस्य समिदसि । मन्थिनः समिदसि । स प्रथमः संकृतिर्विश्वकर्मा । स प्रथमो मित्रो वरुणो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुतमाजुहोमि ५

कृत्तिकास्वग्निमादधीत । एतद्वा अग्नेर्नक्षत्रम् । यत्कृत्तिकाः । स्वायामेवैनं

देवतायामाधाय । ब्रह्मवर्चसी भवति । मुखं वा एतन्नक्षत्राणाम् । यत्कृत्तिकाः । यः कृत्तिकास्वग्निमाधत्ते । मुख्य एव भवति । अथो खलु ६

अग्निनक्षत्रमित्यपचायन्ति । गृहान्ह दाहुको भवति । प्रजापती रोहिण्या-मग्निमसृजत । तं देवा रोहिण्यामादधत । ततो वै ते सर्वान्रोहानरोहन् । तद्रोहिण्यै रोहिणित्वम् । यो रोहिण्यामग्निमाधत्ते । ऋध्नोत्येव । सर्वान्रो-हान्रोहति । देवा वै भद्राः सन्तोऽग्निमाधित्सन्त ७

तेषामनाहितोऽग्निरासीत् । अथैभ्यो वामं वस्वपाक्रामत् । ते पुनर्वस्वोरादधत । ततो वै तान्वामं वसूपावर्तत । यः पुरा भद्रः सन्पापीयान्त्स्यात् । स पुनर्वस्वोरग्निमादधीत । पुनरेवैनं वामं वसूपावर्तते । भद्रो भवति । यः कामयेत दानकामा मे प्रजाः स्युरिति । स पूर्वयोः फल्गुन्योरग्निमादधीत ८

अर्यम्णो वा एतन्नक्षत्रम् । यत्पूर्वे फल्गुनी ।अर्यमेति तमाहुर्यो ददाति । दानकामा अस्मै प्रजा भवन्ति । यः कामयेत भगी स्यामिति । स उत्तरयोः फल्गुन्योरग्निमादधीत । भगस्य वा एतन्नक्षत्रम् । यदुत्तरे फल्गुनी ।भग्येव भवति । कालकञ्जा वै नामासुरा आसन् ९

ते सुवर्गाय लोकायाग्निमचिन्वन्त । पुरुष इष्टकामुपादधात्पुरुष इष्टकाम् । स इन्द्रो ब्राह्मणो ब्रुवाण इष्टकामुपाधत्त । एषा मे चित्रा नामेति । ते सुवर्गँ लोकमाप्रारोहन् । स इन्द्र इष्टकामावृहत् । तेऽवाकीर्यन्त । येऽवाकीर्यन्त । त ऊर्णावभयोऽभवन् । द्वावुदपतताम् १०

तौ दिव्यौ श्वानावभवताम् । यो भ्रातृव्यवान्त्स्यात् । स चित्रायामग्नि-मादधीत । अवकीर्यैव भ्रातृव्यान् । ओजो बलमिन्द्रियं वीर्यमात्मन्धत्ते । वसन्ता ब्राह्मणोऽग्निमादधीत । वसन्तो वै ब्राह्मणस्यर्तुः । स्व एवैनमृता-वाधाय । ब्रह्मवर्चसी भवति । मुखं वा एतदृतूनाम् ११

यद्वसन्तः । यो वसन्ताग्निमाधत्ते । मुख्य एव भवति । अथो योनिमन्तमेवैनं

प्रजातमाधत्ते । ग्रीष्मे राजन्य आदधीत । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधाय । इन्द्रियावी भवति । शरदि वैश्य आदधीत । शरद्वै वैश्यस्यर्तुः १२

स्व एवैनमृतावाधाय । पशुमान्भवति । न पूर्वयोः फल्गुन्योरग्निमादधीत । एषा वै जघन्या रात्रिः संवत्सरस्य । यत्पूर्वे फल्गुनी ।पृष्टित एव संवत्सरस्याग्निमाधाय । पापीयान्भवति । उत्तरयोरादधीत । एषा वै प्रथमा रात्रिः संवतसरस्य । यदुत्तरे फल्गुनी ।मुखत एव संवत्सरस्याग्निमाधाय । वसीयान्भवति । अथो खलु । यदैवैनं यज्ञ उपनमेत् । अथादधीत । सैवास्यर्द्धिः १३

उद्घन्ति । यदेवास्या अमेध्यम् । तदपहन्ति । अपोऽवोक्षति शान्त्यै । सिकता निवपति । एतद्वा अग्नेर्वैश्वानरस्य रूपम् । रूपेणैव वैश्वानरमवरुन्द्धे । ऊषान्निवपति । पुष्टिर्वा एषा प्रजननम् । यदूषाः १४

पुष्ट्यामेव प्रजननेऽग्निमाधत्ते । अथो संज्ञान एव । संज्ञानँ ह्येतत्पशूनाम् । यदूषाः । द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम् । अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । त ऊषा अभवन् १५

यदस्या यज्ञियमासीत् । तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ऊषान्निवपन्नदो ध्यायेत् । द्यावापृथिव्योरेव यज्ञियेऽग्निमाधत्ते । अग्निर्देवेभ्यो निलायत । आखू रूपं कृत्वा । स पृथिवीं प्राविशत् । स ऊतीः कुर्वाणः पृथिवीमनु समचरत् । तदाखुकरीषमभवत् १६

यदाखुकरीषँ संभारो भवति । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्द्धे । ऊर्जं वा एतँ रसं पृथिव्या उपदीका उद्दिहन्ति । यद्वल्मीकम् । यद्वल्मीकवपा संभारो भवति । ऊर्जमेव रसं पृथिव्या अवरुन्द्धे । अथो श्रोत्रमेव । श्रोत्रँ ह्येतत्पृथिव्याः । यद्वल्मीकः १७

अबधिरो भवति । य एवं वेद । प्रजापतिः प्रजा असृजत । तासाम-न्नमुपाक्षीयत । ताभ्यः सूदमुप प्राभिनत् । ततो वै तासामन्नं नाक्षीयत । यस्य सूदः संभारो भवति । नास्य गृहेऽन्नं क्षीयते । आपो वा इदमग्रे सलिलमासीत् । तेन प्रजापतिरश्राम्यत् १८

कथमिदँ स्यादिति । सोऽपश्यत्पुष्करपर्णं तिष्ठत् । सोऽमन्यत । अस्ति वै तत् । यस्मिन्निदमधि तिष्ठतीति । स वराहो रूपं कृत्वोप न्यमज्जत् । स पृथिवीमध आर्छत् । तस्या उपहत्योदमज्जत् । तत्पुष्करपर्णेऽप्रथयत् । यदप्रथयत् १९

तत्पृथिव्यै पृथिवित्वम् । अभूद्वा इदमिति । तद्भूम्यै भूमित्वम् । तां दिशोऽनु वातः समवहत् । ताँ शर्कराभिरदृँहत् । शं वै नोऽभूदिति । तच्छर्कराणाँ शर्करत्वम् । यद्वराहविहतँ संभारो भवति । अस्यामेवा-छम्बट्कारमग्निमाधत्ते । शर्करा भवन्ति धृत्यै २०

अथो शंत्वाय । सरेता अग्निराधेय इत्याहुः । आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । ताः समभवन् । तस्य रेतः परापतत् । तद्धिरण्य-मभवत् । यद्धिरण्यमुपास्यति । सरेतसमेवाग्निमाधत्ते । पुरुष इन्वै स्वाद्रेतसो बीभत्सत इत्याहुः २१

उत्तरत उपास्यत्यबीभत्सायै । अति प्रयच्छति । आर्तिमेवातिप्रयच्छति । अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् । यदाश्वत्थः संभारो भवति । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्द्धे २२

देवा वा ऊर्जं व्यभजन्त । तत उदुम्बर उदतिष्ठत् । ऊर्ग्वा उदुम्बरः । यदौदुम्बरः संभारो भवति । ऊर्जमेवावरुन्द्धे । तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् २३

यस्य पर्णमयः संभारो भवति । सोमपीथमेवावरुन्द्धे । देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नाम । यत्पर्णमयः संभारो भवति । ब्रह्मवर्चसमेवावरुन्द्धे । प्रजापतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्यतीति । तँ शम्याशमयत् २४

तच्छम्यै शमित्वं ।यच्छमीमयः संभारो भवति । शान्त्या अप्रदाहाय । अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्छत् । यद्वैकङ्कतः संभारो भवति । भा एवावरुन्द्धे । सहृदयोऽग्निराधेय इत्याहुः । मरुतोऽद्भिरग्निमतमयन् । तस्य तान्तस्य हृदयमाच्छिन्दन् । साशनिरभवत् । यदशनिहतस्य वृक्षस्य सम्भारो भवति । सहृदयमेवाग्निमाधत्ते २५

द्वादशसु विक्रामेष्वग्निमादधीत । द्वादश मासाः सम्वत्सरः । संवत्सरादेवैनमवरुध्याधत्ते । यद्द्वादशसु विक्रामेष्वादधीत । परिमित-मवरुन्धीत । चक्षुर्निमित आदधीत । इयद्द्वादशविक्रामा३ इति । परिमितं चैवापरिमितं चावरुन्द्धे । अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति २६

चक्षुर्वै सत्यम् । अद्रा३गित्याह । अदर्शमिति । तत्सत्यम् । यश्चक्षुर्नि-मितेऽग्निमाधत्ते । सत्य एवैनमाधत्ते । तस्मादाहिताग्निर्नानृतं वदेत् । नास्य ब्राह्मणोऽनाश्वान्गृहे वसेत् । सत्ये ह्यस्याग्निराहितः । आग्नेयी वै रात्रिः २७

आग्नेयाः पशवः । ऐन्द्रमहः । नक्तं गार्हपत्यमादधाति । पशूनेवावरुन्द्धे । दिवाहवनीयम् । इन्द्रियमेवावरुन्द्धे । अर्धोदिते सूर्य आहवनीयमादधाति । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । प्रजा एव तद्यजमानः सृजते । अथो भूतं चैव भवैष्यच्चावरुन्द्धे २८

इडा वै मानवी यज्ञानुकाशिन्यासीत् । साशृणोत् । असुरा अग्निमादधत इति । तदगच्छत् । त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम् । साब्रवीत् । प्रतीच्येषाँ श्रीरगात् । भद्रा भूत्वा पराभविष्यन्तीति २९

यस्यैवमग्निराधीयते । प्रतीच्यस्य श्रीरेति । भद्रो भूत्वा पराभवति । साशृणोत् । देवा अग्निमादधत इति । तदगच्छत् । तेऽन्वाहार्यपचनमग्र आदधत । अथ गार्हपत्यम् । अथाहवनीयम् । साब्रवीत् ३०

प्राच्येषाँ श्रीरगात् । भद्रा भूत्वा सुवर्गं लोकमेष्यन्ति । प्रजां तु न वेत्स्यन्त इति । यस्यैवमग्निराधीयते । प्राच्यस्य श्रीरेति । भद्रो भूत्वा सुवर्गं लोक-मेति । प्रजां तु न वन्दते । साब्रवीदिडा मनुम् । तथा वा अहं तवाग्निमाधास्यामि । यथा प्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे ३१

प्रत्यस्मिँल्लोके स्थास्यसि । अभि सुवर्गं लोकं जेष्यसीति । गार्हपत्यमग्र आदधात् । गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते । गार्हपत्येनैवास्मै प्रजां पशून्प्राजनयत् । अथान्वाहार्यपचनम् । तिर्यङ्ङिव वा अयं लोकः । अस्मिन्नेव तेन लोके प्रत्यतिष्ठत् । अथाहवनीयम् । तेनैव सुवर्गं लोकमभ्यजयत् ३२

यस्यैवमग्निराधीयते । प्र प्रजया पशुभिर्मिथुनैर्जायते । प्रत्यस्मिँल्लोके तिष्ठति । अभि सुवर्गं लोकं जयति । यस्य वा अयथादेवतमग्निराधीयते । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यस्य यथादेवतम् । न देवताभ्य आ वृश्च्यते । वसीयान्भवति ३३

भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना-दधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्य । यथादेवतमग्निराधीयते । न देवताभ्य आ वृश्च्यते । वसीयान्भवति ३४

प्रजापतिर्वाचः सत्यमपश्यत् । तेनाग्निमाधत्त । तेन वै स आर्ध्नोत् । भूर्भुवः सुवरित्याह । एतद्वै वाचः सत्यम् । य एतेनाग्निमाधत्ते । ऋध्नोत्येव । अथो सत्यप्राशूरेव भवति । अथो य एवं विद्वानभिचरति । स्तृणुत एवैनम्

३५

भूरित्याह । प्रजा एव तद्यजमानः सृजते । भुव इत्याह । अस्मिन्नेव लोके प्रतितिष्ठति । सुवरित्याह । सुवर्ग एव लोके प्रतितिष्ठति । त्रिभिरक्षरैर्गार्हपत्यमादधाति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । सर्वैः पञ्चभिराहवनीयम् ३६

सुवर्गाय वा एष लोकायाधीयते । यदाहवनीयः । सुवर्ग एवास्मै लोके वाचः सत्यँ सर्वमाप्नोति । त्रिभिर्गार्हपत्यमादधाति । पञ्चभिराहवनीयम् । अष्टौ संपद्यन्ते । अष्टाक्षरा गायत्री ।गायत्रोऽग्निः । यावानेवाग्निः । तमाधत्ते ३७

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन्न् । ताभ्यो ज्योतिरुदगृह्णात् । तं ज्योतिः पश्यन्तीः प्रजा अभि समावर्तन्त । उपरीवाग्निमुदृह्णीयादुद्धरन् । ज्योतिरेव पश्यन्तीः प्रजा यजमानमभि समावर्तन्ते । प्रजापतेरक्ष्यश्वयत् । तत्परापतत् । तदश्वोऽभवत् । तदश्वस्याश्वत्वम् ३८

एष वै प्रजापतिः । यदग्निः प्राजापत्योऽश्वः । यदश्वं पुरस्तान्नयति । स्वमेव चक्षुः पश्यन्प्रजापतिरनूदेति । वज्री वा एषः । यदश्वः । यदश्वं पुरस्तान्नयति । जातानेव भ्रातृव्यान्प्रणुदते । पुनरावर्तयति ३९

जनिष्यमाणानेव प्रतिनुदते । न्याहवनीयो गार्हपत्यमकामयत । नि गार्हपत्य आहवनीयम् । तौ विभाजं नाशक्नोत् । सोऽश्वः पूर्ववाड्भूत्वा । प्राञ्चं पूर्वमुदवहत् । तत्पूर्ववाहः पूर्ववाट्त्वम् । यदश्वं पुरस्तान्नयति । विभक्तिरेवैनयोः सा । अथो नानावीर्यावेवैनौ कुरुते ४०

यदुपर्युपरि शिरो हरेत् । प्राणान्विच्छिन्द्यात् । अधोऽधः शिरो हरति । प्राणानां गोपीथाय । इयत्यग्रे हरति । अथेयत्यथेयति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । प्रजापतिरग्निमसृजत । सोऽबिभेत्प्रमा

धद्द्यतीति ४१

तस्य त्रेधा महिमानं व्यौहत् । शान्त्या अप्रदाहाय । यत्त्रेधाग्निराधीयते । महिमानमेवास्य तद्व्यूहति । शान्त्या अप्रदाहाय । पुनरावर्तयति । महिमानमेवास्य संदधाति । पशुर्वा एषः । यदश्वः । एष रुद्रः ४२

यदग्निः । यदश्वस्य पदेऽग्निमादध्यात् । रुद्राय पशूनपिदध्यात् । अप-शुर्यजमानः स्यात् । यन्नाक्रमयेत् । अनवरुद्धा अस्य पशवः स्युः । पार्श्वत आक्रमयेत् । यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन् । अवरुद्धा अस्य पशवो भवन्ति । न रुद्रायापिदधाति ४३

त्रीणि हवींषि निर्वपति । विराज एव विक्रान्तं यजमानोऽनु विक्रमते । अग्नये पवमानाय । अग्नये पावकाय । अग्नये शुचये । यदग्नये पवमानाय निर्वपति । पुनात्येवैनम् । यदग्नये पावकाय । पूत एवास्मिन्नन्नाद्यं दधाति । यदग्नये शुचये । ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति ४४

देवासुराः संयत्ता आसन्न् । ते देवा विजयमुपयन्तः । अग्नौ वामं वसु संन्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तदग्निर्नोत्सह-मशक्नोत् । तत्त्रेधा विन्यदधात् । पशुषु तृतीयम् । अप्सु तृतीयम् । आदित्ये तृतीयम् ४५

तद्देवा विजित्य । पुनरवारुरुत्सन्त । तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन् । पशवो वा अग्निः पवमानः । यदेव पशुष्वासीत् । तत्तेनावा-रुन्धत । तेऽग्नये पावकाय । आपो वा अग्निः पावकः । यदेवाप्स्वासीत् । तत्तेनावारुन्धत ४६

तेऽग्नये शुचये । असौ वा आदित्योऽग्निः शुचिः । यदेवादित्य आसीत् । तत्तेनावारुन्धत । ब्रह्मवादिनो वदन्ति । तनुवो वावैता अग्न्याधेयस्य । आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति । यत्तं निर्वपेत् । नैतानि । यथात्मा स्यात् ४७

नाङ्गानि । तादृगेव तत् । यदेतानि निर्वपेत् । न तम् । यथाङ्गानि स्युः । नात्मा । तादृगेव तत् । उभयानि सह निरुप्याणि । यज्ञस्य सात्मत्वाय । उभयं वा एतस्येन्द्रियं वीर्यमाप्यते ४८

योऽग्निमाधत्ते । ऐन्द्राग्नमेकादशकपालमनु निर्वपेत् । आदित्यं चरुम् । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी ।ताभ्यामेवास्मा इन्द्रियं वीर्यमवरुन्द्धे । आदित्यो भवति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । धेन्वै वा एतद्रेतः ४९

यदाज्यम् । अनडुहस्तण्डुलाः । मिथुनमेवावरुन्द्धे । घृते भवति । यज्ञस्यालूक्षान्तत्वाय । चत्वार आर्षेयाः । प्राश्नन्ति । दिशामेव ज्योतिषि जुहोति । पशवो वा एतानि हवींषि । एष रुद्रः । यदग्निः ५०

यत्सद्य एतानि हवींषि निर्वपेत् । रुद्राय पशूनपि दध्यात् । अपशुर्यजमानः स्यात् । यन्नानुनिर्वपेत् । अनवरुद्धा अस्य पशवः स्युः । द्वादशसु रात्रीष्वनु निर्वपेत् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरेणैवास्मै रुद्रँ शमयित्वा । पशूनवरुन्द्धे । यदेकमेकमेतानि हवींषि निर्वपेत् ५१

यथा त्रीण्यावपनानि पूरयेत् । तादृक्तत् । न प्रजननमुच्छिँषेत् । एकं निरुप्य । उत्तरे समस्येत् । तृतीयमेवास्मै लोकमुच्छिँषति प्रजननाय । तं प्रजया पशुभिरनु प्रजायते । अथो यज्ञस्यैवैषाभिक्रान्तिः । रथचक्रं प्रवर्तयति । मनुष्यरथेनैव देवरथं प्रत्यवरोहति ५२

ब्रह्मवादिनो वदन्ति । होतव्यमग्निहोत्रा३ं न होतव्या३मिति । यद्यजुषा जुहुयात् । अयथापूर्वमाहुती जुहुयात् । यन्न जुहुयात् । अग्निः पराभवेत् । तूष्णीमेव होतव्यम् । यथापूर्वमाहुती जुहोति । नाग्निः पराभवति । अग्नीधे ददाति ५३

अग्निमुखानेवर्तून्प्रीणाति । उपबर्हणं ददाति । रूपाणामवरुद्ध्यै । अश्वं ब्रह्मणे । इन्द्रियमेवावरुन्धे । धेनुँ होत्रे । आशिष एवावरुन्द्धे । अनड्वा-

हमध्वर्यवे । वह्निर्वा अनड्वान् । वह्निरध्वर्युः ५४

वह्निनैव वह्नि यज्ञस्यावरुन्द्धे । मिथुनौ गावौ ददाति । मिथुनस्यावरुद्ध्यै । वासो ददाति । सर्वदेवत्यं वै वासः । सर्वा एव देवताः प्रीणाति । आ द्वादशभ्यो ददाति । द्वादश मासाः संवत्सरः । संअत्सर एव प्रतितिष्ठति । काममूर्ध्वं देयम् । अपरिमितस्यावरुद्ध्यै ५५

घर्मः शिरस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच । प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाहि । ऊर्जं नो धेहि द्विपदे चतुष्पदे ५६

अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वादधे । अग्निनाग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे । ये ते अग्ने शिवे तनुवौ । विराट्च स्वराट्च । ते मा विशतां ते मा जिन्वताम् ५७

ये ते अग्ने शिवे तनुवौ । सम्राट्चाभिभूश्च । ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ । विभूश्च परिभूश्च । ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ । प्रभ्वी च प्रभूतिश्च । ते मा विशतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवः । ताभिस्त्वादधे । यास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ ५८

इमे वा एते लोका अग्नयः । ते यदव्यावृत्ता आधीयेरन् । शोचयेयुर्यजमानम् । घर्मः शिर इति गार्हपत्यमादधाति । वातः प्राण इत्यन्वाहार्यपचनम् । अर्कश्चक्षुरित्याहवनीयम् । तेनैवैनान्व्यावर्तयति । तथा न शोचयन्ति यजमानम् । रथन्तरमभिगायते गार्हपत्य आधीयमाने । राथन्तरो वा अयं लोकः ५९

अस्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते । वामदेव्यमभिगायत उद्धियमाणे ।

अन्तरिक्षं वै वामदेव्यम् । अन्तरिक्ष एवैनं प्रतिष्ठितमाधत्ते । अथो शान्तिर्वै वामदेव्यम् । शान्तमेवैनं पशव्यमुद्धरते । बृहदभिगायत आहवनीय आधीयमाने । बार्हतो वा असौ लोकः । अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते । प्रजापतिरग्निमसृजत ६०

सोऽश्वो वारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । श्यैतेन श्येती अकुरुत । तच्छ्यैतस्य श्यैतत्वम् । यद्वारवन्तीयमभिगायते । वारयित्वैवैनं प्रतिष्ठितमाधत्ते । श्यैतेन श्येती कुरुते । घर्मः शिर इति गार्हपत्यमादधाति । सशीर्षाणमेवैनमाधत्ते ६१

उपैनमुत्तरो यज्ञो नमति । रुद्रो वा एषः । यदग्निः । स आधीयमान ईश्वरो यजमानस्य पशून्हिँसितोः । संप्रियः पशुभिर्भुवदित्याह । पशुभिरेवैनँ संप्रियं करोति । पशूनामहिँसायै । छर्दिस्तोकाय तनयाय यच्छेत्याह । आशिष-मेवैतामाशास्ते । वातः प्राण इत्यन्वाहार्यपचनम् ६२

सप्राणमेवैनमाधत्ते । स्वदितं तोकाय तनयाय पितुं पचेत्याह । अन्नमेवास्मै स्वदयति । प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह । विभक्तिरेवैनयोः सा । अथो नानावीर्यावेवैनौ कुरुते । ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याह । आशिषमेवैतामाशास्ते । अर्कश्चक्षुरित्याहवनीयम् । अर्को वै देवानामन्नम् ६३

अन्नमेवावरुन्धे । तेन मे दीदिहीत्याह । समिन्ध एवैनम् । आनशे व्यानश इति त्रिरुदिङ्गयति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । तत्तथा न कार्यम् । वीङ्गितमप्रतिष्ठितमादधीत । उद्धृत्यैवाधायाभिमन्त्रियः । अवीङ्गितमेवैनं प्रतिष्ठितमाधत्ते । विराट्च स्वराट्च यास्ते अग्ने शिवा-स्तनुवस्ताभिस्त्वादध इत्याह । एता वा अग्नेः शिवास्तनुवः । ताभिरेवैनँ समर्धयति । यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात् । ताभिरेवैनं पराभावयति ६४

शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति

। अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेष-णमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् । सा द्वितीयमपचत् ६५

तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त तस्यै मित्रश्च वरुणश्चाजायेताम् । सा तृतीयमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेरोऽधत्त । तस्या अँशश्च भगश्चाजायेताम् । सा चतुर्थमपचत् ६६

तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाँश्चाजायेताम् । ब्रह्मौदनं पचति । रेत एव तद्दधाति । प्राश्नन्ति ब्राह्मणा ओदनम् । यदाज्यमुच्छिष्यते । तेन समिधोऽभ्यज्यादधाति । उच्छेषणाद्वा अदिती रेतोऽधत्त ६७

उच्छेषणादेव तद्रेतो धत्ते । अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्यादधाति । अस्थ्येव तद्रेतसि दधाति । तिस्र आदधाति मिथुनत्वाय । इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन संमिताः ६८

इयतीर्भवन्ति । यज्ञपरुषा संमिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमिताः । आर्द्रा भवन्ति । आर्द्रमिव हि रेतः सिच्यते । चित्रियस्याश्वत्थस्यादधाति । चित्रमेव भवति । घृतवतीभिरादधाति ६९

एतद्वा अग्नेः प्रियं धाम । यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति । अथो तेजसा । गायत्रीभिर्ब्राह्मणस्यादध्यात् । गायत्रच्छन्दा वै ब्राह्मणः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । त्रिष्टुग्भी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय ७०

जगतीभिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । तँ संवत्सरं गोपायेत् । संवत्सरँ हि रेतो हितं वर्धते । यद्येनँ संवत्सरे नोपनमेत् । समिधः पुनरादध्यात् । रेत एव तद्धितं वर्धमानमेति । न

माँसमश्नीयात् । न स्त्रियमुपेयात् ७१

यन्माँसमश्नीयात् । यत्स्त्रियमुपेयात् । निर्वीर्यः स्यात् । नैनमग्निरुपनमेत् । श्व आधास्यमानो ब्रह्मौदनं पचति । आदित्या वा इत उत्तमाः सुवर्गं लोकमायन्न् । ते वा इतो यन्तं प्रतिनुदन्ते । एते खलु वावादित्याः । यद्ब्राह्मणाः । तैरेव संत्वं गच्छति ७२

नैनं प्रतिनुदन्ते । ब्रह्मवादिनो वदन्ति । क्वा सः । अग्निः कार्यः । योऽस्मै प्रजां पशून्प्रजनयतीति । शल्कैस्ताँ रात्रिमग्निमिन्धीत । तस्मिन्नुपव्युषमरणी निष्टपेत् । यथर्षभाय वाशिता न्याविच्छायति ।तदृगेव तत् । अपोदूह्य भस्माग्निं मन्थति ७३

सैव साग्नेः संततिः । तं मथित्वा प्राञ्चमुद्धरति । संवत्सरमेव तद्रेतो हितं प्रजनयति । अनाहितस्तस्याग्निरित्याहुः । यः समिधोऽनाधायाग्निमाधत्त इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याधत्ते । यदि संवत्सरे नादध्यात् । द्वादश्यां पुरस्तादादध्यात्संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरमेवास्याहिता भवन्ति । यदि द्वादश्यां नादध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति ७४

प्रजापतिः प्रजा असृजत । स रिरिचानोऽमन्यत । स तपोऽतप्यत । स आत्मन्वीर्यमपश्यत् । तदवर्धत । तदस्मात्सहसोर्ध्वमसृज्यत । सा विराडभवत् । तां देवासुरा व्यगृह्णत । सोऽब्रवीत्प्रजापतिः । मम वा एषा ७५

दोहा एव युष्माकमिति । सा ततः प्राच्युदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अथर्व पितुं मे गोपायेति । सा द्वितीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । नर्य प्रजां मे गोपायेति । सा तृतीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । शँस्य पशून्मे गोपायेति ७६

सा चतुर्थमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । सप्रथ सभां मे गोपायेति

। सा पञ्चममुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अहे बुध्निय मन्त्रं मे गोपायेति । अग्नीन्वाव सा तान्व्यक्रमत । तान्प्रजापतिः पर्यगृह्णात् । अथो पङ्क्तिमेव । पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा ७७

तामात्मनोऽधि निर्मिमीते । यदग्निराधीयते । तस्मादेतावन्तोऽग्नय आधीयन्ते । पाङ्क्तं वा इदँ सर्वम् । पाङ्क्तेनैव पाङ्क्तँ स्पृणोति । अथर्व पितुं मे गोपायेत्याह । अन्नमेवैतेन स्पृणोति । नर्य प्रजां मे गोपायेत्याह । प्रजामेवतेन स्पृणोति । शँस्य पशून्मे गोपायेत्याह ७८

पशूनेवैतेन स्पृणोति । सप्रथ सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रियँ स्पृणोति । अहे बुध्निय मन्त्रं मे गोपायेत्याह । मन्त्रमेवैतेन श्रियँ स्पृणोति । यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति । तेन सोऽस्याभीष्टः प्रीतः । यद्गार्हपत्य आज्यमधिश्रयन्ति संपत्नीर्याजयन्ति । तेन सोऽस्याभीष्टः प्रीतः । यदाहवनीये जुह्वति ७९

तेन सोऽस्याभीष्टः प्रीतः । यत्सभायां विजयन्ते । तेन सोऽस्याभीष्टः प्रीतः । यदावसथेऽन्नँ हरन्ति । तेन सोऽस्याभीष्टः प्रीतः । तथास्य सर्वे प्रीता अभीष्टा आधीयन्ते । प्रवसथमेष्यन्नेवमुपतिष्ठेतैकमेकम् । यथा ब्राह्मणाय गृहे वासिने परिदाय गृहानेति । तादृगेव तत् । पुनरागत्योपतिष्ठते । साभागेयमेवैषां तत् । सा तत ऊर्ध्वारोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वम् । रोहिण्यामग्निमादधीत । स्व एवैनं योनौ प्रतिष्ठितमाधत्ते । ऋध्नोत्येनेन ८० १

उद्धन्यमानमस्या अमेध्यम् । अप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः । शं नो माता पृथिवी तोकसाता । शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः । वैश्वानरस्य रूपम् । पृथिव्यां परिस्रसा । स्योनमाविशन्तु नः १

यदिदं दिवो यददः पृथिव्याः । संजज्ञाने रोदसी संबभूवतुः । ऊषान्कृष्ण-मवतु कृष्णमूषाः । इहोभयोर्यज्ञियमागमिष्ठाः । ऊतीः कुर्वाणो यत्पृथिवी-

मचरः । गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः । शातं जीवेम शरदः सवीराः । ऊर्जं पृथिव्या रसमाभरन्तः । शतं जीवेम शरदः पुरूचीः २

वम्रीभिरनुवित्तं गुहासु । श्रोत्रं त उर्व्यबधिरा भवामः । प्रजापतिसृष्टानां प्रजानाम् । क्षुधोपहत्यै सुवितं नो अस्तु । उपप्रभिन्नमिषमूर्जं प्रजाभ्यः । सूदं गृहेभ्यो रसमाभरामि । यस्य रूपं बिभ्रदिमामविन्दत् । गुहा प्रविष्टाँ सरिरस्य मध्ये । तस्येदं विहतमाभरन्तः । अच्छंबट्कारमस्यां विधेम ३

यत्पर्यपश्यत्सरिरस्य मध्ये । उर्वीमपश्यज्जगतः प्रतिष्ठाम् । तत्पुष्करस्यायतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनँ हरामि । याभिरदृँहज्जगतः प्रतिष्ठाम् । उर्वीमिमां विश्वजनस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वाः । अग्ने रेतश्चन्द्रँ हिरण्यम् । अद्भ्यः संभूतममृतं प्रजासु । तत्संभरन्नुत्तरतो निधाय ४

अतिप्रयच्छन्दुरितिं तरेयम् । अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः । संवत्सरं देवेभ्यो निलाय । तत्ते न्यक्तमिह संभरन्तः । शतं जीवेम शरदः सवीराः । ऊर्जः पृथिव्या अध्युत्थितोऽसि । वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं मदन्तः । रायस्पोषेण समिषा मदेम । गायत्रिया ह्रियमाणस्य यत्ते ५

पर्णमपतत्तृतीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातः । ततो हरामि सोमपीथस्यावरुद्ध्यै । देवानां ब्रह्मवादं वदतां यत् । उपाशृणोः सुश्रवा वै श्रुतोऽसि । ततो मामाविशतु ब्रह्मवर्चसम् । तत्संभरँस्तदवरुन्धीय साक्षात् । यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय ६

शमीँ शान्त्यै हराम्यहम् । यत्ते सृष्टस्य यतः । विकङ्कतं भा आर्छज्जातवेदः । तया भासा संमितः । उरुं नो लोकमनु प्रभाहि । यत्ते तान्तस्य हृदयमाच्छिन्दज्जातवेदः । मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेः सं भरामि । सात्मा अग्ने सहृदयो भवेह । चित्रियादश्वत्थात्संभृता बृहत्यः ७

शरीरमभि सँस्कृताः स्थ । प्रजापतिना यज्ञमुखेन संमिताः । तिस्रस्त्रि-वृद्भिर्मिथुनाः प्रजात्यै । अश्वत्थाद्धव्यवाहाद्धि जाताम् । अग्नेस्तनूं यज्ञियाँ संभरामि । शान्तयोनिँ शमीगर्भम् । अग्नये प्रजनयितवे । यो अश्वत्थः शमीगर्भः । आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा ८

यज्ञियैः केतुभिः सह । यं त्वा समभरञ्जातवेदः । यथाशरीरं भूतेषु न्यक्तम् । स संभृतः सीद शिवः प्रजाभ्यः । उरुं नो लोकमनुनेषि विद्वान् । प्रवेधसे कवये मेध्याय । वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्तु । अव देवान्यजे हेड्यान् । समिधाग्निं दुवस्यत ९

घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन । उप त्वाग्ने हविष्मतीः । घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम । तं त्वा समिद्भिरङ्गिरः । घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य । समिध्यमानः प्रथमो नु धर्मः । सम-क्तुभिरज्यते विश्ववारः १०

शोचिष्केशो घृतनिर्णिक्पावकः । सुयज्ञो अग्निर्यजथाय देवान् । घृतयोनिर-ग्निः । घृतैः समिद्धो घृतमस्यान्नम् । घृतप्रुषस्त्वा सरितो वहन्ति । घृतं पिबन्सुयजा यक्षि देवान् । आयुर्दा अग्ने हविषो जुषाणः । घृतप्रतीको घृत-योनिरेधि । घृतं पीत्वा मधु चारु गव्यम् । पितेव पुत्रमभिरक्षतादिमम् ११

त्वामग्ने समिधानं यविष्ठ । देवा दूतं चक्रिरे हव्यवाहम् । उरुज्रयसं घृतयोनिमाहुतम् । त्वेषं चक्षुर्दधिरे चोदयन्वति । त्वामग्ने प्रदिव आहुतं घृतेन । सुम्नायवः सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षितः । उरु ज्रयाँसि पार्थिवा वितिष्ठसे । घृतप्रतीकं च ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जते १२

इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णामुदु नो यँसते धियम् । प्रजा अग्ने संवासय । आशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि । यान्यासन्सवितुः सवे । मही विश्पत्नी सदने ऋतस्य । अर्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसम् । अध्वराणां जनयथः पुरोगाम् १३

आरोहतं दशतँ शक्वरीर्मम । ऋतेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तराँ समाम् । दर्शमहं पूर्णमासं यज्ञं यथा यजै । ऋत्वियवती स्थो अग्निरेतसौ । गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथः । वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे । ते मा प्रजाते प्रजनयिष्यथः १४

प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके । अनृतात्सत्यमुपैमि । मानुषा-द्दैव्यमुपैमि । दैवीं वाचं यच्छामि । शल्कैरग्निमिन्धानः । उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋद्ध्वा । अति मृत्युं तराम्यहम् । जातवेदो भुवनस्य रेतः । इह सिञ्च तपसो यज्जनिष्यते १५

अग्निमश्वत्थादधि हव्यवाहम् । शमीगर्भाज्जनयन्यो मयोभूः । अयं ते योनि-र्ऋत्वियः । यतो जातो अरोचथाः । तं जानन्नग्न आरोह । अथा नो वर्धया रयिम् । अपेत वीत वि च सर्पतातः । येऽत्र स्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्याः । अक्रन्निमं पितरो लोकमस्मै १६

अग्नेर्भस्मास्यग्नेः पुरीषमसि । संज्ञानमसि कामधरणम् । मयि ते कामधरणं भूयात् । सं वः सृजामि हृदयानि । सँसृष्टं मनो अस्तु वः । सँसृष्टः प्राणो अस्तु वः । सं या वः प्रियास्तनुवः । सं प्रिया हृदयानि वः । आत्मा वो अस्तु सं प्रियः । सं प्रियास्तनुवो मम १७

कल्पेतां द्यावापृथिवी ।कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथक् । मम ज्यैष्ठ्याय सव्रताः । येऽग्नयः समनसः । अन्तरा द्यावापृथिवी । वासन्तिकावृतू अभि कल्पमानाः । इन्द्रमिव देवा अभि संविशन्तु । दिवस्त्वा वीर्येण । पृथिव्यै महिम्ना १८

अन्तरिक्षस्य पोषेण । सर्वपशुमादधे । अजीजनन्नमृतं मर्त्यासः । अस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः । पुमाँसं जातमभि सँरभन्ताम् । प्रजापतेस्त्वा प्राणेनाभि प्राणिमि । पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय । शतँ शरद्भ्य आयुषे वर्चसे १९

जीवात्वै पुण्याय । अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः । प्राणे त्वामृतमादधामि । अन्नादमन्नाद्याय । गोप्तारं गुप्त्यै । सुगार्हपत्यो विद-हन्नरातीः । उषसः श्रेयसीश्श्रेयसीर्दधत् २०

अग्ने सपत्नाँ अप बाधमानः । रायस्पोषमिषमूर्जमस्मासु धेहि । इमा उ मा-मुप तिष्ठन्तु रायः । आभिः प्रजाभिरिह सं वसेय । इहो इडा तिष्ठतु विश्वरूपी । मध्ये वसोर्दीदिहि जातवेदः । ओजसे बलाय त्वोद्यच्छे । वृषणे शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः । यस्ते देवेषु महिमा सुवर्गः २१

यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे । तया नो अग्ने जु-षमाण एहि । दिवः पृथिव्याः पर्यन्तरिक्षात् । वातात्पशुभ्यो अध्योषधीभ्यः । यत्रयत्र जातवेदः संबभूथ । ततो नो अग्ने जुषमाण एहि । प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो वि भाहि २२

ऊर्जं नो धेहि द्विपदे चतुष्पदे । अन्वग्निरुषसामग्रमख्यत् । अन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीन् । अनु द्यावापृथिवी आततान । विक्रमस्व महाँ असि । वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि । यदिदं दिवो यददः पृथिव्याः । संविदाने रोदसी संबभूवतुः २३

तयोः पृष्ठे सीदतु जातवेदाः । शंभूः प्रजाभ्यस्तनुवे स्योनः । प्राणं त्वामृत आदधामि । अन्नादमन्नाद्याय । गोप्तारं गुप्त्यै । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वादधे । अग्निनाग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे २४

नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् । अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे । अदब्धायोऽशीततनो । अविषं नः पितुं कृणु । शँस्य पशून्मे गोपाय । द्विपादो ये चतुष्पदः २५

अष्टाशफाश्च य इहाग्ने । ये चैकशफा आशुगाः । सप्रथ सभां मे गोपाय । ये च सभ्याः सभासदः । तानिन्द्रियावतः कुरु । सर्वमायुरुपासताम् । अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूँषि । सा हि श्रीरमृता सताम् २६

चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय । मह्यं धुक्ष्व यजमानाय कामान् । इहैव सन्तत्र सतो वो अग्नयः । प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीत् । ज्योतिषा वो वैश्वानरेणोपतिष्ठे । पञ्चधाग्नीन्व्यक्रामत् । विराट्सृष्टा प्रजापतेः । ऊर्ध्वारोह द्रोहिणी ।योनिरग्नेः प्रतिष्ठितिः २७

नवैतान्यहानि भवन्ति । नव वै सुवर्गा लोकाः । यदेतान्यहान्युपयन्ति । नवस्वेव तत्सुवर्गेषु लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति । अग्निष्टोमाः परःसामानः कार्या इत्याहुः । अग्निष्टोमसंमितः सुवर्गो लोक इति । द्वादशाग्निष्टोमस्य स्तोत्राणि । द्वादश मासाः संवत्सरः । तत्तन्न सूर्द्यम् । उक्थ्या एव सप्तदशाः परःसामानः कार्याः २८

पशवो वा उक्थानि । पशूनामवरुध्यै । विश्वजिदभिजितावग्निष्टोमौ । उक्थ्याः सप्तदशाः परःसामानः । ते सँस्तुता विराजमभि संपद्यन्ते । द्वे चर्चावति रिच्येते । एकया गौरतिरिक्तः । एकयायुरूनः । सुवर्गो वै लोको ज्योतिः । ऊर्ग्विराट् २९

सुवर्गमेव तेन लोकमभि जयन्ति । यत्परँ राथन्तरम् । तत्प्रथमेऽहन्कार्यम् । बृहद्द्वितीये । वैरूपं तृतीये । वैराजं चतुर्थे । शाक्वरं पञ्चमे । रैवतँ षष्ठे । तदु पृष्ठेभ्यो नयन्ति । संतनय एते ग्रहा गृह्यन्ते ३०

अतिग्राह्याः परःसामसु । इमानेवैतैर्लोकान्सं तन्वन्ति । मिथुना एते ग्रहा गृह्यन्ते । अतिग्राह्याः परःसामसु । मिथुनमेव तैर्यजमाना अवरुन्धते । बृहत्पृष्ठं भवति । बृहद्वै सुवर्गो लोकः । बृहतैव सुवर्गं लोकं यन्ति । त्रयस्त्रिँशि नाम साम । मध्यन्दिने पवमाने भवति ३१

त्रयस्त्रिँशद्वै देवताः । देवता एवावरुन्धते । ये वा इतः पराञ्चँ संवत्सरमुपयन्ति । न हैनं ते स्वस्ति समश्नुवते । अथ येऽमुतोऽर्वाञ्चमुप यन्ति । ते हैनँ स्वस्ति समश्नुवते । एतद्वा अमुतोऽर्वाञ्चमुप यन्ति । यदेवम् । यो ह खलु वाव प्रजापतिः । स उ वेवेन्द्रः । तदु देवेभ्यो नयन्ति ३२

संततिर्वा एते ग्रहाः । यत्परःसामानः । विषूवान्दिवाकीर्त्यम् । यथा शालायै पक्षसी ।एवँ संवत्सरस्य पक्षसी ।यदेते न गृहेरन् । विषूची संवत्सरस्य पक्षसी व्यवस्रँसेयाताम् । आर्तिमार्छेयुः । यदेते गृह्यन्ते । यथा शालायै पक्षसी मध्यमं वँशमभि समायच्छति ३३

एवँ संवत्सरस्य पक्षसी दिवाकीर्त्यमभि संतन्वन्ति । नार्तिमार्छन्ति । एक-विँशमहर्भवति । शुक्राग्रा ग्रहा गृह्यन्ते । प्रत्युत्तब्ध्यै सयत्वाय । सौर्य एतदहः पशुरालभ्यते । सौर्योऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । सप्तैतदहरतिग्राह्या गृह्यन्ते ३४

सप्त वै शीर्षण्याः प्राणाः । असावादित्यः शिरः प्रजानाम् । शीर्षन्नेव प्रजानां प्राणान्दधाति । तस्मात्सप्त शीर्षन्प्राणाः । इन्द्रो वृत्रँ हत्वा । असुरान्पराभाव्य । स इमाँल्लोकानभ्यजयत् । तस्यासौ लोकोऽनभिजित आसीत् । तं वि-श्वकर्मा भूत्वाभ्यजयत् । यद्वैश्वकर्मणो गृह्यते ३५

सुवर्गस्य लोकस्याभिजित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये वैश्वकर्मणं गृह्णते । आदित्यः श्वो गृह्यते । इयं वा अदितिः । अस्यामेव प्रति तिष्ठन्ति । अन्योन्यो गृह्येते । विश्वान्येवान्येन कर्माणि कुर्वाणा यन्ति । अस्यामन्येन प्रति तिष्ठन्ति । तावापरार्धात्संवत्सरस्यान्योन्यो गृह्येते । तावुभौ सह महाव्रते गृह्येते । यज्ञस्यैवान्तं गत्वा । उभयोर्लोकयोः प्रतितिष्ठन्ति । अर्क्यमुक्थं भवति । अन्नाद्यस्यावरुद्ध्यै ३६

एकविँश एष भवति । एतेन वै देवा एकविँशेन । आदित्यमित उत्तमँ सुवर्गं लोकमारोहयन्न् । स वा एष इत एकविँशः । तस्य दशावस्तादहानि । दश परस्तात् । स वा एष विराज्युभयतः प्रतिष्ठितः । विराजि हि वा

एष उभयतः प्रतिष्ठितः । तस्मादन्तरेमौ लोकौ यन् । सर्वेषु सुवर्गेषु लोकेष्वभितपन्नेति ३७

देवा वा आदित्यस्य सुवर्गस्य लोकस्य । पराचोऽतिपादादबिभयुः । तं छन्दोभिरदृँहन्धृत्यै । देवा वा आदित्यस्य सुवर्गस्य लोकस्य । अवा-चोऽवपादादबिभयुः । तं पञ्चभी रश्मिभिरुदवयन्न् । तस्मादेकविँशेऽहन्पञ्च दिवाकीर्त्यानि क्रियन्ते । रश्मयो वै दिवाकीर्त्यानि । ये गायत्रे । ते गायत्रीषूत्तरयोः पवमानयोः ३८

महादिवाकीर्त्यँ होतुः पृष्ठम् । विकर्णं ब्रह्मसाम । भासोऽग्निष्टोमः । अथै-तानि पराणि । परैर्वै देवा आदित्यँ सुवर्गं लोकमपारयन्न् । यदपारयन्न् । तत्पराणां परत्वम् । पारयन्त्येनं पराणि । य एवं वेद । अथैतानि स्पराणि । स्परैर्वै देवा आदित्यँ सुवर्गं लोकमस्पारयन्न् । यदस्पारयन्न् । तत्स्पराणाँ स्परत्वम् । स्पारयन्त्येनँ स्पराणि । य एवं वेद ३९

अप्रतिष्ठां वा एते गच्छन्ति । येषाँ संवत्सरेऽनाप्तेऽथ । एकादशिन्याप्यते । वैष्णवं वामनमालभन्ते । यज्ञो वै विष्णुः । यज्ञमेवालभन्ते प्रतिष्ठित्यै । ऐन्द्राग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी ।ते एवालभन्ते ४०

वैश्वदेवमालभन्ते । देवता एवावरुन्धते । द्यावापृथिव्यां धेनुमालभन्ते । द्यावापृथिव्योरेव प्रति तिष्ठन्ति । वायव्यं वत्समालभन्ते । वायुरेवैभ्यो यथायतनाद्देवता अवरुन्धे । आदित्यामविं वशामालभन्ते । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति । मैत्रावरुणीमालभन्ते ४१

मित्रेणैव यज्ञस्य स्विष्टँ शमयन्ति । वरुणेन दुरिष्टम् । प्राजापत्यं तूपरं महाव्रत आलभन्ते । प्राजापत्योऽतिग्राह्यो गृह्यते । अहरेव रूपेण समर्धयन्ति । अथो अह्न एवैष बलिर्ह्रियते । आग्नेयमालभन्ते प्रति प्रज्ञात्यै । अजपेत्वान्वा एते पूर्वैर्मासैरवरुन्धते । यदेते गव्याः पशव आलभ्यन्ते । उभयेषां पशूना-मवरुध्यै ४२

यदतिरिक्तामेकादशिनीमालभेरन् । अप्रियं भ्रातृव्यमभ्यतिरिच्येत । यद्द्वौद्वौ पशू समस्येयुः । कनीय आयुः कुर्वीरन् । यदेते ब्राह्मणवन्तः पशव आलभ्यन्ते । नाप्रियं भ्रातृव्यमभ्यतिरिच्यते । न कनीय आयुः कुर्वते ४३

प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत् । तं देवा भूतानाँ रसं तेजः संभृत्य । तेनैनमभिषज्यन् । महानववर्तीति । तन्महाव्रतस्य महाव्रतत्वम् । महद्व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम् । महतो व्रतमिति । तन्महाव्रतस्य महाव्रतत्वम् । पञ्चविँशः स्तोमो भवति ४४

चतुर्विँशत्यर्धमासः संवत्सरः । यद्वा एतस्मिन्संवत्सरेऽधि प्राजायत । तदन्नं पञ्चविँशमभवत् । मध्यतः क्रियते । मध्यतो ह्यन्नमशितँ धिनोति । अथो मध्यत एव प्रजानामूर्ग्धीयते । अथ यद्वा इदमन्ततः क्रियते । तस्मादुदन्ते प्रजाः समेधन्ते । अन्ततः क्रियते प्रजननायैव । त्रिवृच्छिरो भवति ४५

त्रेधा विहितँ हि शिरः । लोम छवीरस्थि । पराचा स्तुवन्ति । तस्मात्तत्सदृगेव । न मेद्यतोऽनु मेद्यति । न कृश्यतोऽनु कृश्यति । पञ्चदशोऽन्यः पक्षो भवति । सप्तदशोऽन्यः । तस्माद्वयाँस्यन्यतरमर्धमभि पर्यावर्तन्ते । अन्यतरतो हि तद्गरीयः क्रियते ४६

पञ्चविँश आत्मा भवति । तस्मान्मध्यतः पशवो वरिष्ठाः । एकविँशं पुच्छम् । द्विपदासु स्तुवन्ति प्रतिष्ठित्यै । सर्वेण सह स्तुवन्ति । सर्वेण ह्यात्मनात्मन्वी ।सहोत्पतन्ति । एकैकामुच्छिँषन्ति । आत्मन्न्ह्यङ्गानि बद्धानि । न वा एतेन सर्वः पुरुषः ४७

यदितेतो लोमानि दतो नखान् । परिमादः क्रियन्ते । तान्येव तेन प्रत्युप्यन्ते । औदुम्बरस्तल्पो भवति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्यावरुद्ध्यै । यस्य तल्पसद्यमनभिजितँ स्यात् । स देवानाँ साम्यक्षे । तल्पसद्यमभिजयानीति तल्पमारुह्योद्गायेत् । तल्पसद्यमेवाभिजयति ४८

यस्य तल्पसद्यमभिजितँ स्यात् । स देवानाँ साम्यक्षे । तल्पसद्यं मा

पराजेषीति तल्पमारुह्योद्गायेत् । न तल्पसद्यं पराजयते । प्लेङ्खे शँसति । महो वै प्लेङ्खः । महस एवान्नाद्यस्यावरुद्ध्यै । देवासुराः संयत्ता आसन् । त आदित्ये व्यायच्छन्त । तं देवाः समजयन् ४९

ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते । दैव्यो वै वर्णो ब्राह्मणः । असुर्यः शूद्रः । इमेऽरात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात् । इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः । यदेवैषाँ सुकृतं या राद्धिः । तदन्यतरोऽभि-श्रीणाति । यदेवैषां दुष्कृतं या राद्धिः । तदन्यतरोऽपहन्ति । ब्राह्मणः सं-जयति । अमुमेवादित्यं भ्रातृव्यस्य संविन्दन्ते ५० २

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नीषोमयोस्तेज-स्विनीस्तनूस्संन्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तेनाग्नीषोमावपाक्रामताम् । ते देवा विजित्य । अग्नीषोमावन्वैच्छन् । तेऽग्निमन्वविन्दन्नृतुषूत्सन्नम् । तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुन्धत १

ते सोममन्वविन्दन् । तमघ्नन् । तस्य यथाभिज्ञायं तनूर्व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवं विदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः । नानाग्नेयं पुनराधेये कुर्यात् । यदनाग्नेयं पुनराधेये कुर्यात् । व्यृद्धमेव तत् २

अनाग्नेयं वा एतत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजति । उभावाग्नेयावाज्यभागौ स्याताम् । अनाज्यभागौ भवत इत्याहुः । यदुभावाग्नेयावन्वञ्चाविति । अग्नये पवमानायोत्तरः स्यात् । यत्पवमानाय । तेनाज्यभागः । तेन सौम्यः । बुधन्वत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति ३

यथा सुप्तं बोधयति । तादृगेव तत् । अग्निन्यक्ताः पत्नीसंयाजानामृचः स्युः । तेनाग्नेयँ सर्वं भवति । एकधा तेजस्विनीं देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । नेति ब्रूयात् । प्रजननं वा अग्निः । प्रजननमेवोपैतीति । कृतयजुः संभृतसंभार इत्याहुः ४

न संभृत्याः संभाराः । न यजुः कार्यमिति । अथो खलु । संभृत्या एव संभाराः । कार्यं यजुः । पुनराधेयस्य समृद्ध्यै । तेनोपाँशु प्रचरति । एष्य इव वा एषः । यत्पुनराधेयः । यथोपाँशु नष्टमिच्छति ५

तादृगेव तत् । उच्चैः स्विष्टकृतमुत्सृजति । यथा नष्टं वित्त्वा प्राहायमिति । तादृगेव तत् । एकधा तेजस्विनीं देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । तत्तथा नोपैति । प्रयाजानूयाजेष्वेव विभक्तीः कुर्यात् । यथापूर्वमाज्यभागौ स्याताम् । एवं पत्नीसंयाजाः ६

तद्वैश्वानरवत्प्रजननवत्तरमुपैतीति । तदाहुः । व्यृद्धं वा एतत् । अनाग्नेयं वा एतत्क्रियत इति । नेति ब्रूयात् । अग्निं प्रथमं विभक्तीनां यजति । अग्निमुत्तमं पत्नीसंयाजानाम् । तेनाग्नेयम् । तेन समृद्धं क्रियत इति ७

देवा वै यथादर्शं यज्ञानाहरन्त । योऽग्निष्टोमम् । य उक्थ्यम् । योऽतिरात्रम् । ते सहैव सर्वे वाजपेयमपश्यन् । ते । अन्योन्यस्मै नातिष्ठन्त । अहम नेन यजा इति । तेऽब्रुवन् । आजिमस्य धावामेति ८

तस्मिन्नाजिमधावन् । तं बृहस्पतिरुदजयत् । तेनायजत । स स्वाराज्यमगच्छत् । तमिन्द्रोऽब्रवीत् । मामनेन याजयेति । तेनेन्द्रमयाजयत् । सोऽग्रं देवतानां पर्यैत् । अगच्छत्स्वाराज्यम् । अतिष्ठन्तास्मै ज्यैष्ठ्याय ९

य एवं विद्वान्वाजपेयेन यजते । गच्छति स्वाराज्यम् । अग्रँ समानानां पर्येति । तिष्ठन्तेऽस्मै ज्यैष्ठ्याय । स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः । तं वा एतं वाजपेय इत्याहुः । वाजाप्यो वा एषः । वाजँ ह्येतेन देवा ऐप्सन्न् । सोमो वै वाजपेयः । यो वै सोमं वाजपेयं वेद १०

वाज्येवैनं पीत्वा भवति । आस्य वाजी जायते । अन्नं वै वाजपेयः । य एवं वेद । अत्त्यन्नम् । आस्यान्नादो जायते । ब्रह्म वै वाजपेयः । य एवं वेद । अत्ति ब्रह्मणान्नम् । आस्य ब्रह्मा जायते ११

वाग्वै वाजस्य प्रसवः । य एवं वेद । करोति वाचा वीर्यम् । ऐनं वाचा गच्छति । अपिवतीं वाचं वदति । प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्मन्वाजपेयमधत्त । तं देवा अब्रुवन् । एष वाव यज्ञः । यद्वाजपेयः १२

अप्येव नोऽत्रास्त्विति । तेभ्य एता उज्जितीः प्रायच्छत् । ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय । देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन् । यद्ब्रह्मणः शमलमासीत् । सा गाथा नाराशँस्यभवत् । यदन्नस्य । सा सुरा १३

तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । शमलं प्रतिगृह्णीयात् । सर्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी ।या पृथिव्यां याग्नौ या रथन्तरे । यान्तरिक्षे या वायौ या वामदेव्ये । या दिवि यादित्ये या बृहति । याप्सु यौषधीषु या वनस्पतिषु । तस्माद्वाजपेय-याज्यार्त्विजीनः । सर्वा ह्यस्य वाचोऽवरुद्धाः १४

देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत । तदतिग्राह्यैरतिगृह्यावारुन्धत । तदतिग्राह्याणामतिग्राह्यत्वम् । यदतिग्राह्या गृह्यन्ते । यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे । तदेव तैरतिगृह्यावरुन्धे । पञ्च गृह्यन्ते । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तमाप्त्वावरुन्धे १५

सर्वैन्द्रा भवन्ति । एकधैव यजमान इन्द्रियं दधति । सप्तदश प्राजापत्या ग्रहा गृह्यन्ते । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति । सोमग्रहाँश्च सुराग्रहाँश्च गृह्णाति । एतद्वै देवानां परममन्नम् । यत्सोमः १६

एतन्मनुष्याणाम् । यत्सुरा । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे । सोमग्रहान्गृह्णाति । ब्रह्मणो वा एतत्तेजः । यत्सोमः । ब्रह्मण एव तेजसा तेजो यजमाने दधाति । सुराग्रहान्गृह्णाति । अन्नस्य वा एतच्छमलम् । यत्सुरा १७

अन्नस्यैव शमलेन शमलं यजमानादपहन्ति । सोमग्रहाँश्च सुराग्रहाँश्च गृह्णाति । पुमान्वै सोमः । स्त्री सुरा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । आत्मानमेव सोमग्रहैः स्पृणोति । जायाँ सुराग्रहैः । तस्माद्वाजपेययाज्यमुष्मिँल्लोके स्त्रियँ संभवति । वाजपेयाभिजितँ ह्यस्य १८

पूर्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः । पुरोक्षँ सोमग्रहान्सादयति । पश्चादक्षँ सुराग्रहान् । पापवस्यसस्य विधृत्यै । एष वै यजमानः । यत्सोमः । अन्नँ सुरा । सोमग्रहाँश्च सुराग्रहाँश्च व्यतिषजति । अन्नाद्येनैवैनं व्यतिषजति १९

संपृचः स्थ सं मा भद्रेण पृङ्क्तेत्याह । अन्नं वै भद्रम् । अन्नाद्येनैवैनँ सँसृजति । अन्नस्य वा एतच्छमलम् । यत्सुरा । पाप्मैव खलु वै शमलम् । पाप्मना वा एतमेतच्छमलेन व्यतिषजति । यत्सोमग्रहाँश्च सुराग्रहाँश्च व्यतिषजति । विपृचः स्थ वि मा पाप्मना पृङ्क्तेत्याह । पाप्मनैवैनँ शमलेन व्यावर्तयति २०

तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः । प्राङ्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्सुराग्रहैः । इममेव तैर्लोकमभिजयति । प्रति-ष्ठन्ति सोमग्रहैः । यावदेव सत्यम् । तेन सूयते । वाजसृद्भ्यः सुराग्रहान्हरन्ति । अनृतेनैव विशँ सँसृजति । हिरण्यपात्रं मधोः पूर्णं ददाति । मध्व्योऽसा-नीति । एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुस्तेजो दधाति २१

ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यः । न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्यातिरात्रम् २२

मारुत्या बृहतः स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान्पशुभिरेवावरुन्धे । आत्मानमेव स्पृणोत्यग्निष्टोमेन । प्राणापानावुक्थ्येन । वीर्यँ षोडशिनः स्तोत्रेण । वाचमतिरात्रेण । प्रजां बृहतः स्तोत्रेण । इममेव लोकमभि-

जयत्यग्निष्टोमेन । अन्तरिक्षमुक्थ्येन २३

सुवर्गं लोकँ षोडशिनः स्तोत्रेण । देवयानानेव पथ आरोहत्यतिरात्रेण । नाकँ रोहति बृहतः स्तोत्रेण । तेज एवात्मन्धत्त आग्नेयेन पशुना । ओजो बलमैन्द्राग्नेन । इन्द्रियमैन्द्रेण । वाचँ सारस्वत्या । उभावेव देवलोकं च मनुष्यलोकं चाभिजयति मारुत्या वशया । सप्तदश प्राजापत्यान्पशूनालभते । सप्तदशः प्रजापतिः २४

प्रजापतेराप्त्यै । श्यामा एकरूपा भवन्ति । एवमिव हि प्रजापतिः समृद्ध्यै । तान्पर्यग्निकृतानुत्सृजति । मरुतो यज्ञमजिघाँसन्प्रजापतेः । तेभ्य एतां मारुतीं वशामालभत । तयैवैनानशमयत् । मारुत्या प्रचर्य । एतान्संज्ञपयेत् । मरुत एव शमयित्वा २५

एतैः प्रचरति । यज्ञस्याघाताय । एकधा वपा जुहोति । एकदेवत्या हि । एते । अथो एकधैव यजमाने वीर्यं दधाति । नैवारेण सप्तदशशरावेणैतर्हि प्रचरति । एतत्पुरोडाशा ह्येते । अथो पशूनामेव च्छिद्रमपिदधाति । सारस्वत्योत्तमया प्रचरति । वाग्वै सरस्वती ।तस्मात्प्राणानां वागुत्तमा । अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति । प्रजापतिर्हि वाक् । अपन्नदती भवति । तस्मान्मनुष्याः सर्वां वाचं वदन्ति २६

सावित्रं जुहोति कर्मणः कर्मणः पुरस्तात् । कस्तद्वेदेत्याहुः । यद्वाजपेयस्य पूर्वं यदपरमिति । सवितृप्रसूत एव यथापूर्वं कर्माणि करोति । सवनेसवने जुहोति । आक्रमणमेव तत्सेतुं यजमानः कुरुते । सुवर्गस्य लोकस्य समष्ट्यै । वाचस्पतिर्वाचमद्य स्वदाति न इत्याह । वाग्वै देवानां पुरान्नमासीत् । वाचमेवास्मा अन्नँ स्वदयति २७

इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै । वाजस्य नु प्रसवे मातरं महीमित्याह । यच्चैवेयम् । यच्चास्यामधि । तदेवावरुन्धे । अथो तस्मिन्नेवोभयेऽभिषिच्यते । अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान्पल्पूलयति । अप्सु वा अश्वस्य तृतीयं प्रविष्टम् । तदनुवेनन्ववप्लवते । यदप्सु पल्पूलयति

२८

यदेवास्याप्सु प्रविष्टम् । तदेवावरुन्धे । बहु वा अश्वोऽमेध्यमुपगच्छति । यदप्सु पल्पूलयति । मेध्यानेवैनान्करोति । वायुर्वा त्वा मनुर्वा त्वेत्याह । एता वा एतं देवता अग्रे अश्वमयुञ्जन् । ताभिरेवैनान्युनक्ति । सवस्योज्जित्यै । यजुषा युनक्ति व्यावृत्त्यै २९

अपांनपादाशुहेमन्निति संमार्ष्टि । मेध्यानेवैनान्करोति । अथो स्तौत्येवैना-नाजिँ सरिष्यतः । विष्णुक्रमान्क्रमते । विष्णुरेव भूत्वेमान्लोकानभिजयति । वैश्वदेवो वै रथः । अङ्कौ न्यङ्कावभितो रथं यावित्याह । या एव देवता रथे प्रविष्टाः । ताभ्य एव नमस्करोति । आत्मनोऽनार्त्यै । अशमरथं-भावुकोऽस्य रथो भवति । य एवं वेद ३०

देवस्याहँ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्याह । सवितृप्रसूत एव ब्रह्मणा वाजमुज्जयति । देवस्याहँ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकँ रुहेयमित्याह । सवितृप्रसूत एव ब्रह्मणा वर्षिष्ठं नाकँ रोहति । चात्वाले रथचक्रं निमितँ रोहति । अतो वा अङ्गिरस उत्तमाः सुवर्गं लोकमायन् । साक्षादेव यजमानः सुवर्गं लोकमेति । आवेष्टयति । वज्रो वै रथः । वज्रेणैव दिशोऽभिजयति ३१

वाजिनाँ साम गायते । अन्नं वै वाजः । अन्नमेवावरुन्धे । वाचो वर्ष्म देवेभ्योऽपाक्रामत् । तद्वनस्पतीन्प्राविशत् । सैषा वाग्वनस्पतिषु वदति । या दुन्दुभौ । तस्माद्दुन्दुभिः सर्वा वाचोऽतिवदति । दुन्दुभीन्समाघ्नन्ति । परमा वा एषा वाक् ३२

या दुन्दुभौ । परमयैव वाचावरां वाचमवरुन्धे । अथो वाच एव वर्ष्म यजमानोऽवरुन्धे । इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्याह । एष वा एतर्हीन्द्रः । यो यजते । यजमान एव वाजमुज्जयति । सप्तदश प्रव्याधानाजिं धावन्ति । सप्तदशँ स्तोत्रं भवति । सप्तदशसप्तदश दीयन्ते ३३

सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । अर्वासि सप्तिरसि वाज्यसीत्याह । अग्निर्वा अर्वा । वायुः सप्तिः । आदित्यो वाजी ।एताभिरेवास्मै देवता-भिर्देवरथं युनक्ति । प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देव-रथमेवास्मै युनक्ति ३४

वाजिनो वाजं धावत काष्ठां गच्छतेत्याह । सुवर्गो वै लोकः काष्ठा । सुव-र्गमेव लोकं यन्ति । सुवर्गं वा एते लोकं यन्ति । य आजिं धावन्ति । प्राञ्चो धावन्ति । प्राङिव हि सुवर्गो लोकः । चतसृभिरनुमन्त्रयते । चत्वारि च्छन्दाँसि । छन्दोभिरेवैनान्सुवर्गं लोकं गमयति ३५

प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । य आजिं धावन्ति । उदञ्च आवर्तन्ते । अस्मादेव तेन लोकान्नयन्ति । रथविमोचनीयं जुहोति प्रतिष्ठित्यै । आ मा वाजस्य प्रसवो जगम्यादित्याह । अन्नं वै वाजः । अन्नमेवावरुन्धे । यथालोकं वा एत उज्जयन्ति । य आजिं धावन्ति ३६

कृष्णलंकृष्णलं वाजसृद्भ्यः प्रयच्छति । यमेव ते वाजं लोकमुज्जयन्ति । तं परिक्रीयावरुन्धे । एकधा ब्रह्मण उपहरति । एकधैव यजमाने वीर्यं दधाति । देवा वा ओषधीष्वाजिमयुः । ता बृहस्पतिरुदजयत् । स नीवारान्निरवृणीत । तन्नीवाराणां नीवारत्वम् । नैवारश्चरुर्भवति ३७

एतद्वै देवानां परममन्नम् । यन्नीवाराः । परमेणैवास्मा अन्नाद्येनावरमन्नाद्य-मवरुन्धे । सप्तदशशरावो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । क्षीरे भवति । रुचमेवास्मिन्दधाति । सर्पिष्वान्भवति मेध्यत्वाय । बार्हस्पत्यो वा एष देवतया ३८

यो वाजपेयेन यजते । बार्हस्पत्य एष चरुः । अश्वान्सरिष्यतः सस्रुषश्चा-वघ्रापयति । यमेव ते वाजं लोकमुज्जयन्ति । तमेवावरुन्धे । अजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति दुन्दुभीन्विमुञ्चति । यमेव ते वाजं लोकमिन्द्रियं दुन्दुभय उज्जयन्ति । तमेवावरुन्धे ३९

तार्प्यं यजमानं परिधापयति । यज्ञो वै तार्प्यम् । यज्ञेनैवैनँ समर्धयति । दर्भमयं परिधापयति । पवित्रं वै दर्भाः । पुनात्येवैनम् । वाजं वा एषोऽवरुरुत्सते । यो वाजपेयेन यजते । ओषधयः खलु वै वाजः । यद्दर्भमयं परिधापयति ४०

वाजस्यावरुद्ध्यै । जाय एहि सुवो रोहावेत्याह । पत्निया एवैष यज्ञस्यान्वा-रम्भोऽनवच्छित्त्यै । सप्तदशारत्निर्यूपो भवति । सप्तदशः प्रजापतिः । प्रजा-पतेराप्त्यै । तूपरश्चतुरश्रिर्भवति । गौधूमं चषालम् । न वा एते व्रीहयो न यवाः । यद्गोधूमाः ४१

एवमिव हि प्रजापतिः समृद्ध्यै । अथो अमुमेवास्मै लोकमन्नवन्तं करोति । वासोभिर्वेष्टयति । एष वै यजमानः । यद्यूपः । सर्वदेवत्यं वासः । सर्वाभिरेवैनं देवताभिः समर्धयति । अथो आक्रमणमेव तत्सेतुं यजमानः कुरुते । सुवर्गस्य लोकस्य समष्ट्यै । द्वादश वाजप्रसवीयानि जुहोति ४२

द्वादश मासाः संवत्सरः । संवत्सरमेव प्रीणाति । अथो संवत्सरमेवास्मा उपदधाति । सुवर्गस्य लोकस्य समष्ट्यै । दशभिः कल्पै रोहति । नव वै पुरुषे प्राणाः । नाभिर्दशमी ।प्राणानेव यथास्थानं कल्पयित्वा । सुवर्गं लोकमेति । एतावद्वै पुरुषस्य स्वम् ४३

यावत्प्राणाः । यावदेवास्यास्ति । तेन सह सुवर्गं लोकमेति । सुवर्देवाँ अगन्मेत्याह । सुवर्गमेव लोकमेति । अमृता अभूमेत्याह । अमृतमिव हि सुवर्गो लोकः । प्रजापतेः प्रजा अभुमेत्याह । प्राजापत्यो वा अयं लोकः । अस्मादेव तेन लोकान्नैति ४४

समहं प्रजया सं मया प्रजेत्याह । आशिषमेवैतामाशास्ते । आसपुटैर्घ्नन्ति । अन्नं वा इयम् । अन्नाद्येनैवैनँ समर्धयन्ति । ऊषैर्घ्नन्ति । एते हि साक्षादन्नम् । यदूषाः । साक्षादेवैनमन्नाद्येन समर्धयन्ति । पुरस्तात्प्रत्यञ्चं घ्नन्ति ४५

पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतो घ्नन्ति । शीर्षतो ह्यन्नमद्यते । दिग्भ्यो घ्नन्ति । दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते । ईश्वरो वा एष पराङ्प्रदघः । यो यूपँ रोहति । हिरण्यमध्यवरोहति । अमृतं वै हिरण्यम् । अमृतँ सुवर्गो लोकः ४६

अमृत एव सुवर्गे लोके प्रतितिष्ठति । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । पुष्ट्यै वा एतद्रूपम् । यदजा । त्रिः संवत्सरस्यान्यान्पशून्परि प्रजायते । बस्ताजिनमध्यवरोहति । पुष्ट्यामेव प्रजनने प्रतितिष्ठति ४७

सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । तान्येवावरुन्धे । सप्त ग्राम्या ओषधयः । सप्तारण्याः । उभयीषामवरुद्ध्यै । अन्नस्यान्नस्य जुहोति । अन्नस्यान्नस्यावरुद्ध्यै । यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् ४८

अवरुद्धेन व्यृध्येत । सर्वस्य समवदाय जुहोति । अनवरुद्धस्यावरुद्ध्यै । औदुम्बरेण स्रुवेण जुहोति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्यावरुद्ध्यै । देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभिषिञ्चति । अन्नस्यान्नस्याभिषिञ्चति । अन्नस्यान्नस्यावरुद्ध्यै ४९

पुरस्तात्प्रत्यञ्चमभिषिञ्चति । पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतोऽभिषिञ्चति । शीर्षतो ह्यन्नमद्यते । आ मुखादन्ववस्रावयति । मुखत एवास्मा अन्नाद्यं दधाति । अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । एष वा अग्नेः सवः । तेनैवैनमभिषिञ्चति । इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह ५०

इन्द्रियमेवास्मिन्नेतेन दधाति । बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनमभिषिञ्चति । सोमग्रहाँश्चावदानीयानि चर्त्विग्भ्य उप हरन्ति । अमुमेव तैर्लोकमन्नवन्तं करोति । सुराग्रहाँश्चानवदानीयानि च वाजसृद्भ्यः । इममेव तैर्लोकमन्नवन्तं करोति । अभो उभयीष्वेवाभिषिच्यते । विमाथं कुर्वते वाजसृतः ५१

इन्द्रियस्यावरुद्ध्यै । अनिरुक्ताभिः प्रातःसवने स्तुवते । अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । वाजवतीभिर्माध्यन्दिने । अन्नं वै वाजः । अन्नमेवावरुन्धे । शिपिविष्टवतीभिस्तृतीयसवने । यज्ञो वै विष्णुः । पशवः शिपिः । यज्ञ एव पशुषु प्रतितिष्ठति । बृहदन्त्यं भवति । अन्तमेवैनँ श्रियै गमयति ५२

नृषदं त्वेत्याह । प्रजा वै नृन् । प्रजानामेवैतेन सूयते । द्रुषदमित्याह । वनसपतयो वै द्रु । वनस्पतीनामेवैतेन सूयते । भुवनसदमित्याह । यदा वै वसीयान्भवति । भुवनमगन्निति वै तमाहुः । भुवनमेवैतेन गच्छति ५३

अप्सुषदं त्वा घृतसदमित्याह । अपामेवैतेन घृतस्य सूयते । व्योमसदमित्याह । यदा वै वसीयान्भवति । व्योमागन्निति वै तमाहुः । व्योमैवैतेन गच्छति । पृथिविषदं त्वान्तरिक्षसदमित्याह । एषामेवैतेन लोकानाँ सूयते । तस्माद्वाजपेययाजी न कं चन प्रत्यवरोहति । अपीव हि देवतानाँ सूयते ५४

नाकसदमित्याह । यदा वै वसीयान्भवति । नाकमगन्निति वैतमाहुः । नाकमेवैतेन गच्छति । ये ग्रहाः पञ्चजनीना इत्याह । पञ्चजनानामेवैतेन सूयते । अपाँ रसमुद्वयसमित्याह । अपामेवैतेन रसस्य सूयते । सूर्यरश्मिँ समाभृतमित्याह सशुक्रत्वाय ५५

इन्द्रो वृत्रँ हत्वा । असुरान्पराभाव्य । सोऽमावास्यां प्रत्यागच्छत् । ते पितरः पूर्वेद्युरागच्छन् । पितृन्यज्ञोऽगच्छत् । तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । तेऽब्रुवन्वरं वृणामहै । अथ वः पुनर्दास्यामः । अस्मभ्यमेव पूर्वेद्युः क्रियाता इति ५६

तमेभ्यः पुनरददुः । तस्मात्पितृभ्यः पूर्वेद्युः क्रियते । यत्पितृभ्यः पूर्वेद्युः करोति । पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते । सोमाय पितृपीताय स्वधा नम इत्याह । पितुरेवाधि सोमपीथमवरुन्धे । न हि पिता प्रमीयमाण आहैष सोमपीथ इति । इन्द्रियं वै सोमपीथः । इन्द्रियमेव सोमपीथमवरुन्धे

। तेनेन्द्रियेण द्वितीयां जायामभ्यश्नुते ५७

एतद्वै ब्राह्मणं पुरा वाजश्रवसा विदामक्रन् । तस्मात्ते द्वेद्वे जाये अभ्याक्षत । य एवं वेद । अभि द्वितीयां जायामश्नुते । अग्नये कव्यवाहनाय स्वधा नम इत्याह । य एव पितॄणामग्निः । तं प्रीणाति । तिस्र आहुतीर्जुहोति । त्रिर्निदधाति । षट्संपद्यन्ते ५८

षड्वा ऋतवः । ऋतूनेव प्रीणाति । तूष्णीं मेक्षणमादधाति । अस्ति वा हि षष्ठ ऋतुर्न वा । देवान्वै पितॄन्प्रीतान् । मनुष्याः पितरोऽनु प्रपिपते । तिस्र आहुतीर्जुहोति त्रिर्निदधाति । षट्संपद्यन्ते । षड्वा ऋतवः ५९

ऋतवः खलु वै देवाः पितरः । ऋतूनेव देवान्पितॄन्प्रीणाति । तान्प्रीतान् । मनुष्याः पितरोऽनु प्रपिपते । सकृदाच्छिन्नं बर्हिर्भवति । सकृदिव हि पितरः । त्रिर्निदधाति । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । पराङावर्तते ६०

ह्लीका हि पितरः । ओष्मणो व्यावृत उपास्ते । ऊष्मभागा हि पितरः । ब्रह्मवादिनो वदन्ति । प्राश्या३ं न प्राश्या३मिति । यत्प्राश्नीयात् । जन्यमन्नमद्यात् । प्रमायुकः स्यात् । यन्न प्राश्नीयात् । अहविः स्यात् ६१

पितृभ्य आवृश्च्येत । अवघ्रेयमेव । तन्नेव प्राशितं नेवाप्राशितम् । वीरं वा वै पितरः प्रयन्तो हरन्ति । वीरं वा ददति । दशां छिनत्ति । हरणभागा हि पितरः । पितॄनेव निरवदयते । उत्तर आयुषि लोम छिन्दीत । पितॄणाँ ह्येतर्हि नेदीयः ६२

नमस्करोति । नमस्कारो हि पितॄणाम् । नमो वः पितरो रसाय । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरः स्वधायै । नमो वः पितरो मन्यवे । नमो वः पितरो घोराय । पितरो नमो वः । य एतस्मिन्लोके स्थ ६३

युष्माँस्ते नु । येऽस्मिन्लोके । मां तेऽनु । य एतस्मिँल्लोके स्थ । यूयं तेषां वसिष्ठा भूयास्त । येऽस्मिँल्लोके । अहं तेषां वसिष्ठो भूयासमित्याह । वसिष्ठः समानानां भवति । य एवं विद्वान्पितृभ्यः करोति । एष वै मनुष्याणां यज्ञः ६४

देवानां वा इतरे यज्ञाः । तेन वा एतत्पितृलोके चरति । यः पितृभ्यः करोति । स ईश्वरः प्रमेतोः । प्राजापत्ययर्चा पुनरैति । यज्ञो वै प्रजापतिः । यज्ञेनैव सह पुनरैति । न प्रमायुको भवति । पितृलोके वा एतद्यजमानश्चरति । यत्पितृभ्यः करोति । स ईश्वर आर्तिमार्तोः । प्रजापतिस्त्वा वैनं तत उन्नेतुमर्हतीत्याहुः । यत्प्राजापत्ययर्चा पुनरैति । प्रजापतिरेवैनं तत उन्नयति । नार्तिमार्च्छति यजमानः ६५ ३

उभये वा एते प्रजापतेरध्यसृज्यन्त । देवाश्चासुराश्च । तान्न व्यजानात् । इमेऽन्य इमेऽन्य इति । स देवानँ शूनकरोत् । तानभ्यषुणोत् । तान्पवित्रेणापुनात् । तान्परस्तात्पवित्रस्य व्यगृह्णात् । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् १

देवता वा एता यजमानस्य गृहे गृह्यन्ते । यद्ग्रहाः । विदुरेनं देवाः । यस्यैवं विदुष एते ग्रहा गृह्यन्ते । एषा वै सोमस्याहुतिः । यदुपाँशुः । सोमेन देवाँस्तर्पयाणीति खलु वै सोमेन यजते । यदुपाँशुं जुहोति । सोमेनैव तद्देवाँस्तर्पयति । यद्ग्रहाञ्जुहोति २

देवा एव तद्देवान्गच्छन्ति । यच्चमसाञ्जुहोति । तेनैवानुरूपेण यजमानः सुवर्गं लोकमेति । किं न्वेतदग्र आसीदित्याहुः । यत्पात्राणीति । इयं वा एतदग्र आसीत् । मृन्मयानि वा एतान्यासन् । तैर्देवा न व्यावृतमगच्छन् । त एतानि दारुमयाणि पात्राण्यपश्यन् । तान्यकुर्वत ३

तैर्वै ते व्यावृतमगच्छन् । यद्दरुमयाणि पात्राणि भवन्ति । व्यावृतमेव तैर्यजमानो गच्छति । यानि दरुमयाणि पात्राणि भवन्ति । अमुमेव तैर्लोकमभिजयति । यानि मृन्मयानि । इममेव तैर्लोकमभिजयति ।

ब्रह्मवादिनो वदन्ति । काश्चतस्रः स्थालीर्वायव्याः सोमग्रहणीरिति । देवा वै पृश्निमदुह्रन् ४

तस्या एते स्तना आसन् । इयं वै पृश्निः । तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुह्रन् । यदादित्यस्थाली भवति । चतुष्पद एव तया पशून्य-जमान इमां दुहे । तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत् । यदुक्थ्यस्थाली भवति । इन्द्रियमेव तया यजमान इमां दुहे । तां विश्वे देवा आग्रयण-स्थाल्योर्जमदुह्रन् । यदाग्रयणस्थाली भवति ५

ऊर्जमेव तया यजमान इमां दुहे । तां मनुष्या ध्रुवस्थाल्यायुरदुह्रन् । यद्ध्रुव-स्थाली भवति । आयुरेव तया यजमान इमां दुहे । स्थाल्या गृह्णाति । वायव्येन जुहोति । तस्मादन्येन पात्रेण पशून्दुहन्ति । अन्येन प्रतिगृह्णन्ति । अथो व्यावृतमेव तद्यजमानो गच्छति ६

युवँ सुराममश्विना । नमुचावासुरे सचा । विपिपाना शुभस्पती ।इन्द्रं कर्म-स्वावतम् । पुत्रमिव पितरावश्विनोभा । इन्द्रावतं कर्मणा दँसनाभिः । य-त्सुरामं व्यपिबः शचीभिः । सरवती त्वा मघवन्नभीष्णात् । अहाव्यग्ने हविरास्ये ते । स्रुचीव घृतं चमू इव सोमः ७

वाजसनिँ रयिमस्मे सुवीरम् । प्रशस्तं धेहि यशसं बृहन्तम् । यस्मिन्नश्वास ऋषभास उक्षणः । वशा मेषा अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे । हृदा मतिं जनय चारुमग्नये । नाना हि वां देवहितँ सदो मितम् । मा सँसृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एषः । मा मा हिँसीः स्वां योनिमाविशन् ८

यदत्र शिष्टँ रसिनः सुतस्य । यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन । सोमँ राजानमिह भक्षयामि । द्वे स्रुती अशृणवं पितृणाम् । अहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वं भुवनँ समेति । अन्तरा पूर्वमपरं च केतुम् । यस्ते देव वरुण गायत्रछन्दाः पाशः । तं त एतेनावयजे ९

यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः । तं त एतेनावयजे । यस्ते देव वरुण जगतीछन्दाः पाशः । तं त एतेनावयजे । सोमो वा एतस्य राज्यमादत्ते । यो राजा सन्राज्यो वा सोमेन यजते । देवसुवामेतानि हवींषि भवन्ति । एतावन्तो वै देवानाँ सवाः । त एवास्मै सवान्प्रयच्छन्ति । त एनं पुनः सुवन्ते राज्याय । देवसू राजा भवति १०

उदस्थाद्देव्यदितिर्विश्वरूपी ।आयुर्यज्ञपतावधात् । इन्द्राय कृरावती भागम् । मित्राय वरुणाय च । इयं वा अग्निहोत्री ।इयं वा एतस्य निषीदति । यस्याग्निहोत्री निषीदति । तामुत्थापयेत् । उदस्थाद्देव्यदितिरिति । इयं वै देव्यदितिः ११

इमामेवास्मा उत्थापयति । आयुर्यज्ञपतावधादित्याह । आयुरेवास्मिन्दधाति । इन्द्राय कृरावती भागं मित्राय वरुणाय चेत्याह । यथायजुरेवैतत् । अवर्तिं वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति । यस्याग्निहोत्र्युपसृष्टा निषीदति । तां दुग्ध्वा ब्राह्मणाय दद्यात् । यस्यान्नं नाद्यात् । अवर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्चति १२

दुग्ध्वा ददाति । न ह्यदृष्टा दक्षिणा दीयते । पृथिवीं वा एतस्य पयः प्रविशति । यस्याग्निहोत्रं दुह्यमानँ स्कन्दति । यदद्य दुग्धं पृथिवीमसक्त । यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पयो अस्तु तन्मयीत्याह । पय एवात्मन्गृहेषु पशुषु धत्ते । अप उपसृजति १३

अद्भिरेवैनदाप्नोति । यो वै यज्ञस्यार्तेनानार्तँ सँसृजति । उभे वै ते तर्ह्यार्छतः । आर्छति खलु वा एतदग्निहोत्रम् । यद्दुह्यमानँ स्कन्दति । यदभिदुह्यात् । आर्तेनानार्तं यज्ञस्य सँसृजेत् । तदेव यादृक्कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अनार्तेनैवार्तं यज्ञस्य निष्करोति १४

यद्युद्द्रुतस्य स्कन्देत् । यत्ततोऽहुत्वा पुनरेयात् । यज्ञं विच्छिन्द्यात् । यत्र स्कन्देत् । तन्निषद्य पुनर्गृह्णीयात् । यत्रैव स्कन्दति । तत एवैनत्पुनर्गृह्णाति । तदेव यादृक्कीदृक्च होतव्यम् । अथान्यां दुग्ध्वा पुनर्होतव्यम् । अनार्तेनैवार्तं

यज्ञस्य निष्करोति १५

वि वा एतस्य यज्ञश्छिद्यते । यस्याग्निहोत्रेऽधिश्रिते श्वान्तरा धावति । रुद्रः खलु वा एषः । यदग्निः । यद्गामन्वत्यावर्तयेत् । रुद्राय पशूनपिदध्यात् । अपशुर्यजमानः स्यात् । यदपोऽन्वतिषिञ्चेत् । अनाद्यमग्नेरापः । अनाद्यमाभ्यामपिदध्यात् । गार्हपत्याद्भस्मादाय । इदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वँसयन्नुद्रवेत् । यज्ञो वै विष्णुः । यज्ञेनैव यज्ञँ संतनोति । भस्मना पदमपिवपति शान्त्यै १६

नि वा एतस्याहवनीयो गार्हपत्यं कामयते । नि गार्हपत्य आहवनीयम् । यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति । दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । अथाग्निम् । अथाग्निहोत्रम् । यद्धिरण्यं पुरस्ताद्धरति । ज्योतिर्वै हिरण्यम् । ज्योतिरेवैनं पश्यन्नुद्धरति । यदग्निं पूर्वँ हरत्यथाग्निहोत्रम् १७

भागधेयेनैवैनं प्रणयति । ब्राह्मण आर्षेय उद्धरेत् । ब्राह्मणो वै सर्वा देवताः । सर्वाभिरेवैनं देवताभिरुद्धरति । अग्निहोत्रमुपसाद्यातमितोरासीत । व्रतमेव हतमनुम्रियते । अन्तं वा एष आत्मनो गच्छति । यस्ताम्यति । अन्तमेष यज्ञस्य गच्छति । यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति १८

पुनः समन्य जुहोति । अन्तेनैवान्तं यज्ञस्य निष्करोति । वरुणो वा एतस्य यज्ञं गृह्णाति । यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति । वारुणं चरुं निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते । नि वा एतस्याहवनीयो गार्हपत्यं कामयते । नि गार्हपत्य आहवनीयम् । यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति । चतुर्गृहीतमाज्यं पुरस्ताद्धरेत् १९

अथाग्निम् । अथाग्निहोत्रम् । यदाज्यं पुरस्ताद्धरति । एतद्वा अग्नेः प्रियं धाम । यदाज्यम् । प्रियेणैवैनं धाम्ना समर्धयति । यदग्निं पूर्वँ हरत्यथाग्निहोत्रम् । भागधेयेनैवैनं प्रणयति । ब्राह्मण आर्षेय उद्धरेत् । ब्राह्मणो वै सर्वा देवताः २०

सर्वाभिरेवैनं देवताभिरुद्धरति । पराची वा एतस्मै व्युच्छन्ती व्युच्छति । यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति । उषाः केतुना जुषताम् । यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमँ स्वाहेति प्रत्यङ्ङिनषद्याज्येन जुहुयात् । प्रतीचीमेवास्मै विवासयति । अग्निहोत्रमुपसाद्यातमितोरासीत । व्रतमेव हतमनुम्रियते । अन्तं वा एष आत्मनो गच्छति २१

यस्ताम्यति । अन्तमेष यज्ञस्य गच्छति । यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति । पुनः समन्य जुहोति । अन्तेनैवान्तं यज्ञस्य निष्करोति । मित्रो वा एतस्य यज्ञं गृह्णाति । यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति । मैत्रं चरुं निर्वपेत् । तेनैव यज्ञं निष्क्रीणीते । यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेत् २२

यदाहवनीयमनुद्वाप्य गार्हपत्यं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यद्वै यज्ञस्य वास्तव्यं क्रियते । तदनु रुद्रोऽवचरति । यत्पूर्वमन्ववस्येत् । वास्तव्यमग्निमुपासीत । रुद्रोऽस्य पशून्घातुकः स्यात् । आहवनीयमुद्वाप्य । गार्हपत्यं मन्थेत् २३

इतः प्रथमं जज्ञे अग्निः । स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या । देवेभ्यो हव्यं वहतु प्रजानन्निति । छन्दोभिरेवैनँ स्वाद्योनेः प्रजनयति । गार्हपत्यं मन्थति । गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते । स यदुद्वायति । तदनु पशवोऽपक्रामन्ति । इषे रय्यै रमस्व २४

सहसे द्युम्नाय । ऊर्जेऽपत्यायेत्याह । पशवो वै रयिः । पशूनेवास्मै रमयति । सारस्वतौ त्वोत्सौ समिन्धातामित्याह । ऋक्सामे वै सारसवतावुत्सौ । ऋक्सामाभ्यामेवैनँ समिन्धे । सम्राडसि विराडसीत्याह । रथन्तरं वै सम्राट् । बृहद्विराट् २५

ताभ्यामेवैनँ समिन्धे । वज्रो वै चक्रम् । वज्रो वा एतस्य यज्ञं विच्छिनत्ति । यस्यानो वा रथो वान्तराग्नी याति । आहवनीयमुद्वाप्य । गार्हपत्यादुद्धरेत् । यदग्ने पूर्वं प्रभृतं पदँ हि ते । सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनु संभरैतम् । सं नः सृज सुमत्या वाजवत्येति २६

पूर्वेणैवास्य यज्ञेन यज्ञमनु संतनोति । त्वमग्ने सप्रथा असीत्याह । अग्निः सर्वा देवताः । देवताभिरेव यज्ञँ संतनोति । अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव पथिकृतँ स्वेन भागधेयेनोपधावति । स एवैनं यज्ञियं पन्थामपिनयति । अनड्वान्दक्षिणा । वही ह्येष समृद्ध्यै २७

यस्य प्रातःसवने सोमोऽतिरिच्यते । माध्यन्दिनँसवनं कामयमानोऽभ्यतिरिच्यते । गौर्धयति मरुतामिति धयद्वतीषु कुर्वन्ति । हिनस्ति वै सन्ध्यधीतम् । सन्धीव खलु वा एतत् । यत्सवनस्यातिरिच्यते । यद्धयद्वतीषु कुर्वन्ति । सन्धेः शान्त्यै । गायत्रँ साम भवति पञ्चदशः स्तोमः । तेनैव प्रातःसवनान्न यन्ति २८

मरुत्वतीषु कुर्वन्ति । तेनैव माध्यन्दिनात्सवनान्न यन्ति । होतुश्चमसमनून्नयन्ते । होतानुशँसति । मध्यत एव यज्ञँ समादधाति । यस्य माध्यन्दिने सवने सोमोऽतिरिच्यते । आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरिच्यते । गौरिवीतँ साम भवति । अतिरिक्तं वै गौरिवीतम् । अतिरिक्तं यत्सवनस्यातिरिच्यते २९

अतिरिक्तस्य शान्त्यै । बरामहाँ असि सूर्येति कुर्वन्ति । यस्यैवादित्यस्य सवनस्य कामेनातिरिच्यते । तेनैवैनं कामेन समर्धयन्ति । गौरिवीतँ साम भवति । तेनैव माध्यन्दिनात्सवनान्न यन्ति । सप्तदशः स्तोमः । तेनैव तृतीयसवनान्न यन्ति । होतुश्चमसमनून्नयन्ते । होतानुशँसति ३०

मध्यत एव यज्ञँ समादधाति । यस्य तृतीयसवने सोमोऽतिरिच्येत । उक्थ्यं कुर्वीत । यस्योक्थ्येऽतिरिच्येत । अतिरात्रं कुर्वीत । यस्यातिरात्रेऽतिरिच्येत । तत्त्वै दुष्प्रज्ञानम् । यजमानं वा एतत्पशव आसाद्य यन्ति । बृहत्साम भवति । बृहद्वा इमाँल्लोकान्दाधार । बार्हताः पशवः । बृहतैवास्मै पशून्दाधार । शिपिविष्टवतीषु कुर्वन्ति शिपिविष्टो वै देवानां पुष्टं ।पुष्टयैवैनँ समर्धयन्ति । होतुश्चमसमनून्नयन्ते । होतानुशँसति । मध्यत एव यज्ञँ समादधाति ३१

एकैको वै जनतायामिन्द्रः । एकं वा एताविन्द्रमभि सँसुनुतः । यौ द्वौ सँसुनुतः । प्रजापतिर्वा एष वितायते । यद्यज्ञः । तस्य ग्रावाणो दन्ताः । अन्यतरं वा एते सँसुन्वतोर्निर्बप्सति । पूर्वेणोपसृत्या देवता इत्याहुः । पूर्वोपसृतस्य वै श्रेयान्भवति । एतिवन्त्याज्यानि भवन्त्यभिजित्यै ३२

मरुत्वतीः प्रतिपदः । मरुतो वै देवानामपराजितमायतनम् । देवानामेवापराजित आयतने यतते । उभे बृहद्रथन्तरे भवतः । इयं वाव रथन्तरम् । असौ बृहत् । आभ्यामेवैनमन्तरेति । वाचश्च मनसश्च । प्राणाच्चापानाच्च । दिवश्च पृथिव्याश्च ३३

सर्वस्माद्वित्ताद्वेद्यात् । अभिवर्तो ब्रह्मसामं भवति । सुवर्गस्य लोकस्याभिवृत्त्यै । अभिजिद्भवति । सुवर्गस्य लोकस्याभिजित्यै । विश्वजिद्भवति । विश्वस्य जित्यै । यस्य भूयाँसो यज्ञक्रतव इत्याहुः । स देवता वृङ्क्ते इति । यद्यग्निष्टोमः सोमः परस्तात्स्यात् ३४

उक्थ्यं कुर्वीत । यद्युक्थ्यः स्यात् । अतिरात्रं कुर्वीत । यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते । यो वै छन्दोभिरभिभवति । स संसुन्वतोरभिभवति । संवेशाय त्वोपवेशाय त्वेत्याह । छन्दाँसि वै संवेश उपवेषः । छन्दोभिरेवास्य छन्दाँस्यभिभवति । इष्टर्गो वा ऋत्विजामध्वर्युः ३५

इष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयते । प्राणापानौ मृत्योर्मा पातमित्याह । प्राणापानयोरेव श्रयते । प्राणापानौ मा मा हासिष्टमित्याह । नैनं पुरायुषः प्राणापानौ जहितः । आर्तिं वा एते नियन्ति । येषां दीक्षितानां प्रमीयते । तं यदववर्जेयुः । क्रूरकृतामिवैषां लोकः स्यात् । आहर दहेति ब्रूयात् ३६

तं दक्षिणतो वेद्यै निधाय । सर्पराज्ञिया ऋग्भिः स्तुयुः । इयं वै सर्पतो राज्ञी ।अस्या एवैनं परिददति । व्यृद्धं तदित्याहुः । यत्स्तुतमननुशस्तमिति । होता प्रथमः प्रचीनावीती मार्जालीयं परीयात् । यामीरनुब्रुवन् । सर्पराज्ञीनां कीर्तयेत् । उभयोरेवैनं लोकयोः परिददति ३७

अथो धुवन्त्येवैनम् । अथो न्ये वास्मै ह्नुवते । त्रिः परियन्ति । त्रय इमे लोकाः । एभ्य एवैनं लोकेभ्यो धुवते । त्रिः पुनः परियन्ति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते । अग्न आयूँषि पवस इति प्रतिपदं कुर्वीरन् । रथन्तरसामैषाँ सोमः स्यात् । आयुरेवात्मन्दधते । अथो पाप्मा-नमेव विजहतो यन्ति ३८

असुर्यं वा एतस्माद्वर्णं कृत्वा । पशवो वीर्यमपक्रामन्ति । यस्य यूपो विरो-हति । त्वाष्ट्रं बहुरूपमालभेत । त्वष्टा वै रूपाणामीशे । य एव रूपाणामीशे । सोऽस्मिन्पशून्वीर्यं यच्छति । नास्मात्पशवो वीर्यमप क्रामन्ति । आर्तिं वा एते नियन्ति । येषां दीक्षितानामग्निरुद्वायति ३९

यदाहवनीय उद्वायेत् । यत्तं मन्थेत् । विच्छिन्द्यात् । भ्रातृव्यमस्मै जनयेत् । यदाहवनीय उद्वायेत् । आग्नीध्रादुद्धरेत् । यदाग्नीध्र उद्वायेत् । गार्हपत्यादुद्धरेत् । यद्गार्हपत्य उद्वायेत् । अत एव पुनर्मन्थेत् ४०

अत्र वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति । तदेनमिच्छन्ति । यस्माद्दारोरुद्वायेत् । तस्यारणी कुर्यात् । क्रुमुकमपि कुर्यात् । एषा वा अग्नेः प्रिया तनूः । यत्क्रुमुकः । प्रिययैवैनं तनुवा समर्धयति । गार्हपत्यं मन्थति ४१

गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयति । यस्य सोम उपदस्येत् । सुवर्णँ हिरण्यं द्वेधा विच्छिद्य । ऋजीषेऽन्य-दाधूनुयात् । जुहुयादन्यत् । सोममेवाभिषुणोति । सोमं जुहोति । सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् ४२

तत्सुवर्णँ हिरण्यमभवत् । यत्सुवर्णँ हिरण्यं कुर्वन्ति । प्रिययैवैनं तनुवा समर्धयन्ति । यस्याक्रीतँ सोममपहरेयुः । क्रीणीयादेव । सैव ततः प्रायश्चित्तिः । यस्य क्रीतमपहरेयुः । आदाराँश्च फाल्गुनानि चाभिषुणुयात् । गायात्री यँ सोममाहरत् । तस्य योऽँशुः परापतत् ४३

त आदारा अभवन् । इन्द्रो वृत्रमहन् । तस्य वल्कः परापतत् । तानि फाल्गुनान्यभवन् । पशवो वै फाल्गुनानि । पशवः सोमो राजा । यदा- दाराँश्च फाल्गुनानि चाभिषुणोति । सोममेव राजानमभिषुणोति । शृतेन प्रातःसवने श्रीणीयात् । दध्ना मध्यंदिने ४४

नीतमिश्रेण तृतीयसवने । अग्निष्टोमः सोमः स्याद्रथन्तरसामा । य एवर्त्विजो वृताः स्युः । त एनं याजयेयुः । एकां गां दक्षिणां दद्यात्तेभ्य एव । पुनः सोमं क्रीणीयात् । यज्ञेनैव तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्तिः । सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते । यः सत्त्रायागुरते । एतावान्खलु वै पुरुषः । यावदस्य वित्तम् । सर्ववेदसेन यजेत । सर्व- पृष्ठोऽस्य सोमः स्यात् । सर्वाभ्य एव देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते ४५

पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्व आयवः । जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ रनु ४६

यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । उभाभ्यां देव सवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे । वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सध माद्येषु । वयँ स्याम पतयो रयीणाम् ४७

वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् । बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनाहि मा । येन देवा अपुनत । येनापो दिव्यं कशः । तेन दिव्येन ब्रह्मणा ४८

इदं ब्रह्म पुनीमहे । यः पावमानीरध्येति । ऋषिभिः संभृतँ रसम् । सर्वँ स पूतमश्नाति । स्वदितं मातरिश्वना । पावमानीर्यो अध्येति । ऋषिभिः

संभृतँ रसम् । तस्मै सरस्वती दुहे । क्षीरँ सर्पिर्मधूदकम् । पावमानीः स्वस्त्ययनीः ४९

सुदुघा हि पयस्वतीः । ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतँ हितम् । पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् । कामान्समर्धयन्तु नः । देवीर्देवैः समाभृताः । पावमानीः स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः । ऋषिभिः सम्भृतो रसः ५०

ब्राह्मणेष्वमृतँ हितम् । येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन सहस्रधारेण । पावमान्यः पुनन्तु मा ।प्राजापत्यं पवित्रम् । शतोद्यामँ हिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रः सुनीती सह मा पुनातु । सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ५१

प्रजा वै सत्रमासत तपस्तप्यमाना अजुह्वतीः । देवा अपश्यं चमसं घृतस्य पूर्णँ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेनार्धमास ऊर्जमवारुन्धत । तस्मादर्धमासे देवा इज्यन्ते । पितरोऽपश्यं चमसं घृतस्य पूर्णँ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन मास्यूर्जमवारुन्धत । तस्मान्मासि पितृभ्यः क्रियते । मनुष्या अपश्यं चमसं घृतस्य पूर्णँ स्वधाम् ५२

तमुपोदतिष्ठन्तमजुहवुः । तेन द्वयीमूर्जमवारुन्धत । तस्माद्द्विरह्नो मनुष्येभ्य उपह्रियते । प्रातश्च सायं च । पशवोऽपश्यं चमसं घृतस्य पूर्णँ स्वधाम् । तमुपोदतिष्ठन्तमजुहवुः । तेन त्रयीमूर्जमवारुन्धत । तस्मात्त्रिरह्नः पशवः प्रेरते । प्रातः संगवे सायम् । असुरा अपश्यं चमसं घृतस्य पूर्णँ स्वधाम् ५३तमुपोदतिष्ठन्तमजुहवुः । तेन संवत्सर ऊर्जमवारुन्धत । ते देवा अमन्यन्त । अमी वा इदमभूवन् । यद्वयँ स्म इति । त एतानि चातुर्मास्यान्यपश्यन् । तानि निरवपन् । तैरेवैषां तामूर्जमवृञ्जत । ततो देवा अभवन् । परासुराः ५४

यद्यजते । यामेव देवा ऊर्जमवारुन्धत । तां तेनावरुन्धे । यत्पितृभ्यः

करोति । यामेव पितर ऊर्जमवारुन्धत । तां तेनावरुन्धे । यदावसथेऽन्नँ हरन्ति । यामेव मनुष्या ऊर्जमवारुन्धत । तां तेनावरुन्धे । यद्दक्षिणां ददाति ५५

यामेव पशव ऊर्जमवारुन्धत । तां तेनावरुन्धे । यच्चातुर्मास्यैर्यजते । यामेवासुरा ऊर्जमवारुन्धत । तां तेनावरुन्धे । भवत्यात्मना । परास्य भ्रातृव्यो भवति । विराजो वा एषा विक्रान्तिः । यच्चातुर्मास्यानि । वैश्वदेवेनास्मिँल्लोके प्रत्यतिष्ठत् । वरुणप्रघासैरन्तरिक्षे । साकमेधैरमुष्मिँल्लोके । एष हत्वावै तत्सर्वं भवति । य एवं विद्वाँश्चातुर्मास्यैर्यजते ५६

अग्निर्वाव संवत्सरः । आदित्यः परिवत्सरः । चन्द्रमा इदावत्सरः । वायुरनुवत्सरः । यद्वैश्वदेवेन यजते । अग्निमेव तत्संवत्सरमाप्नोति । तस्माद्वैश्वदेवेन यजमानः । संवत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत । यद्वरुणप्रघासैर्यजते । आदित्यमेव तत्परिवत्सरमाप्नोति ५७

तस्माद्वरुणप्रघासैर्यजमानः । परिवत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत । यत्साकमेधैर्यजते । चन्द्रमसमेव तदिदावत्सरमाप्नोति । तस्मात्साकमेधैर्यजमानः । इदावत्सरीणाँ सवस्तिमाशास्त इत्याशासीत । यत्पितृयज्ञेन यजते । देवानेव तदन्ववस्यति । अथ वा अस्य वायुश्चानुवत्सरश्चाप्रीतावुच्छिष्येते । यच्छुनासीरीयेण यजते ५८

वायुमेव तदनुवत्सरमाप्नोति । तस्माच्छुनासीरीयेण यजमानः । अनुवत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत । संवत्सरं वा एष ईप्सतीत्याहुः । यश्चातुर्मास्यैर्यजत इति । एष ह त्वै संवत्सरमाप्नोति । य एवं विद्वाँश्चातुर्मास्यैर्यजते । विश्वे देवाः समयजन्त । तेऽग्निमेवायजन्त । त एतं लोकमजयन् ५९

यस्मिन्नग्निः । यद्वैश्वदेवेन यजते । एतमेव लोकं जयति । यस्मिन्नग्निः । अग्नेरेव सायुज्यमुपैति । यदा वैश्वदेवेन यजते । अथ संवत्सरस्य गृहपतिमाप्नोति । यदा संवत्सरस्य गृहपतिमाप्नोति । अथ सहस्रयाजिनमाप्नोति । यदा सहस्रयाजिनमाप्नोति ६०

अथ गृहमेधिनमाप्नोति । यदा गृहमेधिनमाप्नोति । अथाग्निर्भवति । यदाग्निर्भवति । अथ गौर्भवति । एषा वै वैश्वदेवस्य मात्रा । एतद्वा एतेषामवमम् । अतोऽतो वा उत्तराणि श्रेयाँसि भवन्ति । यद्विश्वे देवाः समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्वम् ६१

अथादित्यो वरुणँ राजानं वरुणप्रघासैरयजत । स एतं लोकमजयत् । यस्मिन्नादित्यः । यद्वरुणप्रघासैर्यजते । एतमेव लोकं जयति । यस्मिन्नादित्यः । आदित्यस्यैव सायुज्यमुपैति । यदादित्यो वरुणँ राजानं वरुणप्रघासैरयजत । तद्वरुणप्रघासानं वरुणप्रघासत्वम् । अथ सोमो राजा छन्दाँसि साकमेधैरयजत ६२

स एतं लोकमजयत् । यस्मिँश्चन्द्रमा विभाति । यत्साकमेधैर्यजते । एतमेव लोकं जयति । यस्मिँश्चन्द्रमा विभाति । चन्द्रमस एव सायुज्यमुपैति । सोमो वै चन्द्रमाः । एष ह त्वै साक्षात्सोमं भक्षयति । य एवं विद्वान्साकमेधैर्यजते । यत्सोमश्च राजा छन्दाँसि च समैधन्त ६३

तत्साकमेधानाँ साकमेधात्वम् । अथर्तवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त । त एतं लोकमजयन् । यस्मिन्नृतवः । यत्पितृयज्ञेन यजते । एतमेव लोकं जयति । यस्मिन्नृतवः । ऋतूनामेव सायुज्यमुपैति । यदृतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त । तत्पितृयज्ञस्य पितृयज्ञत्वम् ६४

अथौषधय इमं देवं त्र्यम्बकैरयजन्त प्रथेमहीति । ततो वै ता अप्रथन्त । य एवं विद्वाँस्त्र्यम्बकैर्यजते । प्रथते प्रजया पशुभिः । अथ वायुः परमेष्ठिनँ शुनासीरीयेणायजत । स एतं लोकमजयत् । यस्मिन्वायुः । यच्छुनासीरीयेण यजते । एतमेव लोकं जयति । यस्मिन्वायुः ६५

वायोरेव सायुज्यमुपैति । ब्रह्मवादिनो वदन्ति । प्र चातुर्मास्ययाजी मीयता३ न प्रमीयता३ इति । जीवन्वा एष ऋतूनप्येति । यदि वसन्ता प्रमीयते । वसन्तो भवति । यदि ग्रीष्मे ग्रीष्मः । यदि वर्षासु वर्षाः । यदि शरदि शरत् । यदि हेमन्हेमन्तः । ऋतुर्भूत्वा संवत्सरमप्येति । संवत्सरः प्रजापतिः

। प्रजापतिर्वावैषः ६६ ४

अग्नेः कृत्तिकाः । शुक्रं परस्ताज्ज्योतिरवस्तात् । प्रजापते रोहिणी ।आपः परस्तादोषधयोऽवस्तात् । सोमस्येन्वका । विततानि परस्ताद्वयन्तोऽवस्तात् । रुद्रस्य बाहू ।मृगयवः परस्ताद्विक्षारोऽवस्तात् । अदित्यै पुनर्वसू ।वातः परस्तादार्द्रमवस्तात् १

बृहस्पतेस्तिष्यः । जुह्वतः परस्ताद्यजमाना अवस्तात् । सर्पाणामाश्रेषाः । अभ्यागच्छन्तः परस्तादभ्यानृत्यन्तोऽवस्तात् । पितृणां मघाः । रुदन्तः परस्तादपभ्रँशोऽवस्तात् । अर्यम्णः पूर्वे फल्गुनी ।जाया परस्तादृषभोऽवस्तात् । भगस्योत्तरे । वहतवः परस्ताद्वहमाना अवस्तात् २

देवस्य सवितुर्हस्तः । प्रसवः परस्तात्सनिरवस्तात् । इन्द्रस्य चित्रा । ऋतं परस्तात्सत्यमवस्तात् । वायोर्निष्ट्या । व्रततिः परस्तादसिद्धिरवस्तात् । इन्द्राग्नियोर्विशाखे । युगानि परस्तात्कृषमाणा अवस्तात् । मित्रस्यानूराधाः । अभ्यारोहत्परस्तादभ्यारूढमवस्तात् ३

इन्द्रस्य रोहिणी ।शृणत्परस्तात्प्रतिशृणदवस्तात् । निर्ऋत्यै मूलवर्हणी । प्रतिभञ्जन्तः परस्तात्प्रतिशृणन्तोऽवस्तात् । अपां पूर्वा अषाढाः । वर्चः परस्तात्समितिरवस्तात् । विश्वेषां देवानामुत्तराः । अभिजयत्परस्तादभि-जितमवस्तात् । विष्णोः श्रोणा । पृच्छमानाः परस्तात्पन्था अवस्तात् ४

वसूनाँ श्रविष्ठाः । भूतं परस्ताद्भूतिरवस्तात् । इन्द्रस्य शतभिषक् । विश्व-व्यचाः परस्ताद्विश्वक्षितिरवस्तात् । अजस्यैकपदः पूर्वे प्रोष्ठपदाः । वैश्वानरं परस्ताद्वैश्वावसवमवस्तात् । अहेर्बुध्नियस्योत्तरे । अभिषिञ्चन्तः परस्तादभि-षुण्वन्तोऽवस्तात् । पूष्णो रेवती ।गावः परस्ताद्वत्सा अवस्तात् । अश्विनो-रश्वयुजौ । ग्रामः परस्तात्सेनावस्तात् । यमस्यापभरणीः । अपकर्षन्तः परस्तादपवहन्तोऽवस्तात् । पूर्णा पश्चाद्यत्ते देवा अदधुः ५

यत्पुण्यं नक्षत्रम् । तद्बट्कुर्वीतोपव्युषम् । यदा वै सूर्य उदेति । अथ

नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत् । तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । एवँ ह वै यज्ञेषुं च शतद्युम्नं च मात्स्यो निरवसाययाञ्चकार ६

यो वै नक्षत्रियं प्रजापतिं वेद । उभयोरेनं लोकयोर्विदुः । हस्त एवास्य हस्तः । चित्रा शिरः । निष्ट्या हृदयम् । ऊरू विशाखे । प्रतिष्ठानूराधाः । एष वै नक्षत्रियः प्रजापतिः । य एवं वेद । उभयोरेनं लोकयोर्विदुः ७

अस्मिँश्चामुष्मिँश्च । यां कामयेत दुहितरं प्रैया स्यादिति । तां निष्ट्यायां दद्यात् । प्रियैव भवति । नैव तु पुनरागच्छति । अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् ८

यदभ्यजयन् । तदभिजितोऽभिजित्त्वम् । यं कामयेतानपजय्यं जयेदिति । तमेतस्मिन्नक्षत्रे यातयेत् । अनपजय्यमेव जयति । पापपराजितमिव तु । प्रजापतिः पशूनसृजत । ते नक्षत्रंनक्षत्रमुपातिष्ठन्त । ते समावन्त एवाभवन् । ते रेवतीमुपातिष्ठन्त ९

ते रेवत्यां प्राभवन् । तस्माद्रेवत्यां पशूनां कुर्वीत । यत्किं चार्वाचीनँ सोमात् । प्रैव भवन्ति । सलिलं वा इदमन्तरासीत् । यदतरन् । तत्तारकाणां तारकत्वम् । यो वा इह यजते । अमुँ स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वम् १०

देवगृहा वै नक्षत्राणि । य एवं वेद । गृह्येव भवति । यानि वा इमानि पृथिव्याश्चित्राणि । तानि नक्षत्राणि । तस्मादश्लीलनामँश्चित्रे । नावस्येन्न यजेत । यथा पापाहे कुरुते । तादृगेव तत् । देवनक्षत्राणि वा अन्यानि ११

यमनक्षत्राण्यन्यानि । कृत्तिकाः प्रथमम् । विशाखे उत्तमम् । तानि देवनक्षत्राणि । अनूराधाः प्रथमम् । अपभरणीरुत्तमम् । तानि यमनक्षत्राणि

। यानि देवनक्षत्राणि । तानि दक्षिणेन परियन्ति । यानि यमनक्षत्राणि
१२

तान्युत्तरेण । अन्वेषामरात्स्मेति । ऊराधाः । ज्येष्ठमेषामवधिष्मेति । तज्ज्येष्ठघ्नी ।मूलमेषामवृक्षामेति । तन्मूलबर्हणी ।यन्नासहन्त । तदषाढाः । यदश्लोणत् १३

तच्छ्रोणा । यदशृणोत् । तच्छ्रविष्ठाः । यच्छतमभिषज्यन् । तच्छतभिषक् । प्रोष्ठपदेषूदयच्छन्त । रेवत्यामरवन्त । अश्वयुजोरयुञ्जत । अपभर-णीष्वपावहन् । तानि वा एतानि यमनक्षत्राणि । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते १४

देवस्य सवितुः प्रातः प्रस्वः प्राणः । वरुणस्य सायमासवोऽपानः । यत्प्रती-चीनं प्रातस्तनात् । प्राचीनँ संगवात् । ततो देवा अग्निष्टोमं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । मित्रस्य संगवः । तत्पुण्यं तेजस्व्यहः । तस्मा तर्हि पशवः समायन्ति । यत्प्रतीचीनँ संगवात् १५

प्राचीनं मध्यंदिनात् । ततो देवा उक्थ्यं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । बृहस्पतेर्मध्यंदिनः । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि तेक्ष्णिष्ठं तपति । यत्प्रतीचीनं मध्यंदिनात् । प्राचीनमपराह्णात् । ततो देवाः षोडशिनं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः १६

भगस्यापराह्णः । तत्पुण्यं तेजस्व्यहः । तस्मादपराह्णे कुमार्यो भगमिच्छमानाश्चरन्ति । यत्प्रतीचीनमपराह्णात् । प्राचीनँ सायात् । ततो देवा अतिरात्रं निरमिमत । तत्तदात्तवीर्यं निर्मार्गः । वरुणस्य सायम् । तत्पुण्यं तेजस्व्यहः । तस्मात्तर्हि नानृतं वदेत् १७

ब्राह्मणो वा अष्टाविँशो नक्षत्राणाम् । समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव । यच्च परस्तान्नक्सात्राणां यच्चावस्तात् । तान्येकादश । ब्राह्मणो द्वादशः । य एवं विद्वान्संवत्सरं व्रतं चरति ।

संवत्सरेणैवास्य व्रतं गुप्तं भवति । समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । चत्वार्यश्लीलानि । तानि नव । आग्नेयी रात्रिः । ऐन्द्रमहः । तान्येकादश । आदित्यो द्वादशः । य एवं विद्वान्संवत्सरं व्रतं चरति । संवत्सरेणैवास्य व्रतं गुप्तं भवति १८

ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति । त्रयोदशेति । ब्रूयात् । स यद्ब्रूयात् । कस्तानि निरमिमीतेति । प्रजापतिरिति ब्रूयात् । स यद्ब्रूयात् । कुतस्तानि निरमिमीतेति । आत्मन इति । प्राणापानाभ्यामेवोपाँश्वन्तर्यामौ निरमिमीत १९

व्यानादुपाँशुसवनम् । वाच ऐन्द्रवायवम् । दक्षक्रतुभ्यां मैत्रावरुणम् । श्रोत्रादाश्विनम् । चक्षुषः शुक्रामन्थिनौ । आत्मन आग्रयणम् । अङ्गेभ्य उक्थ्यम् । आयुषो ध्रुवम् । प्रतिष्ठाया ऋतुपात्रे । यज्ञं वाव तं प्रजापतिर्निरमिमीत । स निर्मितो नाध्रियत समव्लीयत । स एतान्प्रजापतिरपिवापानपश्यत् । तान्निरवपत् । तैर्वै स यज्ञमप्यवपत् । यदपिवापा भवन्ति । यज्ञस्य धृत्या असंव्लयाय २०

ऋतमेव परमेष्ठि । ऋतं नात्येति किं चन । ऋते समुद्र आहितः । ऋते भुमिरियँ श्रिता । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये २१

तपसास्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् । यद्घर्मः पर्यवर्तयत् । अन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा । वरुणो धीतिभिः सह २२

इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसास्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये

२३

तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् । यो अस्याः पृथिव्यास्त्वचि । निवर्तयत्योषधीः । अग्निरीशान ओजसा । वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा २४

शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसास्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् २५

एकं मासमुदसृजत् । परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहत् । अमृतं मर्त्याभ्यः । प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम् । येन मासा अर्धमासाः । ऋतवः परिवत्सराः । येन ते ते प्रजापते । ईजानस्य न्यवर्तयन् २६

तेनाहमस्य ब्रह्मणा । निवर्तयामि जीवसे । अग्निस्तिग्मेन शोचिषा । तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम् । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये । तपसास्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये । तदृतं तत्सत्यम् । तद्व्रतं तच्छकेयम् । तेन शकेयं तेन राध्यासम् २७

देवा वै यद्यज्ञेऽकुर्वत । तदसुरा अकुर्वत । तेऽसुरा ऊर्ध्वं पृष्ठेभ्यो नापश्यन् । ते केशानग्रेऽवपन्त । अथ श्मश्रूणि । अथोपपक्षौ । ततस्तेऽवाञ्च आयन् । पराभवन् । यस्यैवं वपन्ति । अवाङेति २८

अथो परेव भवति । अथ देवा ऊर्ध्वं पृष्ठेभ्योऽपश्यन् । त उपपक्षावग्रेऽवपन्त । अथ श्मश्रूणि । अथ केशान् । ततस्तेऽभवन् । सुवर्गं लोकमायन् । यस्यैवं वपन्ति । भवत्यात्मना । अथो सुवर्गं लोकमेति २९

अथैतन्मनुर्वप्त्रे मिथुनमपश्यत् । स श्मश्रूण्यग्रेऽवपत । अथोपपक्षौ । अथ

केशान् । ततो वै स प्राजायत प्रजया पशुभिः । यस्यैवं वपन्ति । प्र प्रजया पशुभिर्मिथुनैर्जायते । देवासुराः संयत्त आसन् । ते संवत्सरे व्यायच्छन्त । तान्देवाश्चातुर्मास्यैरेवाभि प्रायुञ्जत ३०

वैश्वदेवेन चतुरो मासोऽवृञ्जतेन्द्रराजानः । ताञ्शीर्षन्नि चावर्तयन्त परि च । वरुणप्रघासैश्चतुरो मासोऽवृञ्जत वरुणराजानः । ताञ्शीर्षन्नि चावर्तयन्त परि च । साकमेधैश्चतुरो मासोऽवृञ्जत सोमराजानः । ताञ्शीर्षन्नि चावर्तयन्त परि च । या संवत्सर उपजीवासीत् । तामेषामवृञ्जत । ततो देवा अभवन् । परासुराः ३१

य एवं विद्वाँश्चातुर्मास्यैर्यजते । भ्रातृव्यस्यैव मासो वृक्त्वा । शीर्षन्नि च वर्तयते परि च । यैषा संवत्सर उपजीवा । वृङ्क्ते तां भ्रातृव्यस्य । क्षुधास्य भ्रातृव्यः पराभवति । लोहितायसेन निवर्तयते । यद्वा इमामग्निर्ऋतावागते निवर्तयति । एतदेवैनाँ रूपं कृत्वा निवर्तयति । सा ततः श्वःश्वो भूयसी भवन्त्येति ३२

प्रजायते । य एवं विद्वान्लोहितायसेन निवर्तयते । एतदेव रूपं कृत्वा निवर्तयते । स ततः श्वःश्वो भूयान्भवन्नेति । प्रैव जायते । त्रेण्या शलल्या निवर्तयेत । त्रीणित्रीणि वै देवानामृद्धानि । त्रीणि च्छन्दाँसि । त्रीणि सवनानि । त्रय इमे लोकाः ३३

ऋद्ध्यामेव तद्वीर्य एषु लोकेषु प्रतितिष्ठति । यच्चातुर्मास्ययाज्यात्मनो नावद्येत् । देवेभ्य आवृश्च्येत । चतृषुचतृषु मासेषु निवर्तयेत । परोक्षमेव तद्देवेभ्य आत्मनोऽवद्यत्यनाव्रस्काय । देवानां वा एष आनीतः । यश्चातुर्मास्ययाजी य एवं विद्वान्नि च वर्तयते परि च । देवता एवाप्येति । नास्य रुद्रः प्रजां पशूनभिमन्यते ३४

आयुषः प्राणँ संतनु । प्राणादपानँ संतनु । अपानाद्व्यानँ संतनु । व्यानाच्चक्षुः संतनु । चक्षुषः श्रोत्रँ संतनु । श्रोत्रान्मनः संतनु । मनसो वाचँ संतनु । वाच आत्मानँ संतनु । आत्मनः पृथिवीँ संतनु । पृथिव्या अन्तरिक्षँ संतनु

। अन्तरिक्षाद्दिवँ संतनु । दिवः सुवः संतनु ३५

इन्द्रो दधीचो अस्थभिः । वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव । इच्छन्नश्वस्य यच्छिरः । पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावति । अत्राह गोरमन्वत । नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे । इन्द्रमिद्गाथिनो बृहत् ३६

इन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत । इन्द्र इद्धर्योः सचा । संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः । इन्द्रो दीर्घाय चक्षसे । आ सूर्यँ रोहयद्दिवि । वि गोभिरद्रिमैरयत् । इन्द्र वाजेषु नो अव । सहस्रप्रधनेषु च ३७

उग्र उग्राभिरूतिभिः । तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् । इन्द्रः स दामने कृतः । ओजिष्ठः स बले हितः । द्युम्नी श्लोकी स सौम्यः । गिरा वज्रो न संभृतः । सबलो अनपच्युतः । ववक्षुरुग्रो अस्तृतः ३८

देवासुराः संयत्त आसन् । स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमप न्यधत्त । नेदेन-मसुरा बलीयाँसोऽहनन्निति । प्रह्लादो ह वै कायाधवः । विरोचनँ स्वं पुत्रमप न्यधत्त । नेदेनं देवा अहनन्निति । ते देवाः प्रजापतिमुपसमेत्योचुः । नाराजकस्य युद्धमस्ति । इन्द्रमन्विच्छामेति । तं यज्ञक्रतुभिरन्वैच्छन् ३९

तं यज्ञक्रतुभिर्नान्वविन्दन् । तमिष्टिभिरन्वैच्छन् । तमिष्टिभिरन्वविन्दन् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तस्मा एतमाग्नावैष्णवमेकादशकपालं दीक्षनीयं निरवपन् । तदपद्रुत्यातन्वत । तन्पत्नीसंयाजान्त उपानयन् ४०

ते तदन्तमेव कृत्वोदद्रवन् । ते प्रायणीयमभि समारोहन् । तदपद्रुत्यातन्वत । ताञ्शंय्वन्त उपानयन् । ते तदन्तमेव कृत्वोदद्रवन् । त आतिथ्यमभि

समारोहन् । तदपद्रुत्यातन्वत । तानिडान्त उपानयन् । ते तदन्तमेव कृत्वोदद्रवन् । तस्मादेता एतदन्ता इष्टयः संतिष्ठन्ते ४१

एवँ हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते । ते देवा ऊचुः । यद्वा इदमुच्चैर्यज्ञेन चराम । तन्नोऽसुराः पाप्मानुविन्दन्ति । उपाँशूपसदा चराम । तथा नोऽसुराः पाप्मा नानुवेत्स्यन्तीति । त उपाँशूपसदमतन्वत । तिस्र एव सामिधेनीरनूच्य ४२

स्रुवेणाघारमाघार्य । तिस्रः पराचीराहुतीर्हुत्वा । स्रुवेणोपसदं जुहवाञ्चक्रुः । उग्रं वचो अपावधीं त्वेषं वचो अपावधीँ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतँ ह वाव तच्चतुर्धाविहितं पाप्मानं देवा अपजघ्निरे । तथो एवैतदेवंविद्यजमानः । तिस्र एव सामिधेनीरनूच्य । स्रुवेणाघारमाघार्य ४३

तिस्रः पराचीराहुतीर्हुत्वा । स्रुवेणोपसदं जुहोति । उग्रं वचो अपावधीं त्वेषं वचो अपावधीँ स्वाहेति । अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः । एतमेव तच्चतुर्धाविहितं पाप्मानं यजमानोऽपहते । तेऽभिनीयैवाहः पशुमालभन्त । अह्न एव तद्देवा अवर्तिं पाप्मानं मृत्युमपजघ्निरे । तेनाभिनीयेव रात्रेः प्राचरन् । रात्रिया एव तद्देवा अवर्तिं पाप्मानं मृत्युमपजघ्निरे ४४

तस्मादभिनीयैवाहः पशुमालभेत । अह्न एव तद्यजमानोऽवर्तिं पाप्मानं भ्रातृव्यानपनुदते । तेनाभिनीयेव रात्रेः प्रचरेत् । रात्रिया एव तद्यजमानोऽवर्तिं पाप्मानं भ्रातृव्यानपनुदते । स एष उपवसथीयेऽहन्द्विदेवत्यः पशुरालभ्यते । द्वयं वा अस्मिँल्लोके यजमानः । अस्थि च माँसं च । अस्थि चैव तेन माँसं च यजमानः सँस्कुरुते । ता वा एताः पञ्च देवताः । अग्नीषोमावग्निर्मित्रावरुणौ ४५

पञ्चपञ्ची वै यजमानः । त्वङ्माँसँ स्नावास्थि मज्जा । एतमेव तत्पञ्चधा विहितमात्मानं वरुणपाशान्मुञ्चति । भेषजतायै निर्वरुणत्वाय । तँ सप्तभिश्छ-

न्दोभिः प्रातरह्वयन् । तस्मात्सप्त चतुरुत्तराणि छन्दाँसि प्रातरनुवाकेऽनूच्यन्ते । तमेतयोपसमेत्योपासीदन् । उपास्मै गायता नर इति । तस्मादेतया वहिष्पवमान उपसद्यः ४६

स समुद्र उत्तरतः प्राज्वलद्भूम्यन्तेन । एष वाव स समुद्रः । यच्चात्वालः । एष उ वेव स भूम्यन्तः । यद्वेद्यन्तः । तदेतत्त्रिशलं त्रिपूरुषम् । तस्मात्तं त्रिवितस्तं खनन्ति । स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । तं यदस्या अध्यजनयन् । तस्मादादित्यः ४७

अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । सास्य कौशिकता । तं त्रिवृताभि प्रास्तुवत । तं त्रिवृताददत । तं त्रिवृताहरन् । यावती त्रिवृतो मात्रा । तं पञ्चदशेनाभि प्रास्तुवत । तं पञ्चदशेनाददत । तं पञ्चदशेनाहरन् । यावती पञ्चदशस्य मात्रा ४८

तँ सप्तदशेनाभि प्रास्तुवत । तँ सप्तदशेनाददत । तँ सप्तदशेनाहरन् । यावती सप्तदशस्य मात्रा । तस्य सप्तदशेन ह्रियमाणस्य तेजो हरोऽपतत् । तमेकविँशेनाभि प्रास्तुवत । तमेकविँशेनाददत । तमेकविँशेनाहरन् । यावत्येकविँशस्य मात्रा । ते यत्त्रिवृता स्तुवते ४९

त्रिवृतैव तद्यजमानमाददते । तं त्रिवृतैव हरन्ति । यावती त्रिवृतो मात्रा । अग्निर्वै त्रिवृत् । यावद्वा अग्नेर्दहतो धूम उदेत्यानु व्येति । तावती त्रिवृतो मात्रा । अग्नेरेवैनं तत् । मात्राँ सायुज्यँ सलोकतां गमयन्ति । अथो यत्पञ्चदशेन स्तुवते । पञ्चदशेनैव तद्यजमानमाददते ५०

तं पञ्चदशेनैव हरन्ति । यावती पञ्चदशस्य मात्रा । चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते । पञ्चदश्यामापूर्यते । चन्द्रमस एवैनं तत् । मात्राँ सायुज्यँ सलोकतां गमयन्ति । अथ यत्सप्तदशेन स्तुवते । सप्तदशेनैव तद्यजमानमाददते । तँ सप्तदशेनैव हरन्ति ५१

यावती सप्तदशस्य मात्रा । प्रजापतिर्वै सप्तदशः । प्रजापतेरेवैनं तत् ।

मात्राँ सायुज्यँ सलोकतां गमयन्ति । अथ यदेकविँशेन स्तुवते । एकविँशेनैव तद्यजमानमाददते । तमेकविँशेनैव हरन्ति । यावत्येकविँशस्य मात्रा । असौ वा आदित्य एकविँशः । आदित्यस्यैवैनं तत् ५२

मात्राँ सायुज्यँ सलोकतां गमयन्ति । ते कुश्यौ । व्यघ्नन् । ते अहोरात्रे अभवताम् । अहरेव सुवर्णाभवत् । रजता रात्रिः । स यदादित्य उदेति । एतामेव तत्सुवर्णां कुशीमनु समेति । अथ यदस्तमेति । एतामेव तद्रजतां कुशीमनु संविशति । प्रह्लादो ह वै कायाधवः । विरोचनँ स्वं पुत्रमुदास्यत् । स प्रदरोऽभवत् । तस्मात्प्रदरादुदकं नाचामेत् ५३

ये वै चत्वारः स्तोमाः । कृतं तत् । अथ ये पञ्च । कलिः सः । तस्माच्चतुष्टोमः । तच्चतुष्टोमस्य चतुष्टोमत्वम् । तदाहुः । कतमानि तानि ज्योतीँषि । य एतस्य स्तोमा इति । त्रिवृत्पञ्चदशः सप्तदश एकविँशः ५४

एतानि वाव तानि ज्योतीँषि । य एतस्य स्तोमाः । सोऽब्रवीत् । सप्तदशेन ह्रियमाणो व्यलेशिषि । भिषज्यत मेति । तमश्विनौ धानाभिरभिषज्यताम् । पूषा करम्भेण । भारती परिवापेण । मित्रावरुणौ पयस्यया । तदाहुः ५५

यदश्विभ्यां धानाः । पूष्णः करम्भः । भारत्यै परिवापः । मित्रावरुणयोः पयस्याथ । कस्मादेतेषाँ हविषामिन्द्रमेव यजन्तीति । एता ह्येनं देवता इति ब्रूयात् । एतैर्हविर्भिरभिषज्यँस्तस्मादिति । तं वसवोऽष्टाकपालेन प्रातःसवनेऽभिषज्यन् । रुद्रा एकादशकपालेन माध्यन्दिने सवने । विश्वे देवा द्वादशकपालेन तृतीयसवने ५६

स यदष्टाकपालान्प्रातःसवने कुर्यात् । एकादश कपालान्माध्यन्दिने सवने । द्वादशकपालाँस्तृतीयसवने । विलोम तद्यज्ञस्य क्रियेत । एकादशकपालानेव प्रातःसवने कुर्यात् । एकादशकपालान्माध्यन्दिने सवने । एकादशकपालाँस्तृतीयसवने । यज्ञस्य सलोमत्वाय । तदाहुः । यद्वसूनां प्रातःसवनम् । रुद्राणां माध्यन्दिनँ सवनम् । विश्वेषां देवानां तृतीयसवनम्

। अथ कस्मादेतेषाँ हविषामिन्द्रमेव यजन्तीति । एता ह्येनं देवता इति ब्रूयात् । एतैर्हविर्भिरभिषज्यँस्तस्मादिति ५७

तस्यावाचोऽवपादादबिभयुः । तमेतेषु सप्तसु छन्दःस्वश्रयन् । यदश्रयन् । तच्छ्रायन्तीयस्य श्रायन्तीयत्वम् । यदवारयन् । तद्वारवन्तीयस्य वारवन्तीयत्वम् । तस्यवाच एवावपादादबिभयुः । तस्मा एतानि सप्त चतुरुत्तराणि छन्दाँस्युपादधुः । तेषामति त्रीण्यरिच्यन्त । न त्रीण्युदभवन् ५८

स बृहतीमेवास्पृशत् । द्वाभ्यामक्षराभ्याम् । अहोरात्राभ्यामेव । तदाहुः । कतमा सा देवाक्षरा बृहती । यस्यां तत्प्रत्यतिष्ठत् । द्वादश पौर्णमास्यः । द्वादशाष्टकाः । द्वादशामावास्याः । एषा वाव सा देवाक्षरा बृहती ५९

यस्यां तत्प्रत्यतिष्ठदिति । यानि च छन्दाँस्यत्यरिच्यन्त । यानि च नोदभवन् । तानि निर्वीर्याणि हीनान्यमन्यन्त । साब्रवीद्बृहती ।मामेव भूत्वा । मामुप सँश्रयतेति । चतुर्भिरक्षरैरनुष्टुग्बृहतीं नोदभवत् । चतुर्भिरक्षरैः पङ्क्तिर्बृहती-मत्यरिच्यत । तस्यामेतानि चत्वार्यक्षराण्यपच्छिद्यादधात् ६०

ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । अष्टाभिरक्षरैरुष्णिग्बृहतीं नोदभवत् । अष्टाभिरक्षरैस्त्रिष्टुग्बृहतीमत्यरिच्यत । तस्यामेतान्यष्टावक्षरा-ण्यपच्छिद्यादधात् । ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । द्वाद-शभिरक्षरैर्गायत्री बृहतीं नोदभवत् । द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत । तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात् ६१

ते बृहती एव भूत्वा । बृहतीमुप समश्रयताम् । सोऽब्रवीत्प्रजापतिः । छन्दाँसि रथो मे भवत । युष्माभिरहमेतमध्वानमनु संचराणीति । तस्य गायत्री च जगती च पक्षावभवताम् । उष्णिक्च त्रिष्टुप्च प्रष्ट्यौ । अनुष्टुप्च पङ्क्तिश्च धुर्यौ । बृहत्येवोद्धिरभवत् । स एतं छन्दोरथमास्थाय । एतमध्वा-नमनु समचरत् । एतँ ह वै छन्दोरथमास्थाय । एतमध्वानमनु संचरति । येनैष एतत्संचरति । य एवं विद्वान्सोमेन यजते । य उ चैनमेवं वेद

६२ ५

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चः शम्याया अवशीयन्ते । तन्नैर्ऋतमेककपालम् । इयं वा अनुमतिः । इयं निर्ऋतिः । नैर्ऋतेन पूर्वेण प्रचरति । पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते । एककपालो भवति । एकधैव निर्ऋतिं निरवदयते । यदहुत्वा गार्हपत्य ईयुः १

रुद्रो भूत्वाग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । वीहि स्वाहाहुतिं जुषाण इत्याह । आहुत्यैवैनँ शमयति । नार्तिमार्च्छत्यध्वर्युर्न यजमानः । एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम् । इमां दिशम्यन्ति । एषा वै निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतिं निरवदयते २

स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवायतने निर्ऋतिं निरवदयते । एष ते निर्ऋते भाग इत्याह । निर्दिशत्येवैनाम् । भूते हविष्मत्यसीत्याह । भूतिमेवोपावर्तते । मुञ्चेममँहस इत्याह । अँहस एवैनं मुञ्चति । अङ्गुष्ठाभ्यां जुहोति ३

अन्तत एव निर्ऋतिं निरवदयते । कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निर्ऋत्यै रूपम् । रूपेणैव निर्ऋतिं निरवदयते । अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै । स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति । आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते । आनुमतेन प्रचरति । इयं वा अनुमतिः ४

इयमेवास्मै राज्यमनुमन्यते । धेनुर्दक्षिणा । इमामेव धेनुं कुरुते । आदित्यं चरुं निर्वपति । उभयीष्वेव प्रजास्वभिषिच्यते । दैवीषु च मानुषीषु च । वरो दक्षिणा । वरो हि राज्यँ समृद्ध्यै । आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निः सर्वा देवताः ५

विष्णुर्यज्ञः । देवताश्चैव यज्ञं चावरुन्धे । वामनो वही दक्षिणा । यद्वही । तेनाग्नेयः । यद्वामनः । तेन वैष्णवः समृद्ध्यै । अग्नीषोमयमेकादश-

कपालं निर्वपति । अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति । यदग्नीषोमीयमे-
कादशकपालं निर्वपति ६

वार्त्रघ्नमेव विजित्यै । हिरण्यं दक्षिणा समृद्ध्यै । इन्द्रो वृत्रँ हत्वा ।
देवताभिश्चेन्द्रियेण च व्यार्ध्यत । स एतमैन्द्राग्नमेकादशकपालमपश्यत् ।
तं निरवपत् । तेन वै स देवताश्चेन्द्रियं चावारुन्ध । यदैन्द्राग्नमेकादशकपालं
निर्वपति । देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्धे । ऋषभो वही दक्षिणा
७

यद्वही ।तेनाग्नेयः । यदृषभः । तेनाइन्द्रः समृद्ध्यै । आग्नेयमष्टाकपालं
निर्वपति । ऐन्द्रं दधि । यदाग्नेयो भवति । अग्निर्वै यज्ञमुखम् । यज्ञमुख-
मेवर्द्धिं पुरास्ताद्धत्ते । यदैन्द्रं दधि ८

इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा । यद्वही ।तेनाग्नेयः । यदृषभः
। तेनाइन्द्रः समृद्ध्यै । यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः
पराभवन् । आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ९

देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नं
द्वादशकपालं निरवृणाताम् । यदैन्द्राग्नो भवत्युज्जित्यै । द्वादशकपालो भवति
। द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वैश्वदेवश्चरु-
र्भवति । वैश्वदेवं वा अन्नम् । अन्नमेवास्मै स्वदयति १०

प्रथमजो वत्सो दक्षिणा समृद्ध्यै । सौम्यँ श्यामाकं चरुं निर्वपति । सोमो
वा अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै स्वदयति । वासो दक्षिणा
। सौम्यँ हि देवतया वासः समृद्ध्यै । सरस्वत्यै चरुं निर्वपति । सरस्वते
चरुम् । मिथुनमेवावरुन्धे । मिथुनौ गावौ दक्षिणा समृद्ध्यै । एति वा
एष यज्ञमुखादृद्ध्याः । योऽग्नेर्देवताया एति । अष्टावेतानि हवींषि भवन्ति
। अष्टाक्षरा गायत्री ।गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति
११

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्ट न प्राजायन्त । सोऽग्नि-रकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये । शुचमदधात् । सोऽशोचत्प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं च न । तावुभौ शोचतः प्रजामिच्छमानौ । तास्वग्निमप्यसृजत् । ता अग्निरध्यैत् १२

सोमो रेतोऽदधात् । सविता प्राजनयत् । सरस्वती वाचमदधात् । पूषा-पोषयत् । ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते । ये देवाः पुष्टिपतयः । संवत्सरो वै प्रजापतिः । संवत्सरेणैवास्मै प्रजाः प्राजनयत् । ताः प्रजा जाता मरुतोऽघ्नन् । अस्मानपि न प्रायुक्षतेति १३

स एतं प्रजापतिर्मारुतँ सप्तकपालमपश्यत् । तं निरवपत् । ततो वै प्रजा-भ्योऽकल्पत । यन्मारुतो निरुप्यते । यज्ञस्य क्लृप्त्यै । प्रजानामघाताय । सप्तकपालो भवति । सप्तगणा वै मरुतः । गणश एवास्मै विशं कल्पयति । स प्रजापतिरशोचत् १४

याः पूर्वाः प्रजा असृक्षि । मरुतस्ता अवधिषुः । कथमपराः सृजेयेति । तस्य शुष्म आण्डं भूतं निरवर्तत । तद्व्युदहरत् । तदपोषयत् । तत्प्राजायत । आण्डस्य वा एतद्रूपम् । यदामिक्षा । यद्व्युद्धरति १५

प्रजा एव तद्यजमानः पोषयति । वैश्वदेव्यामिक्षा भवति । वैश्वदेव्यो वै प्रजाः । प्रजा एवास्मै प्रजनयति । वाजिनमानयति । प्रजास्वेव प्रजातासु रेतो दधाति । द्यावापृथिव्य एककपालो भवति । प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति । देवासुराः संयत्ता आसन् । सोऽग्नि-रब्रवीत् १६

मामग्रे यजत । मया मुखेनासुराञ्जेष्यथेति । मां द्वितीयमिति सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मां तृतीयमिति सविता । मया प्रसूता जेष्यथेति । मां चतुर्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति १७

तेऽग्निना मुखेनासुरानजयन् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्व-तीन्द्रियमदधात् । पूषा प्रतिष्ठासीत् । ततो वै देवा व्यजयन्त । यदेतानि हवींषि निरुप्यन्ते विजित्यै । नोत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः १८

त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बं गर्भो जरायु । तदेव तन्मिथुनम् । त्रेधा बर्हिः संनद्धं भवति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । एकधा पुनः संनद्धं भवति । एक इव ह्ययं लोकः १९

अस्मिन्नेव तेन लोके प्रतितिष्ठति । प्रसुवो भवन्ति । प्रथमजामेव पुष्टिमवरुन्धे । प्रथमजो वत्सो दक्षिणा समृद्ध्यै । पृषदाज्यं गृह्णाति । पशवो वै पृषदाज्यम् । पशूनेवावरुन्धे । पञ्चगृहीतं भवति । पाङ्क्ता हि पशवः । बहुरूपं भवति २०

बहुरूपा हि पशवः समृद्ध्यै । अग्निं मन्थन्ति । अग्निमुखा वै प्रजापतिः प्रजा असृजत । यदग्निं मन्थन्ति । अग्निमुखा एव तत्प्रजा यजमानः सृजते । नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवींषि । द्वावाघारौ । द्वावाज्यभागौ २१

त्रिँशत्संपद्यन्ते । त्रिँशदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । यजमानो वा एककपालः । तेज आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा एककपालः । पशव आज्यम् २२

यदेककपाल आज्यमानयति । यजमानमेव पशुभिः समर्धयति । यदल्पमानयेत् । अल्पा एनं पशवो भुञ्जन्त उपतिष्ठेरन् । यद्बह्वानयेत् । बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन् । बह्वानीयाविः पृष्ठं कुर्यात् । बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते । यजमानो वा एककपालः । यदेककपालस्यावद्येत् २३

यजमानस्यावद्येत् । उद्वा मद्येद्यजमानः । प्र वा मीयेत । सकृदेव होतव्यः । सकृदिव हि सुवर्गो लोकः । हुत्वाभिजुहोति । यजमानमेव सुवर्गं लोकं गमयित्वा । तेजसा समर्धयति । यजमानो वा एककपालः । सुवर्गो लोक आहवनीयः २४

यदेककपालमाहवनीये जुहोति । यजमानमेव सुवर्गं लोकं गमयति । यद्धस्तेन जुहुयात् । सुवर्गाल्लोकाद्यजमानमवविध्येत् । स्रुचा जुहोति । सुवर्गस्य लोकस्य समष्ट्यै । यत्प्राङ्पद्येत । देवलोकमभिजयेत् । यद्दक्षिणा पितृलोकम् । यत्प्रत्यक् २५

रक्षाँसि यज्ञँ हन्युः । यदुदङ्। मनुष्यलोकमभिजयेत् । प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनु प्रतितिष्थतः । द्यावापृथिवी ऋतवः । ऋतून्यज्ञः । यज्ञं यजमानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः २६

वाजिनो यजति । अग्निर्वायुः सूर्यः । ते वै वाजिनः । तनेव तद्यजति । अथो खल्वाहुः । छन्दाँसि वै वाजिन इति । तान्येव तद्यजति । ऋक्सामे वा इन्द्रस्य हरी सोमपानौ । तयोः परिधय आधानम् । वाजिनं भागधेयम् २७

यदप्रहृत्य परिधीञ्जुहुयात् । अन्तराधानाभ्यां घासं प्रयच्छेत् । प्रहृत्य परिधीञ्जुहोति । निराधानाभ्यामेव घासं प्रयच्छति । बर्हिषि विषिञ्चन्वाजिनमानयति । प्रजा वै बर्हिः । रेतो वाजिनम् । प्रजास्वेव रेतो दधाति । समुपहूय भक्षयन्ति । एतत्सोमपीथा ह्येते । अथो आत्मन्नेव रेतो दधते । यजमान उत्तमो भक्षयति । पशवो वै वाजिनम् । यजमान एव पशून्प्रतिष्ठापयन्ति २८

प्रजापतिः सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः । स एतान्प्रजापतिर्वरुणप्रघासा-

नपश्यत् । तान्निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् । यद्वरुणप्रघासा निरुप्यन्ते २९

प्रजानामवरुणग्राहाय । तासां दक्षिणो बाहुर्न्यक्न आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत् । यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । तस्माच्चातुर्मास्ययाज्य-मुष्मिँल्लोक उभयाबाहुः । यज्ञाभिजितँ ह्यस्य । पृथमात्राद्वेदी असंभिन्ने भवतः ३०

तस्मात्पृथमात्रं व्यँसौ । उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । पशूनेवावरुन्धे । अथो यज्ञपरुषोऽनन्तरित्यै । एतद्ब्राह्मणान्येव पञ्च हवींषि । अथैष ऐन्द्राग्नो भवति । प्राणापानौ वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति ३१

प्राणापानावेवावरुन्धे । ओजो बलं वा एतौ देवानाम् । यदिन्द्राग्नी ।यदैन्द्राग्नो भवति । ओजो बलमेवावरुन्धे । मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति । लोमशौ भवतो मेध्यत्वाय ३२

शमीपर्णान्युपवपति । घासमेवाभ्यामपियच्छति । प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषान्नाद्यमवारुन्ध । यत्परःशतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति । यत्करीराणि भवन्ति । सौम्ययैवाहुत्या दिवो वृष्टिमवरुन्धे । काय एककपालो भवति । प्रजानं कन्त्वाय । प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति ३३

उत्तरस्यां वेद्यामन्यानि हवींषि सादयति । दक्षिणायां मारुतीम् । अपधुर-मेवैनां युनक्ति । अथो ओज एवासामवहरति । तस्माद्ब्रह्मणश्च क्षत्राच्च विशोऽन्यतोऽपक्रमिणीः । मारुत्या पूर्वया प्रचरति । अनृतमेवावयजते ।

देवा अहुतमादन् । ते पराभवन् । त एतदग्निहोत्रँ सर्वस्यैव समवदायाजुहवुः । तस्मादाहुः । अग्निहोत्रं वै द्वा गृहाणां निष्कृतिमपश्यन्निति । यत्सायं जुहोति । रात्रिया एव तद्धुताद्याय ३६

यजमानस्यापराभावाय । यत्प्रातः । अह्न एव तद्धुताद्याय । यजमानस्यापराभावाय । यत्ततोऽश्नाति । हुतमेव तत् । द्वयोः पयसा जुहुयात्पशुकामस्य । एतद्वा अग्निहोत्रं मिथुनम् । य एवं वेद । प्र प्रजया पशुभिर्मिथुनैर्जायते ३७

इमामेव पूर्वया दुहे । अमूमुत्तरया । अधिश्रित्योत्तरमानयति । योनावेव तद्रेतः सिञ्चति प्रजनने । आज्येन जुहुयात्तेजस्कामस्य । तेजो वा आज्यम् । तेजस्व्येव भवति । पयसा पशुकामस्य । एतद्वै पशूनाँ रूपम् । रूपेणैवास्मै पशूनवरुन्धे ३८

पशुमानेव भवति । दध्नेन्द्रियकामस्य । इन्द्रियं वै दधि । इन्द्रियाव्येव भवति । यवाग्वा ग्रामकामस्यौषधा वै मनुष्याः । भागधेयेनैवास्मै सजातानवरुन्धे । ग्राम्येव भवति । अयज्ञो वा एषः । योऽसामा ३९

चतुरुन्नयति । चतुरक्षरँ रथंतरम् । रथन्तरस्यैष वर्णः । उपरीव हरति । अन्तरिक्षं वामदेव्यम् । वामदेव्यस्यैष वर्णः । द्विर्जुहोति । द्व्यक्षरं बृहत् । बृहत एष वर्णः । अग्निहोत्रमेव तत्सामन्वत्करोति ४०

यो वा अग्निहोत्रस्योपसदो वेद । उपैनमुपसदो नमन्ति । विन्दत उपसत्तारम् । उन्नीयोपसादयति । पृथिवीमेव प्रीणाति । होष्यन्नुपसादयति । अन्तरिक्षमेव प्रीणाति । हुत्वोपसादयति । दिवमेव प्रीणाति । एता वा अग्निहोत्रस्योपसदः ४१

य एवं वेद । उपैनमुपसदो नमन्ति । विन्दत उपसत्तारम् । यो वा अग्निहोत्रस्याश्रावितं प्रत्याश्रावितँ होतारं ब्रह्माणं वषट्कारं वेद । तस्य त्वेव हुतम् । प्राणो वा अग्निहोत्रस्याश्रावितम् । अपानः प्रत्याश्रावितम् । मनो

होता । चक्षुर्ब्रह्मा । निमेषो वषट्कारः ४२

य एवं वेद । तस्य त्वेव हुतम् । सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति । तान्यन्न तर्पयेत् । प्रजयास्य पशुभिर्वितिष्ठेरन् । यत्तर्पयेत् । तृप्ता एनं प्रजया पशुभिस्तर्पयेयुः । सजूर्देवैः सायं यावभिरिति सायँ संमृशति । सजूर्देवैः प्रातर्यावभिरिति प्रातः । ये चैव देवाः सायंयावानो ये च प्रातर्यावाणः ४३

तानेवोभयाँस्तर्पयति । त एनं तृप्ताः प्रजया पशुभिस्तर्पयन्ति । अरुणो ह स्माहाउपवेशिः । अग्निहोत्र एवाहँ सायंप्रातर्वज्रं भ्रातृव्येभ्यः प्रहरामि । तस्मान्मत्पापीयाँसो भ्रातृव्या इति । चतुरुन्नयति । द्विर्जुहोति । समित्सप्तमी ।सप्तपदा शक्वरी ।शाक्वरो वज्रः । अग्निहोत्र एव तत्सायंप्रातर्वज्रं यजमानो भ्रातृव्याय प्रहरति । भवत्यात्मना । परास्य भ्रातृव्यो भवति ४४

प्रजापतिरकामयतात्मन्वन्मे जायेतेति । सोऽजुहोत् । तस्यात्मन्वदजायत । अग्निर्वायुरादित्यः । तेऽब्रुवन् । प्रजापतिरहौषीदात्मन्वन्मे जायेतेति । तस्य वयमजनिष्महि । जायतां न आत्मन्वदिति तेऽजुहवुः । प्राणानामग्निः । तनुवै वायुः ४५

चक्षुष आदित्यः । तेषाँ हुतादजायत गौरेव । तस्यै पयसि व्यायच्छन्त । मम हुतादजनि ममेति । ते प्रजापतिं प्रश्नमायन् । स आदित्योऽग्निमब्रवीत् । यतरो नौ जयात् । तन्नौ सहासदिति । कस्यैकोऽहौषीदिति प्रजापतिरब्रवीत्कस्यैक इति । प्राणानामहमित्यग्निः ४६

तनुवा अहमिति वायुः । चक्षुषोऽहमित्यादित्यः । य एव प्राणानामहौषीत् । तस्य हुतादजनीति । अग्नेर्हुतादजनीति । तदग्निहोत्रस्याग्निहोत्रत्वम् । गौर्वा आग्निहोत्रम् । य एवं वेद गौरग्निहोत्रमिति । प्राणापानाभ्यामेवाग्निँ समर्धयति । अव्यर्धुकः प्राणापानाभ्यां भवति ४७

य एवं वेद । तौ वायुरब्रवीत् । अनु माभजतमिति । यदेव गार्हप-

त्येऽधिश्रित्याहवनीयमभ्युद्द्रवान् । तेन त्वां प्रीणानित्यब्रूताम् । तस्माद्य-द्गार्हपत्येऽधिश्रित्याहवनीयमभ्युद्द्रवति । वायुमेव तेन प्रीणाति । प्रजाप-तिर्देवताः सृजमानः । अग्निमेव देवतानां प्रथममसृजत । सोऽन्यदाल-म्भ्यमवित्त्वा ४८

प्रजापतिमभि पर्यावर्तत । स मृत्योरबिभेत् । सोऽमुमादित्यमात्मनो निरमिमीत । तँ हुत्वा पराङ्पर्यावर्तत । ततो वै स मृत्युमपाजयत् । अप मृत्युं जयति । य एवं वेद । तस्माद्यस्यैवं विदुषः । उतैकाहमुत द्व्यहं न जुह्वति । हुतमेवास्य भवति । असौ ह्यादित्योऽग्निहोत्रम् ४९

रौद्रं गवि । वायव्यमुपसृष्टम् । आश्विनं दुह्यमानम् । सौम्यं दुग्धम् । वारुणमधिश्रितम् । वैश्वदेवा भिन्दवः । पौष्णमुदन्तम् । सारस्वतं विष्यन्दमानम् । मैत्रँ शरः । धातुरुद्वासितम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यँ ह्रियमाणम् । ऐन्द्राग्नमुपसन्नम् । अग्नेः पूर्वाहुतिः । प्रजापतेरुत्तरा । ऐन्द्रँ हुतम् ५०

दक्षिणत उपसृजति । पितृलोकमेव तेन जयति । प्राचीमावर्तयति । देव-लोकमेव तेन जयति । उदीचीमाव्रत्य दोग्धि । मनुष्यलोकमेव तेन जयति । पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य । यो वा गतश्रीः स्यात् । अपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य । यो वा बुभूषेत् ५१

न संमृशति । पापवस्यसस्य व्यावृत्त्यै । वायव्यं वा एतदुपसृष्टम् । आश्विनं दुह्यमानम् । मैत्रं दुग्धम् । अर्यम्ण उद्वास्यमानम् । त्वाष्ट्रमुन्नीयमानम् । बृहस्पतेरुन्नीतम् । सवितुः प्रक्रान्तम् । द्यावापृथिव्यँ ह्रियमाणम् ५२

ऐन्द्राग्नमुपसादितम् । सर्वाभ्यो वा एष देवताभ्यो जुहोति । योऽग्निहोत्रं जुहोति । यथा खलु वै धेनुं तीर्थे तर्पयति । एवमग्निहोत्री यजमानं तर्पयति । तृप्यति प्रजया पशुभिः । प्र सुवर्गं लोकं जानाति । पश्यति पुत्रम् । पश्यति पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ५३

त्रयो वै प्रैयमेधा आसन् । तेषां त्रिरेकोऽग्निहोत्रमजुहोत् । द्विरेकः । सकृदेकः । तेषां यस्त्रिरजुहोत् । स ऋचाजुहोत् । यो द्विः । स यजुषा । यः सकृत् । स तूष्णीम् ५४

यश्च यजुषाजुहोद्यश्च तूष्णीम् । तावुभावार्ध्नुताम् । तस्माद्यजुषाहुतिः पूर्वा होतव्या । तूष्णीमुत्तरा । उभे एवर्द्धी अवरुन्धे । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । रेत एव तद्दधाति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । रेत एव हितं प्रजनयति । रेतो वा एतस्य हितं न प्रजायते ५५

यस्याग्निहोत्रमहुतँ सूर्योऽभ्युदेति । यद्यन्ते स्यात् । उन्नीय प्राङुदाद्रवेत् । स उपसाद्यातमितोरासीत । स यदाताम्येत् । अथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भूतः । तमेवोपासरत् । स एवैनं तत उन्नयति । नार्तिमार्च्छति यजमानः ५६

यदग्निमुद्धरति । वसवस्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । वसुष्वेवास्याग्निहोत्रँ हुतं भवति । निहितो धूपायञ्शेते । रुद्रास्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । रुद्रेष्वेवास्याग्निहोत्रँ हुतं भवति । प्रथममिध्ममर्चिरालभते । आदित्यास्तर्ह्यग्निः ५७

तस्मिन्यस्य तथाविधे जुह्वति । आदित्येष्वेवास्याग्निहोत्रँ हुतं भवति । सर्व एव सर्वश इध्म आदीप्तो भवति । विश्वे देवास्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । विश्वेष्वेवास्य देवेष्वग्निहोत्रँ हुतं भवति । नितरामर्चिरुपावैति लोहिनीकेव भवति । इन्द्रस्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । इन्द्र एवास्याग्निहोत्रँ हुतं भवति ५८

अङ्गारा भवन्ति । तेभ्योऽङ्गारेभ्योऽर्चिरुदेति । प्रजापतिस्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । प्रजापतावेवास्याग्निहोत्रँ हुतं भवति । शरोऽङ्गारा अध्यूहन्ते । ब्रह्म तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति । ब्रह्मन्नेवास्याग्निहोत्रँ हुतं भवति । वसुषु रुद्रेष्वादित्येषु विश्वेषु देवेषु । इन्द्रे

प्रजापतौ ब्रह्मन् । अपरिवर्गमेवास्यैतासु देवतासु हुतं भवति । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ५९

ऋृतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । अग्निर्वा ऋृतम् । असावादित्यः सत्यम् । अग्निमेव तदादित्येन सायं परिषिञ्चति । अग्निनादित्यं प्रातः सः । यावदहोरात्रे भवतः । तावदस्य लोकस्य । नार्तिर्न ऋृष्टिः । नान्तो न पर्यन्तोऽस्ति । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ६० १

प्रजापतिरकामयत प्रजाः सृजेयेति । स एतं दशहोतारमपश्यत् । तं मनसानुद्रुत्य दर्भस्तम्बेऽजुहोत् । ततो वै स प्रजा असृजत । ता अस्मात्सृष्टा अपाक्रामन् । ता ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । यः कामयेत प्रजायेयेति । स दशहोतारं मनसानुद्रुत्य दर्भस्तम्बे जुहुयात् । प्रजापतिर्वै दशहोता १

प्रजापतिरेव भूत्वा प्रजायते । मनसा जुहोति । मन इव हि प्रजापतिः । प्रजापतेराप्त्यै । पूर्णया जुहोति । पूर्ण इव हि प्रजापतिः । प्रजापतेराप्त्यै । न्यूनया जुहोति । न्यूनाद्धि प्रजापतिः प्रजा असृजत । प्रजानाँ सृष्ट्यै २

दर्भस्तम्बे जुहोति । एतस्माद्वै योनेः प्रजापतिः प्रजा असृजत । यस्मादेव योनेः प्रजापतिः प्रजा असृजत । तस्मादेव योनेः प्र जायते । ब्राह्मणो दक्षिणत उपास्ते । ब्राह्मणो वै प्रजानामुपद्रष्टा । उपद्रष्टुमत्येव प्रजायते । ग्रहो भवति । प्रजानाँ सृष्टानां धृत्यै । यं ब्राह्मणं विद्यां विद्वाँसं यशो नर्च्छेत् ३

सोऽरण्यं परेत्य । दर्भस्तम्बमुद्ग्रथ्य । ब्राह्मणं दक्षिणतो निषद्य । चतुर्होतृन्व्याचक्षीत । एतद्वै देवानां परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । तदेव प्रकाशं गमयति । तदेनं प्रकाशं गतम् । प्रकाशं प्रजानां गमयति । दर्भस्तम्बमुद्ग्रथ्य व्याचष्टे ४

अग्निवान्वै दर्भस्तम्बः । अग्निवत्येव व्याचष्टे । ब्राह्मणो दक्षिणत उपास्ते

। ब्राह्मणो वै प्रजानामुपद्रष्टा । उपद्रष्टुमत्येवैनं यश ऋच्छति । ईश्वरं तं यशोऽर्तोरित्याहुः । यस्यां ते व्याचष्ट इति । वरस्तस्मै देयः । यदेवैनं तत्रोपनमति । तदेवावरुन्धे ५

अग्निमादधानो दशहोत्रारणिमवदध्यात् । प्रजातमेवैनमाधत्ते । तेनैवोद्द्रुत्याग्निहोत्रं जुहुयात् । प्रजातमेवैनञ्जुहोति । हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत । प्रजातमेवैनं निर्वपति । सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीत । सामिधेनिरेव सृष्ट्वारभ्य प्रतनुते । अथो यज्ञो वै दशहोता । यज्ञमेव तनुते ६

अभिचरन्दशहोतारं जुहुयात् । नव वै पुरुषे प्राणाः । नाभिर्दशमी ।सप्राणमेवैनमभिचरति । एतावद्वै पुरुषस्य स्वम् । यावत्प्राणाः । यावदेवास्यास्ति । तदभिचरति । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वा अस्यै निर्ऋतिगृहीतम् । निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति । यद्वाचः क्रूरम् । तेन वषट्करोति । वाच एवैनं क्रूरेण प्रवृश्चति । ता जगार्तिमार्च्छति ७

प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति । स एतं चतुर्होतारमपश्यत् । तं मनसानुद्रुत्याहवनीयेऽजुहोत् । ततो वै स दर्शपूर्णमासावसृजत । तावस्मात्सृष्टावपाक्रामताम् । तौ ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । दर्शपूर्णमासावालभमानः । चतुर्होतारं मनसानुद्रुत्याहवनीये जुहुयात् । दर्शपूर्णमासावेव सृष्ट्वारभ्य प्रतनुते ८

ग्रहो भवति । दर्शपूर्णमासयोः सृष्टयोर्धृत्यै । सोऽकामयत चातुर्मास्यानि सृजेयेति । स एतं पञ्चहोतारमपश्यत् । तं मनसानुद्रुत्याहवनीयेऽजुहोत् । ततो वै स चातुर्मास्यान्यसृजत । तान्यस्मात्सृष्टान्यपाक्रामन् । तानि ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । चातुर्मास्यान्यालभमानः ९

पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहुयात् । चातुर्मास्यान्येव सृष्ट्वारभ्य प्रतनुते । ग्रहो भवति । चातुर्मास्यानाँ सृष्टानां धृत्यै । सोऽकामयत पशुबन्धँ

सृजेयेति । स एतँ षड्ढोतारमपश्यत् । तं मन्सानुद्रुत्याहवनीयेऽजुहोत् । ततो वै स पशुबन्धमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तं ग्रहेणागृह्णात् १०

तद्ग्रहस्य ग्रहत्वम् । पशुबन्धेन यक्ष्यमाणः । षड्ढोतारं मनसानुद्रुत्याहवनीये जुहुयात् । पशुबन्धमेव सृष्ट्वारभ्य प्रतनुते । ग्रहो भवति । पशुबन्धस्य सृष्टस्य धृत्यै । सोऽकामयत सौम्यमध्वरँ सृजेयेति । स एतँ सप्तहोतारमपश्यत् । तं मनसानुद्रुत्याहवनीयेऽजुहोत् । ततो वै स सौम्यमध्वरमसृजत ११

सोऽस्मात्सृष्टोऽपाक्रामत् । तं ग्रहेणागृह्णात् । तद्ग्रहस्य ग्रहत्वम् । दीक्षिष्यमाणः । सप्तहोतारं मनसानुद्रुत्याहवनीये जुहुयात् । सौम्यमेवाध्वरँ सृष्ट्वारभ्य प्रतनुते । ग्रहो भवति । सौम्यस्याध्वरस्य सृष्टस्य धृत्यै । देवेभ्यो वै यज्ञो न प्राभवत् । तमेतावच्छस्समभरन् १२

यत्संभाराः । ततो वै तेभ्यो यज्ञः प्राभवत् । यत्संभारा भवनि । यज्ञस्य प्रभूत्यै । आतिथ्यमासाद्य व्याचष्टे । यज्ञमुखं वा आतिथ्यं ।मुखत एव यज्ञँ संभृत्य प्रतनुते । अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः । पत्नीर्व्याचष्टे । यज्ञमेवाकः । प्रजानां प्रजननाय । उपसत्सु व्याचष्टे । एतद्वै पत्नीनामायतनम् । स्व एवैना आयतनेऽवकल्पयति १३

प्रजापतिरकामयत प्रजायेयेति । स तपोऽतप्यत । स त्रिवृतँ स्तोममसृजत । तं पञ्चदशस्तोमो मध्यत उदतृणत् । तौ पूर्वपक्षश्चापरपक्षश्चाभवताम् । पूर्वपक्षं देवा अन्वसृज्यन्त । अपरपक्षमन्वसुराः । ततो देवा अभवन् । परासुराः । यं कामयेत वसीयान्त्स्यादिति १४

तं पूर्वपक्षे याजयेत् । वसीयानेव भवति । यं कामयेत पापीयान्त्स्यादिति । तमपरपक्षे याजयेत् । पापीयानेव भवति । तस्मात्पूर्वपक्षोऽपरपक्षात्करुण्यतरः । प्रजापतिर्वै दशहोता । चतुर्होता पञ्चहोता । षड्ढोता सप्तहोता । ऋतवः संवत्सरः १५

प्रजाः पशव इमे लोकाः । य एवं प्रजापतिं बहोर्भूयाँसं वेद । बहोरेव भूयान्भवति । प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत । तं देवा अब्रुवन् । इन्द्रं नो जनयेति । सोऽब्रवीत् । यथाहं युष्माँस्तपसासृक्षि । एवमिन्द्रं जनयध्वमिति १६

ते तपोऽतप्यन्त । त आत्मन्निन्द्रमपश्यन् । तमब्रुवन् । जायस्वेति । सोऽब्रवीत् । किम्भागधेयमभिजनिष्य इति । ऋतून्त्संवत्सरम् । प्रजाः पशून् । इमाँल्लोकानित्यब्रुवन् । तं वै माहुत्या प्रजनयतेत्यब्रवीत् १७

तं चतुर्होत्रा प्राजनयन् । यः कामयेत वीरो म आजायेतेति । स चतुर्होतारं जुहुयात् । प्रजापतिर्वै चतुर्होता । प्रजापतिरेव भूत्वा प्रजायते । जजनदिन्द्रमिन्द्रियाय स्वाहेति ग्रहेण जुहोति । आस्य वीरो जायते । वीरँ हि देवा एतयाहुत्या प्राजनयन् । आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । वयं पूर्वे सुवर्गं लोकमियाम वयं पूर्व इति १८

त आदित्या एतं पञ्चहोतारमपश्यन् । तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः । ततो वै ते पूर्वे सुवर्गं लोकमायन् । यः सुवर्गकामः स्यात् । स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात् । संवत्सरो वै पञ्चहोता । संवत्सरः सुवर्गो लोकः । संवत्सर एवर्तुषु प्रतिष्ठाय । सुवर्गं लोकमेति । तेऽब्रुवन्नङ्गिरस आदित्यान् १९

क्व स्थ । क्व वः सद्भ्यो हव्यं वक्ष्याम इति । छन्दःस्वित्यब्रुवन् । गायत्रियां त्रिष्टुभि जगत्यामिति । तस्माच्छन्दःसु सद्भ्य आदित्येभ्यः । आङ्गीरसीः प्रजा हव्यं वहन्ति । वहन्त्यस्मै प्रजा बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविँशः । एतस्मिन्वा एष श्रितः । एतस्मिन्प्रतिष्ठितः । य एवमेतँ श्रितं प्रतिष्ठितं वेद । प्रत्येव तिष्ठति २०

प्रजापतिरकामयत प्रजायेयेति । स एतं दशहोतारमपश्यत् । तेन दशधात्मानं विधाय । दशहोत्रातप्यत । तस्य चित्तिः स्रुगासीत् । चित्तमाज्यम् ।

तस्यैतावत्येव वागासीत् । एतावान्यज्ञक्रतुः । स चतुर्होतारमसृजत । सोऽनन्दत् २१

असृक्षि वा इममिति । तस्य सोमो हविरासित् । स चतुर्होत्रातप्यत । सोऽताम्यत् । स भूरिति व्याहरत् । स भूमिमसृजत । अग्निहोत्रं दर्शापूर्णमासौ यजूँषि । स द्वितीयमतप्यत । सोऽताम्यत् । स भुव इति व्याहरत् २२

सोऽन्तरिक्षमसृजत । चातुर्मास्यानि सामानि । स तृतीयमतप्यत । सोऽताम्यत् । स सुवरिति व्याहरत् । स दिवमसृजत । अग्निष्टोममुक्थ्यमतिरात्रमृचः । एता वै व्याहृतय इमे लोकाः । इमान्खलु वै लोकाननु प्रजाः पशवश्छन्दाँसि प्राजायन्त । य एवमेताः प्रजापतेः प्रथमा व्याहृतीः प्रजाता वेद २३

प्र प्रजया पशुभिर्मिथुनैर्जायते । स पञ्चहोतारमसृजत । स हविर्नाविन्दत । तस्मै सोमस्तनुवं प्रायच्छत् । एतत्ते हविरिति । स पञ्चहोत्रातप्यत । सोऽताम्यत् । स प्रत्यङ्ङबाधत । सोऽसुरानसृजत । तदस्याप्रियमासीत् २४

तद्दुर्वर्णँ हिरण्यमभवत् । तद्दुर्वर्णस्य हिरण्यस्य जन्म । स द्वितीयमतप्यत । सोऽताम्यत् । स प्राङबाधत । स देवानसृजत । तदस्य प्रियमसीत् । तत्सुवर्णँ हिरण्यमभवत् । तत्सुवर्णस्य हिरण्यस्य जन्म । य एवँ सुवर्णस्य हिरण्यस्य जन्म वेद २५

सुवर्ण आत्मना भवति । दुर्वर्णोऽस्य भ्रातृव्यः । तस्मात्सुवर्णँ हिरण्यं भार्यम् । सुवर्ण एव भवति । ऐनं प्रियं गच्छति नाप्रियम् । स सप्तहोतारमसृजत । स सप्तहोत्रैव सुवर्गं लोकमैत् । त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्राणुदत । त्रयस्त्रिँशेन प्रत्यतिष्ठत् । एकविँशेन रुचमधत्त २६

सप्तदशेन प्राजायत । य एवं विद्वान्त्सोमेन यजते । सप्तहोत्रैव सुवर्गं लोकमेति । त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृव्यान्प्रणुदते । त्रयस्त्रिँशेन

प्रतितिष्ठति । एकविँशेन रुचं धत्ते । सप्तदशेन प्रजायते । तस्मात्सप्तदशः स्तोमो न निर्हृत्यः । प्रजापतिर्वै सप्तदशः । प्रजापतिमेव मध्यतो धत्ते प्रजात्यै २७

देवा वै वरुणमयाजयन् । स यस्यैयस्यै देवतायै दक्षिणामनयत् । तामव्लीनात् । तेऽब्रुवन् । व्यावृत्य प्रति गृह्णाम । तथा नो दक्षिणा न व्लेष्यतीति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तान्दक्षिणा नाव्लीनात् । य एवं विद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणा व्लीनाति २८

राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यमित्याह । आग्नेयं वै हिरण्यम् । स्वयैवैनद्देवतया प्रतिगृह्णाति । सोमाय वास इत्याह । सौम्यं वै वासः । स्वयैवैनद्देवतया प्रतिगृह्णाति । रुद्राय गामित्याह । रौद्री वै गौः । स्वयैवैनां देवतया प्रतिगृह्णाति । वरुणायाश्वमित्याह २९

वारुणो वा अश्वः । स्वयैवैनं देवतया प्रतिगृह्णाति । प्राजापतये पुरुषमित्याह । प्राजापत्यो वै पुरुषः । स्वयैवैनं देवतया प्रतिगृह्णाति । मनवे तल्पमित्याह । मानवो वै तल्पः । स्वयैवैनं देवतया प्रतिगृह्णाति । उत्तानायाङ्गीरसायान इत्याह । इयं वा उत्तान आङ्गीरसः ३०

अनयैवैनत्प्रतिगृह्णाति । वैश्वानर्यर्चा रथं प्रतिगृह्णाति । वैश्वानरो वै देवतया रथः । स्वयैवैनं देवतया प्रतिगृह्णाति । तेनामृतत्वमश्यामित्याह । अमृतमेवात्मन्धत्ते । वयो दात्र इत्याह । वय एवैनं कृत्वा । सुवर्गं लोकं गमयति । मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह ३१

यद्वै शिवम् । तन्मयः । आत्मन एवैषा परीत्तिः । क इदं कस्मा अदादित्याह । प्रजापतिर्वै कः । स प्रजापतये ददाति । कामः कामायेत्याह । कामेन हि ददाति । कामेन प्रतिगृह्णाति । कामो दाता कामः प्रतिग्रहीतेत्याह ३२

कामो हि दाता । कामः प्रतिग्रहीता । कामँ समुद्रमाविशेत्याह । समुद्र इव हि कामः । नेव हि कामस्यान्तोऽस्ति । न समुद्रस्य । कामेन त्वा

प्रतिगृह्णामीत्याह । येन कामेन प्रतिगृह्णाति । स एवैनममुष्मिँल्लोके काम आगच्छति । कामैतत्त एषा ते काम दक्षिणेत्याह । काम एव तद्यजमानोऽमुष्मिँल्लोके दक्षिणामिच्छति । न प्रतिग्रहीतरि । य एवं विद्वान्दक्षिणां प्रतिगृह्णाति । अनृणामेवैनां प्रतिगृह्णाति ३३

अन्तो वा एष यज्ञस्य । यद्दशममहः । दशमेऽहन्सर्पराज्ञिया ऋग्भिः स्तुवन्ति । यज्ञस्यैवान्तं गत्वा । अन्नाद्यमवरुन्धते । तिसृभिः स्तुवन्ति । त्रय इमे लोकाः । एभ्य एव लोकेभ्योऽन्नाद्यमवरुन्धते । पृश्निवतीर्भवन्ति । अन्नं वै पृश्नि ३४

अन्नमेवावरुन्धते । मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रतिहरति । मन इव हि प्रजापतिः । प्रजापतेराप्त्यै । देवा वै सर्पाः । तेषामियँ राज्ञी ।यत्सर्पराज्ञिया ऋग्भिः स्तुवन्ति । अस्यामेव प्रतितिष्ठन्ति ३५

चतुर्होतॄन्होता व्याचष्टे । स्तुतमनुशँसति शान्त्यै । अन्तो वा एष यज्ञस्य । यद्दशममहः । एतत्खलु वै देवानां परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । दशमेऽहँश्चतुर्होतॄन्व्याचष्टे । यज्ञस्यैवान्तं गत्वा । परमं देवानां गुह्यं ब्रह्मावरुन्धे । तदेव प्रकाशं गमयति ३६

तदेनं प्रकाशं गतम् । प्रकाशं प्रजानां गमयति । वाचं यच्छति । यज्ञस्य धृत्यै । यजमानदेवत्यं वा अहः । भ्रातृव्यदेवत्या रात्रिः । अह्ना रात्रिं ध्यायेत् । भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते । यद्दिवा वाचं विसृजेत् । अहर्भ्रातृव्यायोच्छिँषेत् । यन्नक्तं विसृजेत् । रात्रिं भ्रातृव्यायोच्छिँषेत् । अधिवृक्षसूर्ये वाचं विसृजति । एतावन्तमेवास्मै लोकमुच्छिँषति । यावदादित्योऽस्तमेति ३७

प्रजापतिः प्रजा असृजत । ताः सृष्टाः समश्लिष्यन् । ता रूपेणानुप्राविशत् । तस्मादाहुः । रूपं वै प्रजापतिरिति । ता नाम्नानुप्राविशत् । तस्मादाहुः । नाम वै प्रजापतिरिति । तस्मादप्यामित्रौ संगत्य । नाम्ना चेद्ध्वयेते ३८

मित्रमेव भवतः । प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत । तं देवा अब्रुवन् । इन्द्रं नो जनयेति । स आत्मन्निन्द्रमपश्यत् । तमसृजत । तं त्रिष्टुग्वीर्यं भूत्वानुप्राविशत् । तस्य वज्रः पञ्चदशो हस्त आपद्यत । तेनोदय्यासुरानभ्यभवत् ३९

य एवं वेद । अभि भ्रातृव्यान्भवति । ते देवा असुरैर्विजित्य । सुवर्गं लोकमायन् । तेऽमुष्मिँल्लोके व्यक्षुध्यन् । तेऽब्रुवन् । अमुतः प्रदानं वा उपजिजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यम् । आङ्गीरसं प्राहिणवन् । एतेनामुत्र कल्पयेति ४०

तस्य वा इयं क्लृप्तिः । यदिदं किं च । य एवं वेद । कल्पतेऽस्मै । स वा अयं मनुष्येषु यज्ञः सप्तहोता । अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति । य एवं वेद । उपैनं यज्ञो नमति । सोऽमन्यत । अभि वा इमेऽस्माल्लोकादमुं लोकं कमिष्यन्त इति । स वाचस्पते हृदिति व्याहरत् । तस्मात्पुत्रो हृदयम् । तस्मादस्माल्लोकादमुं लोकं नाभिकामयन्ते । पुत्रो हि हृदयम् ४१

देवा वै चतुर्होतृभिर्यज्ञमतन्वत । ते वि पाप्मना भ्रातृव्येणाजयन्त । अभि सुवर्गं लोकमजयन् । य एवं विद्वाँश्चतुर्होतृभिर्यज्ञं तनुते । वि पाप्मना भ्रातृव्येण जयते । अभि सुवर्गं लोकं जयति । षड्ढोत्रा प्रायणीयमासादयति । अमुष्मै वै लोकाय षड्ढोता । घ्नन्ति खलु वा एतत्सोमम् । यदभिषुण्वन्ति ४२

ऋजुधैवैनममुं लोकं गमयति । चतुर्होत्रातिथ्यम् । यशो वै चतुर्होता । यश एवात्मन्धत्ते । पञ्चहोत्रा पशुमुपसादयति । सुवर्ग्यो वै पञ्चहोता । यजमानः पशुः । यजमानमेव सुवर्गं लोकं गमयति । ग्रहान्गृहीत्वा सप्तहोतारं जुहोति । इन्द्रियं वै सप्तहोता ४३

इन्द्रियमेवात्मन्धत्ते । यो वै चतुर्होतृननुसवनं तर्पयति । तृप्यति प्रजया पशुभिः । उपैनँ सोमपीथो नमति । बहिष्पवमाने दशहोतारं व्याचक्षीत । माध्यन्दिने पवमाने चतुर्होतारम् । आर्भवे पवमाने पञ्चहोतारम् । पितृयज्ञे

षड्ढोतारम् । यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम् । अनुसवनमेवैनाँस्तर्पयति ४४

तृप्यति प्रजया पशुभिः । उपैनँ सोमपीथो नमति । देवा वै चतुर्होतृभिः सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहासदिति । सोमश्चतुर्होत्रा । अग्निः पञ्चहोत्रा । धाता षड्ढोत्रा ४५

इन्द्रः सप्तहोत्रा । प्रजापतिर्दशहोत्रा । तेषाँ सोमँ राजानं यश आर्च्छत् । तन्न्यकामयत । तेनापाक्रामत् । तेन प्रलायमचरत् । तं देवाः प्रैषैः प्रैषमैच्छन् । तत्प्रैषाणां प्रैषत्वम् । निविद्भिर्न्यवेदयन् । तन्निविदां निवित्त्वम् ४६

आप्रीभिराप्नुवन् । तदाप्रीणामाप्रित्वम् । तमघ्नन् । तस्य यशो व्यगृह्णत । ते ग्रहा अभवन् । तद्ग्रहाणां ग्रहत्वम् । यस्यैवं विदुषो ग्रहा गृह्यन्ते । तस्य त्वेव गृहीताः । तेऽब्रुवन् । यो वै नः श्रेष्ठोऽभूत् ४७

तमवधिष्म । पुनरिमँ सुवामहा इति । तं छन्दोभिरसुवन्त । तच्छन्दसां छन्दस्त्वम् । साम्ना समानयन् । तत्साम्नः सामत्वम् । उक्थैरुदस्थापयन् । तदुक्थानामुक्थत्वम् । य एवं वेद । प्रत्येव तिष्ठति ४८

सर्वमायुरेति । सोमो वै यशः । य एवं विद्वान्त्सोममागच्छति । यश एवैनमृच्छति । तस्मादाहुः । यश्चैवं वेद यश्च न । तावुभौ सोममागच्छतः । सोमो हि यशः । तं त्वा व यश ऋच्छतीत्याहुः । यः सोमे सोमं प्राहेति । तस्मात्सोमे सोमः प्रोच्यः । यश एवैनमृच्छति ४९

इदं वा अग्रे नैव किं चनासीत् । न द्यौरासीत् । न पृथिवी ।नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति । तदतप्यत । तस्मात्तेपानाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । तद्भूयोऽतप्यत ५०

तस्मात्तेपानाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानान्मरीचयोऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तेपानादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत । तद्वस्तिमभिनत् ५१

स समुद्रोऽभवत् । तस्मात्समुद्रस्य न पिबन्ति । प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्ताद्यन्ति । तद्दशहोतान्वसृज्यत । प्रजापतिर्वै दशहोता । य एवं तपसो वीर्यं विद्वाँस्तप्यते । भवत्येव । तद्वा इदमा-पस्सलिलमासीत् । सोऽरोदीत्प्रजापतिः ५२

स कस्मा अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्यभवत् । यद्व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा द्यौरभवत् । यदरोदीत् । तदनयो रोदस्त्वम् ५३

य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां लोकानां जन्म । य एवमेषां लोकानां जन्म वेद । नैषु लोकेष्वार्तिमार्च्छति । स इमां प्रतिष्ठामविन्दत । स इमां प्रतिष्ठां वित्त्वाकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स जघनादसुरानसृजत ५४

तेभ्यो मृन्मये पात्रेऽन्नमदुहत् । यास्य सा तनूरासीत् । तामपाहत । सा तमिस्राभवत् । सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स प्रजननादेव प्रजा असृजत । तस्मादिमा भूयिष्ठाः । प्रजननाद्ध्येना असृजत ५५

ताभ्यो दारुमये पात्रे पयोऽदुहत । यास्य सा तनूरासीत् । तामपाहत सा जोत्स्नाभवत् । सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स उपपक्षाभ्यामेवर्तूनसृजत । तेभ्यो रजते पात्रे घृतमदुहत् । यास्य सा तनूरासीत् ५६

तमपाहत । सोऽहोरात्रयोः सन्धिरभवत् । सोऽकामयत प्रजायेयेति । स

तपोऽतप्यत । सोऽनतर्वानभवत् । स मुखाद्देवानसृजत । तेभ्यो हरिते पात्रे सोममदुहत । यास्य सा तनूरासीत् । तामपाहत । तदहरभवत् ५७

एते वै प्रजापतेर्दोहाः । य एवं वेद । दुह एव प्रजाः । दिवा वै नोऽभूदिति । तद्देवानां देवत्वम् । य एवं देवानां देवत्वं वेद । देववानेव भ्वति । एतद्वा अहोरात्राणां जन्म । य एवमहोरात्राणां जन्म वेद । नाहोरात्रेष्वा-र्तिमार्च्छति ५८

असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितम् । यदिदं किं च । तदेतच्छ्वोवस्यसं नाम ब्रह्म । व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति । प्रजायते प्रजया पशुभिः । प्र परमेष्ठिनो मात्रामाप्नोति । य एवं वेद ५९

प्रजापतिरिन्द्रमसृजतानुजावरं देवानाम् । तं प्राहिणोत् । परेहि । एतेषां देवानामधिपतिरेधीति । तं देवा अब्रुवन् । कस्त्वमसि । वयं वै त्वच्छ्रेयाँसः स्म इति । सोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयाँसः स्म इति मा देवा अवोचन्निति । अथ वा इदं तर्हि प्रजापतौ हर आसीत् ६०

यदस्मिन्नादित्ये । तदेनमब्रवीत् । एतन्मे प्रयच्छ । अथाहमेतेषां देवानामधिपतिर्भविष्यामीति । कोऽहँ स्यामित्यब्रवीत् । एतत्प्रदायेति । एतत्स्या इत्यब्रवीत् । यदेतद्ब्रवीषीति । को ह वै नाम प्रजापतिः । य एवं वेद ६१

विदुरेनं नाम्ना । तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् । ततो वा इन्द्रो देवानामधिपतिरभवत् । य एवं वेद । अधिपतिरेव समानानां भवति । सोऽमन्यत । किंकिं वा अकरमिति । स चन्द्रं म आहरेति प्रालपत् । तच्चन्द्रमसश्चन्द्रमस्त्वम् । य एवं वेद ६२

चन्द्रवानेव भवति । तं देवा अब्रुवन् । सुवीर्यो मर्या यथा गोपायत इति । तत्सूर्यस्य सूर्यत्वम् । य एवं वेद । नैनं दभ्नोति । कश्च नास्मिन्वा

इदमिन्द्रियं प्रत्यस्थादिति । तदिन्द्रस्येन्द्रत्वम् । य एवं वेद । इन्द्रियाव्येव भवति ६३

अयं वा इदं परमोऽभूदिति । तत्परमेष्ठिनः परमेष्ठित्वम् । य एवं वेद । परमामेव काष्ठां गच्छति । तं देवाः समन्तं पर्यविशन् । वसवः पुरस्तात् । रुद्रा दक्षिणतः । आदित्याः पश्चात् । विश्वे देवा उत्तरतः । अङ्गिरसः प्रत्यञ्चम् ६४

साध्याः पराञ्चम् । य एवं वेद । उपैनँ समानाः संविशन्ति । स प्रजापतिरेव भूत्वा प्रजा आवयत् । ता अस्मै नातिष्ठन्तान्नाद्याय । ता मुखं पुरस्तात्पश्यन्तीः । दक्षिणतः पर्यायन् । स दक्षिणतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः ६५

पश्चात्पर्यायन् । स पश्चात्पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । उत्तरतः पर्यायन् । सा उत्तरतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् ६६

मुखमुत्तरतः । ऊर्ध्वा उदायन् । स उपरिष्टान्न्यवर्तयत । ताः सर्वतोमुखो भूत्वावयत् । ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय । य एवं विद्वान्परि च वर्तयते नि च । प्रजापतिरेव भुत्वा प्रजा अत्ति । तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय । अन्नाद एव भवति ६७

प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति । स एतं दशहोतारमपश्यत् । तं प्रायुङ्क्त । तस्य प्रयुक्ति बहोर्भूयानभवत् । यः कामयेत बहोर्भूयान्त्स्यामिति । स दशहोतारं प्रयुञ्जीत । बहोरेव भूयान्भवति । सोऽकामयत वीरो म आजायेतेति । स दशहोतुश्चतुर्होतारं निरमिमीत । तं प्रायुङ्क्त ६८

तस्य प्रयुक्तीन्द्रोऽजायत । यः कामयेत वीरो म आजायेतेति । स चतुर्होतारं प्रयुञ्जीत । आस्य वीरो जायते । सोऽकामयत पशुमान्त्स्यामिति । स चतुर्होतुः पञ्चहोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति पशुमानभवत्

। यः कामयेत पशुमान्त्स्यामिति । स पञ्चहोतारं प्रयुञ्जीत ६९

पशुमानेव भवति । सोऽकामयतर्तवो मे कल्पेरन्निति । स पञ्चहोतुः षड्ढोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त । यः कामयेतर्तवो मे कल्पेरन्निति । स षड्ढोतारं प्रयुञ्जीत । कल्पन्तेऽस्मा ऋतवः । सोऽकामयत सोमपः सोमयाजी स्याम् । आ मे सोमपः सोमयाजी जायेतेति ७०

स षड्ढोतुः सप्तहोतारं निरमिमीत । तं प्रायुङ्क्त । तस्य प्रयुक्ति सोमपः सोमयाज्यभवत् । आस्य सोमपः सोमयाज्यजायत । यः कामयेत सोमपः सोमयाजी स्याम् । आ मे सोमपः सोमयाजी जायेतेति । स सप्तहोतारं प्रयुञ्जीत । सोमप एव सोमयाजी भवति । आस्य सोमपः सोमयाजी जायते । स वा एष पशुः पञ्चधा प्रतितिष्ठति ७१

पद्भिर्मुखेन । ते देवाः पशून्वित्त्वा । सुवर्गं लोकमायन् । तेऽमुष्मिँल्लोके व्यक्षुध्यन् । तेऽब्रुवन् । अमुतः प्रदानं वा उपजिजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यम् । आङ्गीरसं प्राहिरावन् । एतेनामुत्र कल्पयेति । तस्य आ इयं क्ळ्प्तिः ७२

यदिदं किञ्च । य एवं वेद कल्पतेऽस्मै । स वा अयं मनुष्येषु यज्ञः सप्तहोता । अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति । य एवं वेद । उपैनं यज्ञो नमति । यो वै चतुर्होतृणां निदानं वेद । निदानवान्भवति । अग्निहोत्रं वै दशहोतुर्निदानम् । दर्शपूर्णमासौ चतुर्होतुः । चातुर्मास्यानि पञ्चहोतुः । पशुबन्धः षड्ढोतुः । सौम्योऽध्वरः सप्तहोतुः । एतद्वै चतुर्होतृणां निदानम् । य एवं वेद । निदानवान्भवति ७३ २

ब्रह्मवादिनो वदन्ति । किं चतुर्होतृणां चतुर्होतृत्वमिति । यदेवैषु चतुर्धा होतारः । तेन चतुर्होतारः । तस्माच्चतुर्होतार उच्यन्ते । तच्चतुर्होतृणां चतुर्होतृत्वम् । सोमो वै चतुर्होता । अग्निः पञ्चहोता । धाता षड्ढोता । इन्द्रः सप्तहोता १

प्रजापतिर्दशहोता । य एवं चतुर्होतृणामृद्धिं वेद । ऋध्नोत्येव । य एषामेवं बन्धुतां वेद । बन्धुमान्भवति । य एषामेवं कॢप्तिं वेद । कल्पतेऽस्मै । य एषामेवमायतनं वेद । आयतनवान्भवति । य एषामेवं प्रतिष्ठां वेद २

प्रत्येव तिष्ठति । ब्रह्मवादिनो वदन्ति । दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । अथ कस्माच्चतुर्होतार उच्यन्त इति । इन्द्रो वै चतुर्होता । इन्द्राः खलु वै श्रेष्ठो देवतानामुपदेशनात् । य एवमिन्द्रँ श्रेष्ठं देवतानामुपदेशनाद्वेद । वसिष्ठः समानानां भवति । तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानुबुध्यन्ते । अयमागन् । अयमवासादिति । कीर्तिरस्य पूर्वागच्छति जनतामायतः । अथो एनं प्रथमेनैवानुबुध्यन्ते । अयमागन् । अयमवासादिति ३

दक्षिणां प्रतिग्रहीष्यन्त्सप्तदश कृत्वोऽपान्यात् । आत्मानमेव समिन्धे । तेजसे वीर्याय । अथो प्रजापतिरेवैनां भूत्वा प्रतिगृह्णाति । आत्मनोऽनार्त्यै । यद्येनमार्त्विज्याद्वृतँ सन्तं निर्हरेरन् । आग्नीध्रे जुहुयाद्दशहोतारम् । चतुर्गृहीतेनाज्येन । पुरस्तात्प्रत्यङ्तिष्ठन् । प्रतिलोमं विग्राहम् ४

प्राणानेवास्योपदासयति । यदेनं पुनरुपशिक्षेयुः । आग्नीध्र एव जुहुयाद्दशहोतारम् । चतुर्गृहीतेनाज्येन । पश्चात्प्राङासीनः । अनुलोममविग्राहम् । प्राणानेवास्मै कल्पयति । प्रायश्चित्ती वाग्घोतेत्यृतुमुख ऋतुमुखे जुहोति । ऋतूनेवास्मै कल्पयति । कल्पन्तेऽस्मा ऋतवः ५

कॢप्ता अस्मा ऋतव आयन्ति । षड्ढोता वै भूत्वा प्रजापतिरिदँ सर्वमसृजत । स मनोऽसृजत । मनसोऽधि गायत्रीमसृजत । तद्गायत्रीं यश आर्च्छत् । तामालभत । गायत्रिया अधि छन्दाँस्यसृजत । छन्दोभ्योऽधि साम । तत्साम यश आर्च्छत् । तदालभत ६

साम्नोऽधि यजूँष्यसृजत । यजुर्भ्योऽधि विष्णुम् । तद्विष्णुं यश आर्च्छत् । तमालभत । विष्णोरध्योषधीरसृजत । ओषधीभ्योऽधि सोमम् । तत्सोमं यश आर्च्छत् । तमालभत । सोमादधि पशूनसृजत । पशुभ्योऽधीन्द्रम् ७

तदिन्द्रं यश आर्च्छत् । तदेनं नातिप्राच्यवत । इन्द्र इव यशस्वी भवति । य एवं वेद नैनं यशोऽतिप्रच्यवते । यद्वा इदं किं च । तत्सर्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । यत्किं च प्रतिगृह्णीयात् । तत्सर्वमुत्तानस्त्वाङीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान आङ्गीरसः । अनयैवैनत्प्रतिगृह्णाति । नैनँ हिनस्ति । बर्हिषा प्रतीयाद्गां वाश्वं वा । एतद्वै पशूनां प्रियं धाम । प्रियेणैवैनं धाम्ना प्रत्येति ८

यो वा अविद्वान्निवर्तयते । विशीर्षा सपाप्मामुष्मिँल्लोके भवति । अथ यो विद्वान्निवर्तयते । सशीर्षा विपाप्मामुष्मिँल्लोके भवति । देवता वै सप्त पुष्टिकामा न्यवर्तयन्त । अग्निश्च पृथिवी च । वायुश्चान्तरिक्षं च । आदित्यश्च द्यौश्च चन्द्रमाः । अग्निर्न्यवर्तयत । स साहस्रमपुष्यत् ९

पृथिवी न्यवर्तयत । सौषधीभिर्वनस्पतिभिरपुष्यत् । वायुर्न्यवर्तयत । स मरीचीभिरपुष्यत् । अन्तरिक्षं न्यवरतयत । तद्वयोभिरपुष्यत् । आदित्यो न्यवर्तयत । स रश्मिभिरपुष्यत् । द्यौर्न्यवर्तयत । सा नक्षत्रैरपुष्यत् । चन्द्रमा न्यवर्तयत । सोऽहोरात्रैरर्धमासैर्मासैर्ऋतुभिः संवत्सरेनापुष्यत् । तान्पोषान्पुष्यति । याँस्तेऽपुष्यन् । य एवं विदान्नि च वर्तयते परि च १०

तस्य वा अग्नेर्हिरण्यं प्रतिजग्रहुषः । अर्धमिन्द्रियस्यापाक्रामत् । तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽर्धमिन्द्रियस्यात्मन्नुपाधत्त । अर्धमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान्हिरण्यं प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । अर्धमस्येन्द्रियस्यापक्रामति । तस्य वै सोमस्य वासः प्रतिजग्रहुषः । तृतीयमिन्द्रियस्यापाक्रामत् ११

तदेतेनैव प्रत्यगृह्णात् । तेन वै स तृतीयमिन्द्रियस्यात्मन्नुपाधत्त । तृतीयमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान्वासः प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । तृतीयमस्येन्द्रियस्यापक्रामति । तस्य वै रुद्रस्य गां प्रतिजग्रहुषः । चतुर्थमिन्द्रियस्यापाक्रामत् । तामेतेनैव प्रत्यगृह्णात् । तेन वै स चतुर्थमिन्द्रियस्यात्मन्नुपाधत्त १२

चतुर्थमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान्गां प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । चतुर्थमस्येन्द्रियस्यापक्रामति । तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः । पञ्चममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स पञ्चममिन्द्रियस्यात्मन्नुपाधत्त । पञ्चममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वानश्वं प्रतिगृह्णाति १३

अथ योऽविद्वान्प्रतिगृह्णाति । पञ्चममस्येन्द्रियस्यापक्रामति । तस्य वै प्रजापतेः पुरुषं प्रतिजग्रहुषः । षष्ठमिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स षष्ठमिन्द्रियस्यात्मन्नुपाधत्त । षष्ठमिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वान्पुरुषं प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । षष्ठमस्येन्द्रिय-स्यापक्रामति १४

तस्य वै मनोस्तल्पं प्रतिजग्रहुषः । सप्तममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् । तेन वै स सप्तममिन्द्रियस्यात्मन्नुपाधत्त । सप्तममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वाँस्तल्पं प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । सप्तममस्येन्द्रियस्यापक्रामति । तस्य वा उत्तानस्याङ्गीरसस्याप्राणत्प्रतिजग्रहुषः । अष्टममिन्द्रियस्यापाक्रामत् १५

तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽष्टममिन्द्रियस्यात्मन्नुपाधत्त । अष्टममिन्द्रियस्यात्मन्नुपाधत्ते । य एवं विद्वानप्राणत्प्रतिगृह्णाति । अथ योऽविद्वान्प्रतिगृह्णाति । अष्टममस्येन्द्रियस्यापक्रामति । यद्वा इदं किं च । तत्सर्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात् । तदेनं प्रतिगृहीतं नाहिनत् । यत्किं च प्रतिगृह्णीयात् । तत्सर्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् । इयं वा उत्तान आङ्गीरसः । अनयैवैनत्प्रतिगृह्णाति । नैनँ हिनस्ति १६

ब्रह्मवादिनो वदन्ति । यद्दशहोतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् । केन प्रजा असृजन्तेति । प्रजापतिना वै ते गृहपतिनार्ध्नुवन् । तेन प्रजा असृजन्त । यच्चतुर्होतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् । केनौषधीरसृजन्तेति । सोमेन वै ते गृहपतिनार्ध्नुवन् १७

तेनौषधीरसृजन्त । यत्पञ्चहोतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् । केनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । केनैषां पशूनवृञ्जतेति । अग्निना वै ते गृहपतिनार्ध्नुवन् । तेनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । तेनैषां पशूनवृञ्जत । यत्षड्ढोतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् १८

केनर्तूनकल्पयन्तेति । धात्रा वै ते गृहपतिनार्ध्नुवन् । तेनर्तूनकल्पयन्त । यत्सप्तहोतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् । केन सुवरायन् । केनेमाँल्लोकान्त्समतन्वन्निति । अर्यम्णा वै ते गृहपतिनार्ध्नुवन् । तेन सुवरायन् । तेनेमाँल्लोकान्समतन्वन्निति १९

एते वै देवा गृहपतयः । तान्य एवं विद्वान् । अप्यन्यस्य गार्हपते दीक्षते । अवान्तरमेव सत्त्रिणामृध्नोति । यो वा अर्यमणं वेद । दानकामा अस्मै प्रजा भवन्ति । यज्ञो वा अर्यमा । आर्या वसतिरिति वै तमाहुर्यं प्रशँसन्ति । आर्या वसतिर्भवति । य एवं वेद २०

यद्वा इदं किं च । तत्सर्वं चतुर्होतारः । चतुर्होतृभ्योऽधि यज्ञो निर्मितः । स य एवं विद्वान्विवदेत । अहमेव भूयो वेद । यश्चतुर्होतृन्वेदेति । स ह्येव भूयो वेद । यश्चतुर्होतृन्वेद । यो वै चतुर्होतृणाँ होतृन्वेद । सर्वासु प्रजास्वन्नमत्ति २१

सर्वा दिशोऽभिजयति । प्रजापतिर्वै दशहोतृणाँ होता । सोमश्चतुर्होतृणाँ होता । अग्निः पञ्चहोतृणाँ होता । धाता षड्ढोतृणाँ होता । अर्यमा सप्तहोतृणाँ होता । एते वै चतुर्होतृणाँ होतारः । तान्य एवं वेद । सर्वासु प्रजास्वन्नमत्ति । सर्वा दिशोऽभिजयति २२

प्रजापतिः प्रजाः सृष्ट्वा व्यस्त्रँसत । स हृदयंभूतोऽशयत् । आत्मन्हा३ इत्यह्वयत् । आपः प्रत्यशृणवन् । ता अग्निहोत्रेणैव यज्ञक्रतुनोपपर्यावर्तन्त । ताः कुसिन्धमुपौहन् । तस्मादग्निहोत्रस्य यज्ञक्रतोः । एक ऋत्विक् । चतुष्कृ-त्वोऽह्वयत् । अग्निर्वायुरादित्यश्चन्द्रमाः २३

ते प्रत्यशृणवन् । ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोपपर्यावर्तन्त । त उपौहँश्चत्वार्यङ्गानि । तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोः । चत्वार ऋत्विजः । पञ्चकृत्वोऽह्वयत् । पशवः प्रत्यशृणवन् । ते चातुर्मास्यैरेव यज्ञक्रतुनोप-पर्यावर्तन्त । त उपौहँल्लोम च्छवीं माँसमस्थि मज्ञानम् । तस्माच्चातु-र्मास्यानां यज्ञक्रतोः २४

पञ्चर्त्विजः । षट्कृत्वोऽह्वयत् । ऋतवः प्रत्यशृणवन् । ते पशुबन्धेनैव यज्ञक्रतुनोपपर्यावर्तन्त । त उपौहं स्तनावाण्डौ शिश्नमवाञ्चं प्राणम् । तस्मात्पशुबन्धस्य यज्ञक्रतोः । षडृत्विजः । सप्तकृत्वोऽह्वयत् । होत्राः प्रत्यशृणवन् । ताः सौम्येनैवाध्वरेण यज्ञक्रतुनोपपर्यावर्तन्त २५

ता उपौहन्त्सप्त शीर्षण्यान्प्राणान् । तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः । सप्त होत्राः प्राचीर्वषट्कुर्वन्ति । दशकृत्वोऽह्वयत् । तपः प्रत्यशृणोत् । तत्कर्मणैव संवत्सरेण सर्वैर्यज्ञक्रतुभिरुपपर्यावर्तत । तत्सर्वमात्मानमपरिवर्गमुपौहत् । तस्मात्संवत्सरे सर्वे यज्ञक्रतवोऽवरुध्यन्ते । तस्माद्दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । एकहोत्रे बलिँ हरन्ति हरन्त्यस्मै प्रजा बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद २६

प्रजापतिः पुरुषमसृजत । सोऽग्निरब्रवीत् । ममायमन्नमस्त्विति । सोऽबिभेत् । सर्वं वै मायं प्रधक्ष्यतीति । स एताँश्चतुर्होतृनात्मस्परणानपश्यत् । तानजुहोत् । तैर्वै स आत्मानमस्पृणोत् । यदग्निहोत्रं जुहोति । एकहोतारमेव तद्यज्ञक्रतुमाप्नोत्यग्निहोत्रम् २७

कुसिन्धं चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । चतुर्होतारमेव तद्यज्ञक्रतुमाप्नोति । दर्शपूर्णमासौ । चत्वारि चात्मनोऽङ्गानि स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । समित्पञ्चमी ।पञ्चहोतारमेव तद्यज्ञक्रतुमाप्नोति । चातुर्मास्यानि । लोम च्छवीं माँसमस्थि मज्ञानम् २८

तानि चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति

। द्विर्जुहोति । षड्ढोतारमेव तद्यज्ञक्रतुमाप्नोति पशुबन्धम् । स्तनावाण्डौ शिश्नमवाञ्चं प्राणम् । तानि चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति २९

समित्सप्तमी ।सप्तहोतारमेव तद्यज्ञक्रतुमाप्नोति सौम्यमध्वरम् । सप्त चात्मनः शीर्षण्यान्प्राणान्स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । दशहोतारमेव तद्यज्ञक्रतुमाप्नोति संवत्सरम् । सर्वं चात्मानमपरिवर्गँ स्पृणोति । आदित्यस्य च सायुज्यं गच्छति ३०

प्रजापतिरकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स हरितः श्यावोऽभवत् । तस्मात्स्त्र्यन्तर्वत्नी ।हरिणी सती श्यावा भवति । स विजायमानो गर्भेणाताम्यत् । स तान्तः कृष्णः श्यावोऽभवत् । तस्मात्तान्तः कृष्णः श्यावो भवति । तस्यासुरेवाजीवत् ३१

तेनासुनासुरानसृजत । तदसुराणामसुरत्वम् । य एवमसुराणामसुरत्वं वेद । असुमानेव भवति । नैनमसुर्जहाति । सोऽसुरान्सृष्ट्वा पितेवामन्यत । तदनु पितॄनसृजत । तत्पितृणां पितृत्वम् । य एवं पितृणां पितृत्वं वेद । पितेवैव स्वानां भवति ३२

यन्त्यस्य पितरो हवम् । स पितॄन्त्सृष्ट्वामनस्यत् । तदनु मनुष्यानसृजत । तन्मनुष्याणां मनुष्यत्वम् । य एवं मनुष्याणां मनुष्यत्वं वेद । मनस्व्येव भवति । नैनं मनुर्जहाति । तस्मै मनुष्यान्त्ससृजानाय । दिवा देवत्राभवत् । तदनु देवानसृजत । तद्देवानां देवत्वम् । य एवं देवानां देवत्वं वेद । दिवा हैवास्य देवत्रा भवति । तानि वा एतानि चत्वार्यम्भाँसि । देवा मनुष्याः पितरोऽसुराः । तेषु सर्वेष्वम्भो नभ इव भवति । य एवं वेद ३३

ब्रह्मवादिनो वदन्ति । यो वा इमं विद्यात् । यतोऽयं पवते । यदभिपवते । यदभिसंपवते । सर्वमायुरियात् । न पुरायुषः प्रमीयेत । पशुमान्त्स्यात् । विन्देत प्रजाम् । यो वा इमं वेद ३४

यतोऽयं पवते । यदभिपवते । यदभिसंपवते । सर्वमायुरेति । न पुरायुषः प्रमीयते । पशुमान्भवति । विन्दते प्रजाम् । अद्भ्यः पवते । अपोऽभिपवते । अपोऽभिसंपवते ३५

अस्याः पवते । इमामभिपवते । इमामभिसंपवते । अग्नेः पवते । अग्निमभिपवते । अग्निमभिसंपवते । अन्तरिक्षात्पवते । अन्तरिक्षमभिपवते । अन्तरिक्षमभिसंपवते । आदित्यात्पवते ३६

आदित्यमभिपवते । आदित्यमभिसंपवते । द्योः पवते । दिवमभिपवते । दिवमभिसंपवते । दिग्भ्यः पवते । दिशोऽभिपवते । दिशोऽभिसंपवते । स यत्पुरस्ताद्वाति । प्राण एव भूत्वा पुरस्ताद्वाति ३७

तस्मात्पुरस्ताद्वान्तम् । सर्वाः प्रजाः प्रतिनन्दन्ति । प्राणो हि प्रियः प्रजानाम् । प्राण इव प्रियः प्रजानां भवति । य एवं वेद । स वा एष प्राण एव । अथ यद्दक्षिणतो वाति । मातरिश्वैव भूत्वा दक्षिणतो वाति । तस्माद्दक्षिणतो वान्तं विद्यात् । सर्वा दिश आवाति ३८

सर्वा दिशोऽनुविवाति । सर्वा दिशोऽनुसंवातीति । स वा एष मातरिश्वैव । अथ यत्पश्चाद्वाति । पवमान एव भूत्वा पश्चाद्वाति । पूतमस्मा आहरन्ति । पूतमुपहरन्ति । पूतमश्नाति । य एवं वेद । स वा एष पवमान एव ३९

अथ यदुत्तरतो वाति । सवितैव भूत्वोत्तरतो वाति । सवितेव स्वानां भवति । य एवं वेद । स वा एष सवितैव । ते य एनं पुरस्तादायन्तमुपवदन्ति । य एवास्य पुरस्तात्पाप्मानः । ताँस्तेऽपघ्नन्ति । पुरस्तादितरान्पाप्मनः सचन्ते । अथ य एनं दक्षिणत आयन्तमुपवदन्ति ४०

य एवास्य दक्षिणतः पाप्मानः । ताँस्तेऽपघ्नन्ति । दक्षिणत इतरान्पाप्मनः सचन्ते । अथ य एनं पश्चादायन्तमुपवदन्ति । य एवास्य पश्चात्पाप्मानः । ताँस्तेऽपघ्नन्ति । पश्चादितरान्पाप्मनः सचन्ते । अथ य एनमुत्तरत

आयन्तमुपवदन्ति । य एवास्योत्तरतः पाप्मानः । ताँस्तेऽपघ्नन्ति ४१

उत्तरत इतरान्पाप्मनः सचन्ते । तस्मादेवं विद्वान् । वीव नृत्येत् । प्रेव चलेत् । व्यस्येवाक्ष्यौ भाषेत । मण्टयेदिव । क्राथयेदिव । शृङ्गायेतेव । उत मोपवदेयुः । उत मे पाप्मानमपहन्युरिति । स यां दिशँ सनिमेष्यन्त्स्यात् । यदा तां दिशं वातो वायात् । अथ प्रवेयात् । प्र वा धावयेत् । सातमेव रदितं व्यूढं गन्धमभि प्रच्यवते । आस्य तं जनपदं पूर्वा कीर्तिर्गच्छति । दानकामा अस्मै प्रजा भवन्ति । य एवं वेद ४२

प्रजापतिः सोमँ राजानमसृजत । तं त्रयो वेदा अन्वसृज्यन्त । तान्हस्तेऽकुरुत । अथ ह सीता सावित्री ।सोमँ राजानं चकमे । श्रद्धामु स चकमे । सा ह पितरं प्रजापतिमुपससार । तँ होवाच । नमस्ते अस्तु भगवः । उप त्वायानि ४३

प्र त्वा पद्ये । सोमं वै राजानं कामये । श्रद्धामु स कामयत इति । तस्या उ ह स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य ४४

आस्यार्धं वव्राज । ताँ होदीक्ष्योवाच । उप मा वर्तस्वेति । तं होवाच । भोगं तु म आचक्ष्व । एतन्म आचक्ष्व । यत्ते पाणाविति । तस्या उ ह त्रीन्वेदान्प्रददौ । तस्मादु ह स्त्रियो भोगमैव हारयन्ते । स यः कामयेत प्रियः स्यामिति ४५

यं वा कामयेत प्रियः स्यादिति । तस्मा एतँ स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य । आस्यार्धं व्रजेत् । प्रियो हैव भवति ४६

ब्रह्मात्मन्वदसृजत । तदकामयत । समात्मना पद्येयेति ।

आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै दशमँ हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतँ सन्तम् । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ४७

आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै सप्तमँ हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एतँ सप्तहूतँ सन्तम् । सप्तहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै षष्ठँ हूतः प्रत्यशृणोत् । स षड्ढूतोऽभवत् ४८

षड्धूतो ह वै नामैषः । तं वा एतँ षड्ढूतँ सन्तम् । षड्ढोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै पञ्चमँ हूतः प्रत्यशृणोत् । स पञ्चहूतोऽभवत् । पञ्चहूतो ह वै नामैषः । तं वा एतं पञ्चहूतँ सन्तं ।पञ्चहोतेत्याचक्षते परोक्षेण ४९

परोक्षप्रिया इव हि देवाः । आत्मन्नात्मन्नित्यामन्त्रयत । तस्मै चतुर्थँ हूतः प्रत्यशृणोत् । स चतुर्हूतोऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतँ सन्तम् । चतुर्होतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तमब्रवीत् । त्वं वै मे नेदिष्ठँ हूतः प्रत्यश्रौषीः । त्वयैनानाख्यातार इति । तस्मान्नु हैनाँश्चतुर्होतार इत्याचक्षते । तस्माच्शुश्रूषुः पुत्राणाँ हृद्यतमः । नेदिष्ठो हृद्यतमः । नेदिष्ठो ब्रह्मणो भवति । य एवं वेद ५० ३

जुष्टो दमूना अतिथिर्दुरोणे । इमं नो यज्ञमुपयाहि विद्वान् । विश्वा अग्नेऽभियुजो विहत्य । शत्रूयतामाभरा भोजनानि । अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यँ सुयममाकृणुष्व । शत्रूयतामभितिष्ठा महाँसि । अग्ने यो नोऽभितो जनः । वृको वारो जिघाँसति १

ताँस्त्वं वृत्रहञ्जहि । वस्वस्मभ्यमाभर । अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किञ्चन । त्वमिन्द्राभिभूरसि । देवो विज्ञातवीर्यः । वृत्रहा पुरुचेतनः । अप प्राच इन्द्र विश्वाँ अमित्रान् २

अपापाचो अभिभूते नुदस्व । अपोदीचो अप शूरधराच ऊरौ । यथा तव शर्मन्मदेम । तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभो भुवत्ऽभुवत् ।युजे रथं गवेषणँ हरिभ्याम् । उप ब्रह्माणि जुजुषाणमस्थुः । विबाधिष्टास्य रोदसी महित्वा । इन्द्रो वृत्राण्यप्रतीजघन्वान् ३

हव्यवाहमभिमातिषाहम् । रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिम् । अग्निँ स्विष्टकृतमाहुवेम । स्विष्टमग्ने अभि तत्पृणाहि । विश्वा देव पृतना अभिष्य । उरुं नः पन्थां प्रदिशन्विभाहि । ज्योतिष्मद्धेह्यजरं न आयुः । त्वामग्ने हविष्मन्तः । देवं मर्तास ईडते ४

मन्ये त्वा जातवेदसम् । स हव्या वक्ष्यानुषक् । विश्वानि नो दुर्गहा जातवेदः । सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्मनसा गृणानः । अस्माकं बोध्यविता तनूनाम् । पूषा गा अन्वेतु नः । पूषा रक्षत्वर्वतः । पूषा वाजँ सनोतु नः । पूषेमा आशा अनुवेद सर्वाः ५

सो अस्माँ अभयतमेन नेषत् । स्वस्तिदा अघृणिः सर्ववीरः । अप्रयुच्छन्पुर एतु प्रजानन् । त्वमग्ने सप्रथा असि । जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वते । अग्नी रक्षाँसि सेधति । शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः । अग्ने रक्षाणो अँहसः ६

प्रतिष्म देव रीषतः । तपिष्ठैरजरो दह । अग्ने हँसि न्यत्रिणम् । दीद्यन्मर्त्येष्वा । स्वे क्षये शुचिव्रत । आ वात वाहि भेषजम् । वि वात वाहि यद्रपः । त्वँ हि विश्वभेषजः । देवानां दूत ईयसे । द्वाविमौ वातौ वातः ७

आ सिन्धोरा परावतः । दक्षं मे अन्य आवातु । परान्यो वातु यद्रपः । यददो वात ते गृहे । अमृतस्य निधिर्हितः । ततो नो देहि जीवसे । ततो नो धेहि भेषजम् । ततो नो मह आवह । वात आवातु भेषजम् । शम्भूर्मयोभूर्नो हृदे ८

प्र ण आयूँषि तारिषत् । त्वमग्ने अयासि । अया सन्मनसा हितः । अया

सन्हव्यमूहिषे । अया नो धेहि भेषजम् । इष्टो अग्निराहुतः । स्वाहाकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नमः । कामो भूतस्य भव्यस्य । सम्राडेको विराजति ९

स इदं प्रतिपप्रथे । ऋतूनुत्सृजते वशी ।कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषा । त्वया मन्यो सरथमारुजन्तः । हर्षमाणासो धृषता मरुत्वः । तिग्मेषव आयुधा सँशिशानाः । उपप्रयन्ति नरो अग्निरूपाः १०

मन्युर्भगो मन्युरेवास देवः । मन्युर्होता वरुणो विश्ववेदाः । मन्युं विश ईडते देवयन्तीः । पाहि नो मन्यो तपसा श्रमेण । त्वमग्ने व्रतभृच्छुचिः । देवाँ आसादया इह । अग्ने हव्याय वोढवे । व्रता नु बिभ्रद्व्रतपा अदाभ्यः । यजानो देवाँ अजरः सुवीरः । दधद्रत्नानि सुविदानो अग्ने । गोपाय नो जीवसे जातवेदः ११

चक्षुषो हेते मनसो हेते । वाचो हेते ब्रह्मणो हेते । यो माघायुरभिदासति । तमग्ने मेन्यामेनिं कृणु । यो मा चक्षुषा यो मनसा । यो वाचा ब्रह्मणाघायुरभिदासति । तयाग्ने त्वं मेन्या । अमुममेनिं कृणु । यत्किं चासौ मनसा यच्च वाचा । यज्ञैर्जुहोति यजुषा हविर्भिः १२

तन्मृत्युर्निर्ऋत्या संविदानः । पुरा दिष्टादाहुतीरस्य हन्तु । यातुधाना निर्ऋतिरादु रक्षः । ते अस्य घ्नन्त्वनृतेन सत्यम् । इन्द्रेषिता आज्यमस्य मथ्नन्तु । मा तत्समृद्धि यदसौ करोति । हन्मि तेऽहं कृतँ हविः । यो मे घोरमचीकृतः । अपाञ्चौ त उभौ बाहू । अपनह्याम्यास्यम् १३

अपनह्यामि ते बाहू ।अपनह्याम्यास्यम् । अग्नेर्देवस्य ब्रह्मणा । सर्वं तेऽवधिषं कृतं ।पुरामुष्य वषट्कारात् । यज्ञं देवेषु नस्कृधि । स्विष्टमस्माकं भूयात् । मास्मान्प्रापन्नरातयः । अन्ति दूरे सतो अग्ने । भ्रातृव्यस्याभिदासतः १४

वषट्कारेण वज्रेण । कृत्याँ हन्मि कृतामहम् । यो मा नक्तं दिवा सायम्

। प्रातश्चाह्नो निपीयति । अद्या तमिन्द्र वज्रेण । भ्रातृव्यं पादयामसि । इन्द्रस्य गृहोऽसि तं त्वा । प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन । ईडे अग्निं विपश्चितम् १५

गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम् । अग्ने शकेम ते वयम् । यमं देवस्य वाजिनः । अति द्वेषाँषि तरेम । अवतं मा समनसौ समोकसौ । सचेतसौ सरेतसौ । उभौ मामवतं जातवेदसौ । शिवौ भवतमद्य नः । स्वयं कृरावानः सुगमप्रयावम् १६

तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नँ सधस्थमनुपश्यमानः । आ तन्तुमग्निर्दिव्यं ततान । त्वं नस्तन्तुरुत सेतुरग्ने । त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेम । अथा देवैः सधमादं मदेम । उदुत्तमं मुमुग्धि नः । वि पाशं मध्यमं चृत । अवाधमानि जीवसे १७

वयँ सोम व्रते तव । मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि । इन्द्राणी देवी सुभगा सुपत्नी ।उदँशेन पतिविद्ये जिगाय । त्रिँशदस्या जघनं योजनानि । उपस्थ इन्द्रँ स्थविरं बिभर्ति । सेना ह नाम पृथिवी धनंजया । विश्वव्यचा अदितिः सूर्यत्वक् । इन्द्राणी देवी प्रासहा ददाना १८

सा नो देवी सुहवा शर्म यच्छतु । आ त्वाहार्षमन्तरभूः । ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु । मा त्वद्राष्ट्रमधिभ्रशत् । ध्रुवा द्यौर्ध्रुवा पृथिवी ।ध्रुवं विश्वमिदं जगत् । ध्रुवा ह पर्वता इमे । ध्रुवो राजा विशामयम् । इहैवैधि मा व्यथिष्ठाः १९

पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठ । इह राष्ट्रमु धारय । अभितिष्ठ पृतन्यतः । अधरे सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठ । अपः क्षेत्राणि संजयन् । इन्द्र एरामदीधरत् । ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधिब्रवन् । अयं च ब्रह्मणस्पतिः २०

जुष्टी नरो ब्रह्मणा वः पितृणाम् । अक्षमव्ययं न किला रिषाथ । यच्छक्वरीषु

बृहता रवेण । इन्द्रे शुष्ममदधाथा वसिष्ठाः । पावका नः सरस्वती ।वाजेभिर्वाजिनीवती ।यज्ञं वष्टु धिया वसुः । सरस्वत्यभि नो नेषि वस्यः मा पस्फरीः पयसा मा न आधक् । जुषस्व नः सख्या वेश्या च २१

मा त्वत्क्षेत्राण्यरणानि गन्म । वृञ्जे हविर्नमसा बर्हिरग्नौ । अयामि स्रुग्घृतवती सुवृक्तिः । अम्यक्षि सद्म सदने पृथिव्याः । अश्रायि यज्ञः सूर्ये न चक्षुः । इहार्वाञ्चमतिह्वये । इन्द्रं जैत्राय जेतवे । अस्माकमस्तु केवलः । अर्वाञ्चमिन्द्रममुतो हवामहे । यो गोजिद्धनजिदश्वजिद्यः २२

इमं नो यज्ञं विहवे जुषस्व । अस्य कुर्मो हरिवो मेदिनं त्वा । असंमृष्टो जायसे मातृवोः शुचिः । मन्द्रः कविरुदतिष्ठो विवस्वतः । घृतेन त्वा वर्धयन्नग्न आहुत । धूमस्ते केतुरभवद्दिवि श्रितः । अग्निरग्रे प्रथमो देवतानाम् । संयातानामुत्तमो विष्णुरासीत् । यजमानाय परिगृह्य देवान् । दीक्षयेदँ हविरागच्छतं नः २३

अग्निश्च विष्णो तप उत्तमं महः । दीक्षापालेभ्यो वनतँ हि शक्रा । विश्वैर्देवैर्यज्ञियैः संविदानौ । दीक्षामस्मै यजमानाय धत्तम् । प्र तद्विष्णुः स्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा । नू मर्तो दयते सनिष्यन्यः । विष्णव उरुगायाय दाशत् २४

प्र यः सत्राचा मनसा यजातै । एतावन्तं नर्यमाविवासात् । विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिँ सुजनिमा चकार । त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषँ ह्यस्य स्थविरस्य नाम २५

होतारं चित्ररथमध्वरस्य । यज्ञस्य यज्ञस्य केतुँ रुशन्तम् । प्रत्यर्धिं देवस्य देवस्य मह्ना । श्रिया त्वाग्निमतिथिं जनानाम् । आ नो विश्वाभिरूतिभिः सजोषाः । ब्रह्म जुषाणो हर्यश्व याहि । वरीवृजत्स्थविरेभिः सुशिप्र ।

अस्मे दधद्वृषणँ शुष्ममिन्द्र । इन्द्रः सुवर्षा जनयन्नहानि । जिगायोशिग्भिः पृतना अभिश्रीः २६

प्रारोचयन्मनवे केतुमह्नाम् । अविन्दज्ज्योतिर्बृहते रणाय । अश्विनाववसे निह्वये वाम् । आ नूनं यातँ सुकृताय विप्रा । प्रातर्युक्तेन सुवृता रथेन । उपागच्छतमवसागतं नः । अविष्टं धीष्वश्विना न आसु । प्रजावद्रेतो अह्वयं नो अस्तु । आवां तोके तनये तूतुजानाः । सुरत्नासो देववीतिं गमेम २७

त्वँ सोम क्रतुभिः सुक्रतुर्भूः । त्वं दक्षैःसुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः । अषाढं युत्सु पृतनासु पप्रियम् । सुवर्षामप्स्वां वृजनस्य गोपाम् । भरेषुजाँ सुक्षितिँ सुश्रवसम् । जयन्तं त्वामनु मदेम सोम । भवा मित्रो न शेव्यो घृतासुतिः । विभूतद्युम्न एवया उ सप्रथाः २८

अधा ते विष्णो विदुषाचिदृध्यः । स्तोमो यज्ञस्य राध्यो हविष्मतः । यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवात् । सेदुः श्रवोभिर्युज्यंचिदभ्यसत् । तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य । गर्भँ हविषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन । बृहत्ते विष्णो सुमतिं भजामहे २९

इमा धाना घृतस्नुवः । हरी इहोपवक्षतः । इन्द्रँ सुखतमे रथे । एष ब्रह्मा प्र ते महे । विदथे शँसिषँ हरी ।य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् । इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु ३०

हरिवर्पसं गिरः । आ चर्षणिप्रा वृषभो जनानाम् । राजा कृष्टीनां पुरुहूत इन्द्रः । स्तुतः श्रवस्यन्नवसोप मद्रिक् । युक्त्वा हरी वृषणायाह्यर्वाङ्।प्र यत्सिन्धवः प्रसवं यदायन् । आपः समुद्रँ रथ्येव जग्मुः । अतश्चिदिन्द्रः सदसो वरीयान् । यदीँ सोमः पृणाति दुग्धो अँशुः । ह्वयामसि त्वेन्द्र याह्यर्वाङ् ३१

अरं ते सोमस्तनुवे भवाति । शतक्रतो मादयस्वा सुतेषु । प्रास्माँ अव पृतनासु प्र युत्सु । इन्द्राय सोमाः प्रदिवो विदानाः । ऋभुर्येभिर्वृषपर्वा विहायाः । प्रयम्यमाणान्प्रति षू गृभाय । इन्द्र पिब वृषधूतस्य वृष्णः । अहेडमान उपयाहि यज्ञम् । तुभ्यं पवन्त इन्दवः सुतासः । गावो न वज्रिन्त्स्वमोको अच्छ ३२

इन्द्रागहि प्रथमो यज्ञियानाम् । या ते काकुत्सुकृता या वरिष्ठा । यया शश्वत्पिबसि मध्व ऊर्मिम् । तया पाहि प्र ते अध्वर्युरस्थात् । सं ते वज्रो वर्ततामिन्द्र गव्युः । प्रातर्युजा विबोधय । अश्विनावेह गच्छतम् । अस्य सोमस्य पीतये । प्रातर्यावाणा प्रथमा यजध्वम् । पुरा गृध्रादररुषः पिबाथः । प्रातर्हि यज्ञमश्विना दधाते । प्रशँसन्ति कवयः पूर्वभाजः । प्रातर्यजध्वमश्विना हिनोत । न सायमस्ति देवया अजुष्टम् । उतान्यो अस्मद्यजते विचायः । पूर्वः पूर्वो यजमानो वनीयान् ३३

नक्तं जातास्योषधे । रामे कृष्णे असिक्नि च । इदँ रजनि रजय । किलासं पलितं च यत् । किलासं च पलितं च । निरितो नाशया पृषत् । आ नः स्वो अश्नुतां वर्णः । परा श्वेतानि पातय । असितं ते निलयनम् । आस्थानमसितं तव ३४

असिक्नियस्योषधे । निरितो नाशया पृषत् । अस्थिजस्य किलासस्य । तनूजस्य च यत्त्वचि । कृत्यया कृतस्य ब्रह्मणा । लक्ष्म श्वेतमनीनशम् । सरूपा नाम ते माता । सरूपो नाम ते पिता । सरूपास्योषधे सा । सरूपमिदं कृधि ३५

शुनँ हुवेम मघवानमिन्द्रम् । अस्मिन्भरे नृतमं वाजसातौ । शृण्वन्तमुग्रमूतये । समत्सु । घ्नन्तं वृत्राणि संजितं धनानाम् । धूनुथ द्यां पर्वतान्दाशुषे वसु । नि वो वना जिहते यामनो भिया । कोपयथ पृथिवीं पृश्निमातरः । युधे यदुग्राः पृषतीरयुग्ध्वम् । प्रवेपयन्ति पर्वतान् । विविञ्चन्ति वनस्पतीन् ३६

प्रोऽवारत मरुतो दुर्मदा इव । देवासः सर्वया विशा । पुरुत्रा हि सदृङ्ङसि

। विशो विश्वा अनु प्रभु । समत्सु त्वा हवामहे । समत्स्वग्निमवसे । वाजयन्तो हवामहे । वाजेषु चित्रराधसम् । संगच्छध्वँ संवदध्वम् । सं वो मनाँसि जानताम् ३७

देवा भागं यथा पूर्वे । संजानाना उपासत । समानो मन्त्रः समितिः समानी ।समानं मनः सह चित्तमेषाम् । समानं केतो अभि सँरभध्वम् । संज्ञानेन वो हविषा यजामः । समानी व आकूतिः । समाना हृदयानि वः । समा-नमस्तु वो मनः । यथा वः सुसहासति ३८

संज्ञानं नः स्वैः । संज्ञानमरणैः । संज्ञानमश्विना युवम् । इहास्मासु निय-च्छतम् । संज्ञानं मे बृहस्पतिः । संज्ञानँ सविताकरत् । संज्ञानमश्विना युवम् । इह मह्यं नियच्छतम् । उप च्छायामिव घृणेः । अगन्म शर्म ते वयम् ३९

अग्ने हिरण्यसंदृशः । अदब्धेभिः सवितः पायुभिष्ट्वम् । शिवेभिरद्य परिपाहि नो गयम् । हिरन्यजिह्वः सुविताय नव्यसे । रक्षा माकिर्नो अघशँस ईशत । मदेमदे हि नो ददुः । युथा गवामृजुक्रतुः । संगृभाय पुरू शता । उभया हस्त्या वसु । शिशीहि राय आभर ४०

शिप्रिन्वाजानां पते । शचीवस्तव दँसना । आ तू न इन्द्र भाजय । गोष्वश्वेषु शुभ्रुषु । सहस्रेषु तुवीमघ । यद्देवा देव हेडनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा यूयम् । ऋतस्यर्तेन मुञ्चत । ऋतस्यर्तेनादित्याः ४१

यजत्रा मुञ्चतेह मा । यज्ञैर्वो यज्ञवाहसः । आशिक्षन्तो न शेकिम । मेदस्वता यजमानाः । स्रुचाज्येन जुह्वतः । अकामा वो विश्वे देवाः । शिक्षन्तो नोपशेकिम । यदि दिवा यदि नक्तम् । एन एनस्योऽकरत् । भूतं मा तस्माद्भव्यं च ४२

द्रुपदादिव मुञ्चतु । द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाज्यम् । विश्वे मुञ्चन्तु मैनसः । उद्वयं तमसस्परि । पश्यन्तो

ज्योतिरुत्तरम् । देवं देवत्रा सूर्यम् । अगन्म ज्योतिरुत्तमम् ४३

वृषा सो अँशुः पवते हविष्मान्त्सोमः । इन्द्रस्य भाग ऋतयुः शतायुः । स मा वृषाणं वृषभं कृणोतु । प्रियं विशाँ सर्ववीरँ सुवीरम् । कस्य वृषा सते सचा । नियुत्वान्वृषभो रणत् । वृत्रहा सोमपीतये । यस्ते शृङ्ग वृषो नपात् । प्रणपात्कुण्डपाय्यः । न्यस्मिन्दध्र आ मनः ४४

तँ सध्रीचीरूतयो वृष्णियानि । पौँस्यानि नियुतः सश्चुरिन्द्रम् । समुद्रं न सिन्धव उक्थशुष्माः । उरुव्यचसं गिर आविशन्ति । इन्द्राय गिरो अनिशितसर्गाः । अपः प्रैरयन्त्सगरस्य बुध्नात् । यो अक्षेणेव चक्रिया शचिभिः । विष्वक्तस्तम्भ पृथिवीमुत द्याम् । अक्षोदयच्छवसा क्षाम बुध्नम् । वार्णवातस्तविषीभिरिन्द्रः ४५

दृढान्यौघ्नादुशमान ओजः । अवाभिनत्ककुभः पर्वतानाम् । आ नो अग्ने सुकेतुना । ꣳविश्वायुपोषसम् । मार्डीकं धेहि जीवसे । त्वँ सोम महे भगम् । त्वं यून ऋतायते । दक्षं दधासि जीवसे । रथं युञ्जते मरुतः शुभे सुगम्सूरो न मित्रावरुणा गविष्टिषु ४६

रजाँसि चित्रा विचरन्ति तन्यवः । दिवः सम्राजा पयसा न उक्षतम् । वाचँ सु मित्रावरुणाविरावतीम् । पर्जन्यश्चित्रां वदति त्विषीमतीम् । अभ्रा वसत मरुतः सु मायया । द्यां वर्षयतमरुणामरेपसम् । अयुक्त सप्त शुन्ध्युवः । सूरो रथस्य नप्त्रियः । ताभिर्याति स्वयुक्तिभिः । वहिष्ठेभिर्विहरन्यासि तन्तुम् ४७

अवव्ययन्नसितं देव वस्वः । दविध्वतो रश्मयः सूर्यस्य । चर्मेवावाधुस्तमो अप्स्वन्तः । पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । अच्छा वद तवसं गीर्भिराभिः । स्तुहि पर्जन्यं नमसा विवास । कनि-क्रदद्वृषभो जीरदानुः । रेतो दधात्वोषधीषु गर्भम् ४८

यो गर्भमोषधीनाम् । गवां कृणोत्यर्वताम् । पर्जन्यः पुरुषीणाम् । तस्मा

इदास्ये हविः । जुहोता मधुमत्तमम् । इडां नः संयतं करत् । तिस्रो यदग्ने शरदस्त्वामित् । शुचिं घृतेन शुचयः सपर्यन् । नामानि चिद्दधिरे यज्ञियानि । असूदयन्त तनुवः सुजाताः ४९

इन्द्रश्च नः शुनासीरौ । इमं यज्ञं मिमिक्षतम् । गर्भं धत्तँ स्वस्तये । ययोरिदं विश्वं भुवनमाविवेश । ययोरानन्दो निहितो महश्च । शुनासीरावृतुभिः संविदानौ । इन्द्रवन्तौ हविरिदं जुषेथाम् । आ घा ये अग्निमिन्धते । स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा । अग्ने इन्द्रश्च मेदिना । हथो वृत्राण्यप्रति । युवँ हि वृत्रहन्तमा । याभ्याँ सुवरजयन्नग्र एव । यावातस्थतुर्भुवनस्य मध्ये । प्रचर्षणी वृषणा वज्रबाहू ।अग्नी इन्द्रा वृत्रहणा हुवे वाम् ५०

उत नः प्रिया प्रियासु । सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्याभूत् । इमा जुह्वाना युष्मदा नमोभिः । प्रति स्तोमँ सरस्वति जुषस्व । तव शर्मन्प्रियतमे दधानाः । उपस्थेयाम शरणं न वृक्षम् । त्रीणि पदा विचक्रमे । विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन् ५१

तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः । क्रत्वा दा अस्थु श्रेष्ठः । अद्य त्वा वन्वन्त्सुरेक्णाः । मर्त आनाश सुवृक्तिम् । इमा ब्रह्म ब्रह्मवाह । प्रिया त आ बर्हिः सीद । वीहि सूर पुरोडाशम् ५२

उप नः सूनवो गिरः । शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः । अद्या नो देव सवितः । प्रजावत्सावीः सौभगम् । परा दुष्ष्वप्नियँ सुव । विश्वानि देव सवितः । दुरितानि परासुव । यद्भद्रं तन्म आसुव । शुचिमर्कैर्बृहस्पतिम् ५३

अध्वरेषु नमस्यत । अनाम्योज आचके । याधारयन्त देवा सुदक्षा दक्षपितारा । असुर्याय प्रमहसा । स इत्क्षेति सुधित ओकसि स्वे । तस्मा इडा पिन्वते विश्वदानी । तस्मै विशः स्वयमेवानमन्ति । यस्मिन्ब्रह्मा राजनि पूर्व एति

। सकूतिमिन्द्र सच्युतिम् । सच्युतिं जघनच्युतिम् ५४

कनात्काभां न स्राभर । प्रयप्स्यन्निव सक्थ्यौ । वि न इन्द्र मृधो जहि । कनीखुनदिव सापयन् । स्रभि नः सुष्टुतिं नय । प्रजापतिः स्त्रियां यशः । मुष्कयोरदधात्सपम् । कामस्य तृप्तिमानन्दम् । तस्याग्ने भाजयेह मा । मोदः प्रमोद स्रानन्दः ५५

मुष्कयोर्निहितः सपः । सृत्वेव कामस्य तृप्याणि । दक्षिणानां प्रतिग्रहे । मनसश्चित्तमाकूतिम् । वाचः सत्यमशीमहि । पशूनाँ रूपमन्नस्य । यशः श्रीः श्रयतां मयि । यथाहमस्या स्रतृपँ स्त्रियै पुमान् । यथा स्त्री तृप्यति पुँसि प्रिये प्रिया । एवं भगस्य तृप्याणि ५६

यज्ञस्य काम्यः प्रियः । ददामीत्यग्निर्वदति । तथेति वायुराह तत् । हन्तेति सत्यं चन्द्रमाः । स्रादित्यः सत्यमोमिति । स्रापस्तत्सत्यमाभरन् । यशो यज्ञस्य दक्षिणाम् । स्रसौ मे कामः समृध्यताम् । न हि स्पशमविदन्नन्यमस्मात् । वैश्वानरात्पुरएतारमग्नेः ५७

स्रथेममन्थन्नमृतममूराः । वैश्वानरं क्षेत्रजित्याय देवाः । येषामिमे पूर्वे स्रर्मास स्रासन् । स्रयूपाः सद्म विभृता पुरूणि । वैश्वानर त्वया ते नुत्ताः । पृथिवीमन्यामभितस्थुर्जनासः । पृथिवीं मातरं महीम् । स्रन्तरिक्षमुपब्रुवे । बृहतीमूतये दिवम् । विश्वं बिभर्ति पृथिवी ५८

स्रन्तरिक्षं विपप्रथे । दुहे द्यौर्बृहती पयः । न ता नशन्ति न दभाति तस्करः । नैना स्रमित्रो व्यथिरादधर्षति । देवाँश्च याभिर्यजते ददाति च । ज्योगित्ताभिः सचते गोपतिः सह । न ता स्रर्वा रेणुककाटो स्रश्नुते । न सँस्कृतत्रमुपयन्ति ता स्रभि । उरुगायमभयं तस्य ता स्रनु । गावो मर्त्यस्य विचरन्ति यज्वनः ५९

रात्री व्यख्यदायती ।पुरुत्रा देव्यक्षभिः । विश्वा स्रधि श्रियोऽधित । उप ते गा इवाकरम् । वृणीष्व दुहितर्दिवः । रात्री स्तोमं न जिग्युषी ।देवीं

वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ६०

यद्वाग्वदन्त्यविचेतनानि । राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयाँसि । क्व स्विदस्याः परमं जगाम । गौरी मिमाय सलिलानि तक्षती ।एकपदी द्विपदी सा चतुष्पदी ।अष्टापदी नवपदी बभूवुषी ।सहस्राक्षरा परमे व्योमन् । तस्याँ समुद्रा अधि विक्षरन्ति । तेन जीवन्ति प्रदिशश्चतस्रः ६१

ततः क्षरत्यक्षरम् । तद्विश्वमुपजीवति । इन्द्रा सूरा जनयन्विश्वकर्मा । मरुत्वाँ अस्तु गणवान्त्सजातवान् । अस्य स्नुषा श्वशुरस्य प्रशिष्टिम् । सपत्ना वाचं मनसा उपासताम् । इन्द्रः सूरो अतरद्रजाँसि । स्नुषा सपत्नः श्वशु-रोऽयमस्तु । अयँ शत्रूञ्जयतु जर्हृषाणः । अयं वाजं जयतु वाजसातौ । अग्निः क्षत्रभृदनिभृष्टमोजः । सहस्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानः समिधान उग्रः । आन्तरिक्षमरुहदगन्द्याम् ६२

वृषास्यँशुर्वृषभाय गृह्यसे । वृषायमुग्रो नृचक्षसे । दिव्यः कर्मण्यो हितो बृहन्नाम । वृषभस्य या ककुत् । विषूवान्विष्णो भवतु । अयं यो मामको वृषा । अथो इन्द्र इव देवेभ्यः । विब्रवीतु जनेभ्यः । आयुष्मन्तं वर्चस्वन्तम् । अथो अधिपतिं विशाम् ६३

अस्याः पृथिव्या अध्यक्षम् । इममिन्द्र वृषभं कृणु । यः सुशृङ्गः सुवृषभः । कल्याणो द्रोण आहितः । कार्षीवलप्रगाणेन । वृषभेण यजामहे । वृषभेण यजमानाः । अक्रूरेणेव सर्पिषा । मृधश्च सर्वा इन्द्रेण । पृतनाश्च जयामसि ६४

यस्यायमृषभो हविः । इन्द्राय परिणीयते । जयाति शत्रुमायन्तम् । अथो हन्ति पृतन्यतः । नृणामह प्रणीरसत् । अग्र उद्भिन्दतामसत् । इन्द्र शुष्मं तनुवा मेरयस्व । नीचा विश्वा अभितिष्ठाभिमातीः । निश‍ृणीह्याबाधं यो नो अस्ति । उरुं नो लोकं कृणुहि जीरदानो ६५

प्रेह्यभिप्रेहि प्रभरा सहस्व । मा विवेनो विशृणुष्वा जनेषु । उदीडितो वृषभ तिष्ठ शुष्मैः । इन्द्र शत्रून्पुरो अस्माक युध्य । अग्ने जेता त्वं जय । शत्रून्त्सहस ओजसा । वि शत्रून्विमृधो नुद । एतं ते स्तोमं तुविजात विप्रः । रथं न धीरः स्वपा अतक्षम् । यदीदग्ने प्रति त्वं देव हर्याः ६६

सुवर्वतीरप एना जयेम । यो घृतेनाभिमानितः । इन्द्र जैत्राय जज्ञिषे । स नः संकासु पारय । पृतनासाह्येषु च । इन्द्रो जिगाय पृथिवीम् । अन्तरिक्षँ सुवर्महत् । वृत्रहा पुरुचेतनः । इन्द्रो जिगाय सहसा सहाँसि । इन्द्रो जिगाय पृतनानि विश्वा ६७

इन्द्रो जातो वि पुरो रुरोज । स नः परस्पा वरिवः कृणोतु । अयं कृत्नुरगृभीतः । विश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रः काव्येन । वायुरग्रेगा यज्ञप्रीः । साकं गन्मनसा यज्ञम् । शिवो नियुद्भिः शिवाभिः । वायो शुक्रो अयामि ते । मध्वो अग्रं दिविष्टिषु ६८

आयाहि सोमपीतये । स्वारुहो देव नियुत्वता । इममिन्द्र वर्धय क्षत्रियाणाम् । अयं विशां विश्पतिरस्तु राजा । अस्मा इन्द्र महि वर्चाँसि धेहि । अवर्चसं कृणुहि शत्रुमस्य । इममाभज ग्रामे अश्वेषु गोषु । निरमुं भज योऽमित्रो अस्य । वर्ष्मन्क्षत्रस्य ककुभि श्रयस्व । ततो न उग्रो विभजा वसूनि ६७

अस्मे द्यावापृथिवी भूरि वामम् । संदुहाथां घर्मदुघेव धेनुः । अयँ राजा प्रिय इन्द्रस्य भूयात् । प्रियो गवामोषधीनामुतापाम् । युनज्मि त उत्तरावन्तमिन्द्रम् । येन जयासि न पराजयासै । स त्वाकरेकवृषभँ स्वानाम् । अथो राजन्नुत्तमं मानवानाम् । उत्तरस्त्वमधरे ते सपत्नाः । एकवृषा इन्द्रसखा जिगीवान् ७०

विश्वा आशाः पृतनाः संजयं जयन् । अभितिष्ठ शत्रूयतः सहस्व । तुभ्यं भरन्ति क्षितयो यविष्ठ । बलिमग्ने अन्ति त ओत दूरात् । आ भन्दिष्ठस्य सुमतिं चिकिद्धि । बृहत्ते अग्ने महि शर्म भद्रम् । यो देह्यो अनमयद्वधस्नैः

। यो अर्यपत्नीरुषसश्चकार । स निरुध्या नहुषो यह्वो अग्निः । विशश्चक्रे बलिहृतः सहोभिः ७१

प्र सद्यो अग्ने अत्येष्यन्यान् । आविर्यस्मै चारुतरो बभूथ । ईडेऽन्यो वपुष्यो विभावा । प्रियो विशामतिथिर्मानुषीणाम् । ब्रह्म ज्येष्ठा वीर्या संभृतानि । ब्रह्माग्रे ज्येष्ठं दिवमाततान । ऋतस्य ब्रह्म प्रथमोत जज्ञे । तेनार्हति ब्रह्मणा स्पर्धितुं कः । ब्रह्म स्रुचो घृतवतीः । ब्रह्मणा स्वरवो मिताः ७२

ब्रह्म यज्ञस्य तन्तवः । ऋत्विजो ये हविष्कृतः । शृङ्गाणीवेच्छृङ्गिणाँ संददृश्रिरे । चषालवन्तः स्वरवः पृथिव्याम् । ते देवासः स्वरवस्तस्थिवाँसः । नमः सखिभ्यः सन्नान्मावगात । अभिभूरग्निरतरद्रजाँसि । स्पृधो विहत्य पृतना अभिश्रीः । जुषाणो म आहुतिं मा महिष्ट । हत्वा सपत्नान्वरिवस्करं नः । ईशानं त्वा भुवनानामभिश्रियम् । स्तौम्यग्न उरुकृतँ सुवीरम् । हविर्जुषाणः सपत्नाँ अभिभूरसि । जहि शत्रूँरप मृधो नुदस्व ७३

स प्रत्नवन्नवीयसा । अग्ने द्युम्नेन संयता । बृहत्तनन्थ भानुना । नवं नु स्तोममग्नये । दिवः श्येनाय जीजनम् । वसोः कुविद्वनाति नः । स्वारुहा यस्य श्रियो दृशे । रयिर्वीरवतो यथा । अग्रे यज्ञस्य चेततः । अदाभ्यः पुरएता ७४

अग्निर्विशां मानुषीणाम् । तूर्णी रथः सदा नवः । नवँ सोमाय वाजिने । आज्यं पयसोऽजनि । जुष्टँ शुचितमं वसु । नवँ सोम जुषस्व नः । पीयूषस्येह तृप्णुहि । यस्ते भाग ऋता वयम् । नवस्य सोम ते वयम् । आ सुमतिं वृणीमहे ७५

स नो रास्व सहस्रिणः । नवँ हविर्जुषस्व नः । ऋतुभिः सोम भूतमम् । तदङ्ग प्रतिहर्य नः । राजन्त्सोम स्वस्तये । नवँ स्तोमं नवँ हविः । इन्द्राग्निभ्यां निवेदय । तज्जुषेताँ सचेतसा । शुचिं नु स्तोमं नवजातमद्य । इन्द्राग्नी वृत्रहणा जुषेथाम् ७६

उभा हि वाँ सुहवा जोहवीमि । ता वाजँ सद्य उशते धेष्ठा । अग्निरिन्द्रो नवस्य नः । अस्य हव्यस्य तृप्यताम् । इह देवौ सहस्त्रिणौ । यज्ञं न आ हि गच्छताम् । वसुमन्तँ सुवर्विदम् । अस्य हव्यस्य तृप्यताम् । अग्निरिन्द्रो नवस्य नः । विश्वान्देवाँस्तर्पयत ७७

हविषोऽस्य नवस्य नः । सुवर्विदो हि जज्ञिरे । एदं बर्हिः सुष्टरीमा नवेन । अयं यज्ञो यजमानस्य भागः । अयं बभूव भुवनस्य गर्भः । विश्वे देवा इदमद्यागमिष्ठाः । इमे नु द्यावापृथिवी समीची ।तन्वाने यज्ञं पुरुपेशसं धिया । आस्मै पृणीतां भुवनानि विश्वा । प्रजां पुष्टिममृतं नवेन ७८

इमे धेनू अमृतं ये दुहाते । पयस्वत्युत्तरामेतु पुष्टिः । इमं यज्ञं जुषमाणे नवेन । समीची द्यावापृथिवी घृताची ।यविष्ठो हव्यवाहनः । चित्रभानुर्घृतासुतिः । नवजातो विरोचसे । अग्ने तत्ते महित्वनम् । त्वमग्ने देवताभ्यः । भागे देव न मीयसे ७९

स एना विद्वान्यद्दयसि । नवँ स्तोमं जुषस्व नः । अग्निः प्रथमः प्राश्नातु । स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः । कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेः समनैष्ट देवाः । त्वया वसेन समशीमहि त्वा । स नो मयोभूः पितो आविशस्व । शं तोकाय तनुवे स्योनः । एतमु त्यं मधुना संयुतं यवम् । सरस्वत्या अधिमनाव चर्कृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः । कीनाशा आसन्मरुतः सुदानवः ८० ४

प्राणो रक्षति विश्वमेजत् । इर्यो भूत्वा बहुधा बहूनि । स इत्सर्वं व्यानशे । यो देवो देवेषु विभूरन्तः । आवृदूदात्क्षेत्रियध्वगद्वृषा । तमित्प्राणं मनसोपशिक्षत । अग्रं देवानामिदमत्तु नो हविः । मनसश्चित्तेदम् । भूतं भव्यं च गुप्यते । तद्धि देवेष्वग्रियम् १

आ न एतु पुरश्चरम् । सह देवैरिमँ हवम् । मनः श्रेयसिश्रेयसि । कर्मन्यज्ञपतिं दधत् । जुषतां मे वागिदँ हविः । विराड्देवी पुरोहिता । हव्यवाडनपायिनी ।यया रूपाणि बहुधा वदन्ति । पेशाँसि देवाः परमे जनित्रे । सा नो

विराडनपस्फुरन्ती २

वाग्देवी जुषतामिदँ हविः । चक्षुर्देवानां ज्योतिरमृते न्यक्तम् । अस्य विज्ञानाय बहुधा निधीयते । तस्य सुम्नमशीमहि । मा नो हासीद्विचक्षणम् । आयुरिन्नः प्रतीर्यताम् । अनन्धाश्चक्षुषा वयम् । जीवा ज्योतिरशीमहि । सुवर्ज्योतिरुतामृतम् । श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम् । श्रोत्रेण वाचं बहुधोद्यमानाम् । श्रोत्रेण मोदश्च महश्च श्रूयते । श्रोत्रेण सर्वा दिश आशृणोमि । येन प्राच्या उत दक्षिणा । प्रतीच्यै दिशः शृण्वन्त्युत्तरात् । तदिच्छ्रोत्रं बहुधा उद्यमानम् । अरान्न नेमिः परि सर्वं बभूव ३

उदेहि वाजिन्यो अस्यप्स्वन्तः । इदँ राष्ट्रमाविश सूनृतावत् । यो रोहितो विश्वमिदं जजान । स नो राष्ट्रेषु सुधितान्दधातु । रोहँरोहँ रोहित आरुरोह । प्रजाभिर्वृद्धिं जनुषामुपस्थम् । ताभिः सँरब्धो अविदत्षडुर्वीः । गातुं प्रपश्यन्निह राष्ट्रमाहाः । आहार्षीद्राष्ट्रमिह रोहितः । मृधो व्यास्थदभयं नो अस्तु ४

अस्मभ्यं द्यावापृथिवी शक्वरीभिः । राष्ट्रं दुहाथामिह रेवतीभिः । विममर्श रोहितो विश्वरूपः । समाचकाणः प्ररुहो रुहश्च । दिवं गत्वाय महता महिम्ना । वि नो राष्ट्रमुनत्तु पयसा स्वेन । यास्ते विशस्तपसा संबभूवुः । गायत्रं वत्समनु तास्त आगुः । तास्त्वा विशन्तु महसा स्वेन । सं माता पुत्रो अभ्येतु रोहितः ५

यूयमुग्रा मरुतः पृश्निमातरः । इन्द्रेण सयुजा प्रमृणीथ शत्रून् । आ वो रोहितो अशृणोदभिद्यवः । त्रिसप्तासो मरुतः स्वादुसंमुदः । रोहितो द्यावापृथिवी जजान । तस्मिँस्तन्तुं परमेष्ठी ततान । तस्मिञ्छिश्रिये अज एकपात् । अदृँहद्द्यावापृथिवी बलेन । रोहितो द्यावापृथिवी अदृँहत् । तेन सुवः स्तभितं तेन नाकः ६

सो अन्तरिक्षे रजसो विमानः । तेन देवाः सुवरन्वविन्दन् । सुशेवं त्वा भानवो दीदिवाँसम् । समग्रासो जुह्वो जातवेदः । उक्षन्ति त्वा वाजिनमा

घृतेन । सँसमग्ने युवसे भोजनानि । अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यँ सुयममाकृणुष्व । शत्रूयतामभितिष्ठा महाँसि ७

पुनर्न इन्द्रो मघवा ददातु । धनानि शक्रो घन्यः सुराधाः । अर्वाचीनम्कृणुतां याचितो मनः । श्रुष्टी नो अस्य हविषो जुषाणः । यानि नो जिनन्धनानि । जहर्थ शूर मन्युना । इन्द्रानुविन्द नस्तानि । अनेन हविषा पुनः । इन्द्र आशाभ्यः परि । सर्वाभ्योऽभयं करत् ८

जेता शत्रून्विचर्षणिः । आकूत्यै त्वा कामाय त्वा समृधे त्वा । पुरो दधे अमृतत्वाय जीवसे । आकूतिमस्यावसे । काममस्य समृद्ध्यै । इन्द्रस्य युञ्जते धियः । आकूतिं देवीं मनसः पुरो दधे । यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा सकामः । विदेयमेनद्धृदये निविष्टम् ९

सेदग्निरग्नीँरत्येत्यन्यान् । यत्र वाजी तनयो वीडुपाणिः । सहस्रपाथा अक्षरा समेति । आशानां त्वाशापालेभ्यः । चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यः । वेधेम हविषा वयम् । विश्वा आशा मधुना सँसृजामि । अनमीवा आप ओषधयो भवन्तु । अयं यजमानो मृधो व्यस्यताम् १०

अगृभीताः पशवः सन्तु सर्वे । अग्निः सोमो वरुणो मित्र इन्द्रः । बृहस्पतिः सविता यः सहस्री ।पूषा नो गोभिरवसा सरस्वती ।त्वष्टा रूपाणि समनक्तु यज्ञैः । त्वष्टा रूपाणि दधती सरस्वती ।पूषा भगँ सविता नो ददातु । बृहस्पतिर्ददिन्द्रः सहस्रम् । मित्रो दाता वरुणः सोमो अग्निः ११

आ नो भर भगमिन्द्र द्युमन्तम् । नि ते देष्णस्य धीमहि प्ररेके । उर्व इव पप्रथे कामो अस्मे । तमापृणा वसुपते वसूनाम् । इमं कामं मन्दया गोभिरश्वैः । चन्द्रवता राधसा पप्रथश्च । सुवर्यवो मतिभिस्तुभ्यं विप्राः । इन्द्राय वाहः कुशिकासो अक्रन् । इन्द्रस्य नु वीर्याणि प्रवोचम् । यानि चकार प्रथमानि वज्री १२

अहन्नहिमन्वपस्ततर्द । प्र वक्षणा अभिनत्पर्वतानाम् । अहन्नहिं पर्वते शिश्रियाणम् । त्वष्टास्मै वज्रँ स्वर्यं ततक्ष । वाश्रा इव धेनवः स्यन्दमानाः । अञ्जः समुद्रमवजग्मुरापः । वृषायमाणोऽवृणीत सोमम् । त्रिकद्रुकेष्व-पिबत्सुतस्य । आ सायकं मघवादत्त वज्रम् । अहन्नेनं प्रथमजामहीनाम् १३

यदिन्द्राहन्प्रथमजामहीनाम् । आन्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासम् । तादीक्ना शत्रून्न किलाविवित्से । अहन्वृत्रं वृत्रतरं व्यँसम् । इन्द्रो वज्रेण महता वधेन । स्कन्धाँसीव कुलिशेना विवृक्णा । १३अहिः शयत उपपृक्पृथिव्याम् । अयोध्येव दुर्मद आ हि जुह्वे । महावीरं तु विबाधमृजीषम् १४

नातारीरस्य समृतिं वधानाम् । सँ रुजानाः । पिपिष इन्द्रशत्रुः । विश्वो विहाया अरतिः । वसुर्दधे हस्ते दक्षिणे । तरणिर्न शिश्रथत् । श्रवस्यया न शिश्रथत् । विश्वस्मा इदिषुध्यसे । देवत्रा हव्यमूहिषे । विश्वस्मा इत्सुकृते वारमृणवति । अग्निर्द्वारा व्यृणवति १५

उदुज्जिहानो अभि काममीरयन् । प्रपृञ्चन्विश्वा भुवनानि पूर्वथा । आ केतुना सुषमिद्धो यजिष्ठः । कामं नो अग्ने अभिहर्य दिग्भ्यः । जुषाणो हव्यममृतेषु दूढ्यः । आ नो रयिं बहुला गोमतीमिषम् । निधेहि यक्षदमृतेषु भूषन् । अश्विना यज्ञमागतम् । दाशुषः पुरुदँससा । पूषा रक्षतु नो रयिम् १६

इमं यज्ञमश्विना वर्धयन्ता । इमौ रयिं यजमानाय धत्तम् । इमौ पशून्रक्षतां विश्वतो नः । पूषा नः पातु सदमप्रयुच्छन् । प्र ते महे सरस्वति । सुभगे वाजिनीवति । सत्यवाचे भरे मतिम् । इदं ते हव्यं घृतवत्सरस्वति । सत्यवाचे प्रभरेमा हवींषि । इमानि ते दुरिता सौभगानि । तेभिर्वयँ सुभः स्याम १७

यज्ञो रायो यज्ञ ईशे वसूनाम् । यज्ञः सस्यानामुत सुक्षितीनाम् । यज्ञ इष्टः पूर्वचित्तिं दधातु । यज्ञो ब्रह्मण्वाँ अप्येतु देवान् । अयं यज्ञो वर्धतां गोभिरश्वैः

। इयं वेदिः स्वपत्या सुवीरा । इदं बर्हिरति बर्हीँष्यन्या । इमं यज्ञं विश्वे अवन्तु देवाः । भग एव भगवाँ अस्तु देवाः । तेन वयं भगवन्तः स्याम १८

तं त्वा भग सर्व इज्ञोहवीमि । स नो भग पुरएता भवेह । भग प्रणेतर्भग सत्यराधः । भगेमां धियमुदवददन्नः । भग प्र णो जनय गोभिरश्वैः । भग प्र नृभिर्नृवन्तः स्याम । शश्वतीः समा उपयन्ति लोकाः । शश्वतीः समा उपयन्त्यापः । इष्टं पूर्तँ शश्वतीनाँ समानाँ शाश्वतेन । हविषेष्ट्वानन्तं लोकं परमारुरोह १९

इयमेव सा या प्रथमा व्यौच्छत् । सा रूपाणि कुरुते पञ्च देवी।द्वे स्वसारौ वयतस्तन्त्रमेतत् । सनातनं विततँ षणमयूखम् । अवान्याँस्तन्तून्किरतो धत्तो अन्यान् । नावपृज्याते न गमाते अन्तम् । आ वो यन्तूदवाहासो अद्य । वृष्टिं ये विश्वे मरुतो जुनन्ति । अयं यो अग्निर्मरुतः समिद्धः । एतं जुषध्वं कवयो युवानः २०

धारावरा मरुतो धृष्णु वोजसः । मृगा न भीमास्तविषेभिरूर्मिभिः । अग्नयो न शुशुचाना ऋजीषिणः । भ्रुमिं धमन्त उप गा अवृणवत । विचक्रमे त्रिर्देवः । आवेधसं नीलपृष्ठं बृहन्तम् । बृहस्पतिँ सदने सादयध्वम् । सादद्योनिं दम आदीदिवाँसम् । हिरण्यवर्णमरुषँ सपेम । स हि शुचिः शतपत्रः स शुन्ध्यूः २१

हिरण्यवाशीरिषिरः सुवर्षाः । बृहस्पतिः स स्वावेश ऋष्वाः । पूरू सखिभ्य आसुतिं करिष्ठः । पूषँस्तव व्रते वयम् । न रिष्येम कदा चन । स्तोतारस्त इह स्मसि । यास्ते पूषन्नावो अन्तः समुद्रे । हिरण्ययीरन्तरिक्षे चरन्ति । याभिर्यासि दूत्याँ सूर्यस्य । कामेन कृतः श्रव इच्छमानः २२

अरण्यान्यरण्यान्यसौ । या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि । न त्वा भीरिव विन्दती३।वृषारवाय वदते । यदुपावति चिच्चिकः । आघाटी-भिरिव धावयन् । अरण्यानिर्महीयते । उत गाव इवादन् । उतो वेश्मेव

दृश्यते २३

उतो अरण्यानिः सायम् । शकटीरिव सर्जति । गामङ्गैष आह्वयति । दार्वङ्गैष उपावधीत् । वसन्नरण्यान्याँ सायम् । अक्रुक्षदिति मन्यते । न वा अरण्यानिर्हन्ति । अन्यश्चेन्नाभिगच्छति । स्वादोः फलस्य जग्ध्वा । यत्र कामं निपद्यते । आञ्जनगन्धीँ सुरभीम् । बह्वन्नामकृषीवलाम् । प्राहं मृगाणां मातरम् । अरण्यानीमशँसिषम् २४

वार्त्रहत्याय शवसे । पृतनासाह्याय च । इन्द्र त्वावर्तयामसि । सुब्रह्माणं वीरवन्तं बृहन्तम् । उरुं गभीरं पृथुबुध्नमिन्द्र । श्रुतर्षिमुग्रमभिमातिषाहम् । अस्मभ्यं चित्रं वृषणँ रयिं दाः । क्षेत्रियै त्वा निर्ऋत्यै त्वा । द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि २५

शिवे ते द्यावापृथिवी उभे इमे । शं ते अग्निः सहाद्भिरस्तु । शं ते चतस्रः प्रदिशो भवन्तु । या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभि सूर्यो विचष्टे । तासां त्वा जरस आदधामि । प्र यक्ष्म एतु निर्ऋतिं पराचैः । अमोचि यक्ष्माद्दुरितादवर्त्यै २६

द्रुहः पाशान्निर्ऋत्यै चोदमोचि । अहा अवर्तिमविदत्स्योनम् । अप्यभूद्भद्रे सुकृतस्य लोके । सूर्यमृतं तमसो ग्राह्या यत् । देवा अमुञ्चन्नसृजन्व्येनसः । एवमहमिमं क्षेत्रियाज्जामिशँसात् । द्रुहो मुञ्चामि वरुणस्य पाशात् । बृहस्पते युवमिन्द्रश्च वस्वः । दिव्यस्येशाथे उत पार्थिवस्य । धत्तँ रयिँ स्तुवते कीरये चित् २७

यूयं पात स्वस्तिभिः सदा नः । देवायुधमिन्द्रमाजोहुवानाः । विश्वावृधमभि ये रक्षमाणाः । येन हता दीर्घमध्वानमायन् । अनन्तमर्थमनिवर्त्स्यमानाः । यत्ते सुजाते हिमवत्सु भेषजम् । मयोभूः शंतमा यद्धदोऽसि । ततो नो देहि सीबले । अदो गिरिभ्यो अधि यत्प्रधावसि । सँशोभमाना कन्येव शुभ्रे २८

तां त्वा मुद्गला हविषा वर्धयन्ति । सा नः सीबले रयिमाभाजयेह । पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः । जन्मान्यवरैः पराणि । वेदानि देवा अयमस्मीति माम् । अहँ हित्वा शरीरं जरसः परस्तात् । प्राणापानौ चक्षुः श्रोत्रम् । वाचं मनसि संभृताम् । हित्वा शरीरं जरसः परस्तात् । आ भूतिं भूतिं वयमश्नवामहै । इमा एव ता उषसो याः प्रथमा व्यौच्छन् । ता देव्यः कुर्वते पञ्च रूपा । शश्वतीर्नावपृज्यन्ति । न गमन्त्यन्तम् २९

वसूनां त्वाधीतेन । रुद्राणामूर्म्या । आदित्यानां तेजसा । विश्वेषां देवानां क्रतुना । मरुतामेम्ना जुहोमि स्वाहा । अभिभूतिरहमागमम् । इन्द्रसखा स्वायुधः । आस्वाशासु दुष्षहः । इदं वर्चो अग्निना दत्तमागात् । यशो भर्गः सह ओजो बलं च ३०

दीर्घायुत्वाय शतशारदाय । प्रतिगृभ्णामि महते वीर्याय । आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । सर्वं म आयुर्भूयात् । सर्वमायुर्गेषम् । भूर्भुवः सुवः । अग्निर्धर्मेणान्नादः । मृत्युर्धर्मेणान्नपतिः । ब्रह्म क्षत्रँ स्वाहा ३१

प्रजापतिः प्रणेता । बृहस्पतिः पुरएता । यमः पन्थाः । चन्द्रमाः पुनरसुः स्वाहा । अग्निरन्नादोऽन्नपतिः । अन्नाद्यमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । सोमो राजा राजपतिः । राज्यमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । वरुणः सम्राट्सम्राट्पतिः । साम्राज्यमस्मिन्यज्ञे यजमानाय ददातु स्वाहा ३२

मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । इन्द्रो बलं बलपतिः । बलमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । बृहस्पतिर्ब्रह्म ब्रह्म-पतिः । ब्रह्मास्मिन्यज्ञे यजमानाय ददातु स्वाहा । सविता राष्ट्रँ राष्ट्रपतिः । राष्ट्रमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । पूषा विशां विट्पतिः विशम-स्मिन्यज्ञे यजमानाय ददातु स्वाहा । सरस्वती पुष्टिः पुष्टिपत्नी ।पुष्टिमस्मिन्यज्ञे यजमानाय ददातु स्वाहा । त्वष्टा पशूनां मिथुनानाँ रूपकृद्रुपपतिः । रूपेणास्मिन्यज्ञे यजमानाय पशून्ददातु स्वाहा ३३

स ईं पाहि य ऋजीषी तरुत्रः । यश्शिप्रवान्वृषभो यो मतीनाम् । यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः । स इन्द्र चित्राँ अभितृन्धि वाजान् । आ ते शुष्मो वृषभ एतु पश्चात् । ओत्तरादधरागा पुरस्तात् । आ विश्वतो अभि समेत्व-र्वाङ्।इन्द्र द्युम्नँ सुवर्वद्धेह्यस्मे । प्रोष्वस्मै पुरोरथम् । इन्द्राय शूषमर्चत ३४

अभीके चिदु लोककृत् । सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदिता । नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु । इन्द्रं वयँ शुनासीरम् । अस्मि-न्यज्ञे हवामहे । आ वाजैरुप नो गमत् । इन्द्राय शुनासीराय । स्रुचा जुहुत नो हविः ३५

जुषतां प्रति मेधिरः । प्र हव्यानि घृतवन्त्यस्मै । हर्यश्वाय भर्ता सजोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः । शुनासीरी हविरिदं जुषस्व । वयः सुपर्णा उपसेदुरिन्द्रम् । प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमुग्ध्यस्मान्निधयेव बद्धान् । बृहदिन्द्राय गायत ३६

मरुतो वृत्रहन्तमम् । येन ज्योतिरजनयन्नृतावृधः । देवं देवाय जागृवि । का मिहैकाः क इमे पतङ्गाः । मान्थालाः कुलि परि मा पतन्ति । अनावृतैनान्प्रधमन्तु देवाः । सौपर्णं चक्षुस्तनुवा विदेय । एवावन्दस्व वरुणं बृहन्तम् । नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वियँसत् ३७

यूयं पात स्वस्तिभिः सदा नः । नाके सुपर्णमुप यत्पतन्तम् । हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतम् । यमस्य योनौ शकुनं भुरण्युम् । शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । ईशाना वार्याणाम् । क्षयन्तीश्चर्षणीनाम् ३८

अपो याचामि भेषजम् । अप्सु मे सोमो अब्रवीत् । अन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् । आपश्च विश्वभेषजीः । यदप्सु ते सरस्वति । गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति । मुखमङ्ग्धि सरस्वति । या सरस्वती वैशम्भल्या ३९

तस्यां मे रास्व । तस्यास्ते भक्षीय । तस्यास्ते भूयिष्ठभाजो भूयास्म । अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममेव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः । इहैव सन्तत्र सन्तं त्वाग्ने । प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीत् ४०

ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे । अयं ते योनिर्ऋत्वियः । यतो जातो अरोचथाः । तं जानन्नग्न आरोह । अथा नो वर्धया रयिम् । या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मानम् । अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् । जातवेदो भुव आजायमानः सक्षय एहि । उपावरोह जातवेदः पुनस्त्वम् ४१

देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजाँ रयिमस्मासु धेहि । अजस्रो दीदिहि नो दुरोणे । तमिन्द्रं जोहवीमि । मघवानमुग्रम् । सत्रादधानमप्रतिष्कुतँ शवाँसि । मँहिष्ठो गीर्भिरा च यज्ञियोऽववर्तत् । राये नो विश्वा सुपथा कृणोतु वज्री ।त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् । सोममपिबद्विष्णुना सुतं यथावशत् । स ईं ममाद महि कर्म कर्तवे महामुरुम् ४२

सैनँ सश्चद्देवं देवः सत्यमिन्दुँ सत्य इन्द्रः । विदद्यती सरमा रुग्णमद्रेः । महि पाथः पूर्व्यँ सध्रियक्कः । अग्रं नयत्सुपद्यक्षराणाम् । अच्छा रवं प्रथमा जानती गात् । विदद्गव्यँ सरमा दृढमूर्वम् । येना नुकं मानुसी भोजते विट् । आ ये विश्वा स्वपत्यानि चक्रुः । कृण्वानासो अमृतत्वाय गातुम् । त्वं नृभिर्नृपते देवहूतौ ४३

भूरीणि वृत्वा हर्यश्व हँसि । त्वं निदस्युं चुमुरिम् । धुनिं चास्वापयो दभीतये सुहन्तु । एवा पाहि प्रत्नथा मन्दतु त्वा । श्रुधि ब्रह्म वावृधस्वोत गीर्भिः । आविः सूर्यं कृणुहि पीपिहीषः । जहि शत्रूँरभि गा इन्द्र तृन्धि । अग्ने बाधस्व वि मृधो नुदस्व । अपामीवा अप रक्षाँसि सेध । अस्मात्समुद्राद्बृहतो दिवो नः ४४

अपां भूमानमुप नः सृजेह । यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा । वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन् । अधामृतेन जरितारमङ्ग्धि । इन्द्रः शुनावद्वितनोति सीरम् । संवत्सरस्य प्रतिमाणमेतत् । अर्कस्य ज्योतिस्तदिदास ज्येष्ठम् । संवत्सरँ शुनवत्सीरमेतत् । इन्द्रस्य राधः प्रयतं पुरु त्मना । तदर्करूपं विमिमानमेति । द्वादशारे प्रतितिष्ठतीद्वृषा । अश्वायन्तो गव्यन्तो वाजयन्तः । हवामहे त्वोपगन्त वा उ । आभूषन्तस्त्वा सुमतौ नवायाम् । वयमिन्द्र त्वा शुनँ हुवेम ४५ ५

स्वाद्वीं त्वा स्वादुना । तीव्रां तीव्रेण । अमृताममृतेन । मधुमतीं मधुमता । सृजामि सँ सोमेन । सोमोऽस्यश्विभ्यां पच्यस्व । सरस्वत्यै पच्यस्व । इन्द्राय सुत्राम्णे पच्यस्व । परीतो षिञ्चता सुतम् । सोमो य उत्तमँ हविः १

दधन्वा दधन्वान्यो नर्यो अप्स्वन्तरा । सुषव सोममद्रिभिः । पुनातु ते परिस्रुतम् । सोमँ सूर्यस्य दुहिता । वारेण शश्वता तना । वायुः पूतः पवित्रेण । प्राङ्सोमो अतिद्रुतः २

इन्द्रस्य युज्यः सखा । ब्रह्म क्षत्रं पवते तेज इन्द्रियम् । सुरया सोमः सुत आसुतो मदाय । शुक्रेण देव देवताः पिपृग्धि । रसेनान्नं यजमानाय धेहि । कुविदङ्ग यवमन्तो यवं चित् । यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुत भोजनानि । ये बर्हिषो नमोवृक्तिं न जग्मुः । उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि ३

सरस्वत्या इन्द्राय सुत्राम्णे । एष ते योनिस्तेजसे त्वा । वीर्याय त्वा बलाय त्वा । तेजोऽसि तेजो मयि धेहि । वीर्यमसि वीर्यं मयि धेहि । बलमसि बलं मयि धेहि । नाना हि वां देवहितँ सदः कृतम् । मा सँसृक्षाथां परमे व्योमन् । सुरा त्वमसि शुष्मिणी सोम एषः । मा मा हिँसीः स्वां योनिमाविशन् ४

उपयामगृहीतोऽस्याश्विनं तेजः । सारस्वतं वीर्यम् । ऐन्द्रं बलम् । एष ते योनिर्मोदाय त्वा । आनन्दाय त्वा महसे त्वा । ओजोऽस्योजो मयि धेहि

। मन्युरसि मन्युं मयि धेहि । महोऽसि महो मयि धेहि । सहोऽसि सहो मयि धेहि । या व्याघ्रं विषूचिका । उभौ वृकं च रक्षति । श्येनं पतत्रिणँ सिँहम् । सेमं पात्वँहसः । संपृचः स्थ सं मा भद्रेण पृङ्क्त । विपृचः स्थ वि मा पाप्मना पृङ्क्त ५

सोमो राजामृतँ सुतः । ऋजीषेणाजहान्मृत्युम् । ऋतेन सत्यमिन्द्रियम् । विपानँ शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोऽमृतं मधु । सोममद्भ्यो व्यपिबत् । छन्दसा हँसः शुचिषत् । ऋतेन सत्यमिन्द्रियम् । अद्भ्यः क्षीरं व्यपिबत् ६

क्रुङ्ङाङ्गिरसो धिया । ऋतेन सत्यमिन्द्रियम् । अन्नात्परिस्रुतो रसम् । ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियम् । रेतो मूत्रं विजहाति । योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणावृतः । उल्बं जहाति जन्मना । ऋतेन सत्यमिन्द्रियम् ७

वेदेन रूपे व्यकरोत् । सतासती प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । सोमेन सोमौ व्यपिबत् । सुतासुतौ प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । दृष्ट्वा रूपे व्याकरोत् । सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधात् । श्रद्धाँ सत्ये प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । दृष्ट्वा परिस्रुतो रसम् । शुक्रेण शुक्रं व्यपिबत् । पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् । विपानँ शुक्रमन्धसः । इन्द्रस्येन्द्रियम् । इदं पयोऽमृतं मधु ८

सुरावन्तं बर्हिषदँ सुवीरम् । यज्ञँ हिन्वन्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु । मदेमेन्द्रं यजमानाः स्वर्काः । यस्ते रसः संभृत ओषधीषु । सोमस्य शुष्मः सुरया सुतस्य । तेन जिन्व यजमानं मदेन । सरस्वती-मश्विनाविन्द्रमग्निम् । यमश्विना नमुचेरासुरादधि । सरस्वत्यसनोदिन्द्रियाय ९

इमं तँ शुक्रं मधुमन्तमिन्दुम् । सोमँ राजानमिह भक्षयामि । यदत्र रिप्तँ रसिनः सुतस्य । यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन ।

सोमँ राजानमिह भक्षयामि । पितृभ्यः स्वधाविभ्यः स्वधा नमः । पितामहेभ्यः स्वधाविभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नमः । अक्षन्पितरः १०

अमीमदन्त पितरः । अतीतृपन्त पितरः । अमीमृजन्त पितरः । पितरः शुन्धध्वम् । पुनन्तु मा पितरः सोम्यासः । पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा । पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः ११

पवित्रेण शतायुषा । विश्वमायुर्व्यश्नवै । अग्न आयूँषि पवसे । ऽग्ने पवस्व । पवमानः सुवर्जनः । पुनन्तु मा देवजनाः । जातवेदः पवित्रवद् । यत्ते पवित्रमर्चिषि । उभाभ्यां देव सवितर् । वैश्वदेवी पुनती ।ये समानाः समनसः । पितरो यमराज्ये । तेषां लोकः स्वधा नमः । यज्ञो देवेषु कल्पताम् १२

ये सजाताः समनसः । जीवा जीवेषु मामकाः । तेषाँ श्रीर्मयि कल्पताम् । अस्मिँल्लोके शतँ समाः । द्वे स्रुती अशृणवं पितृणाम् । अहं देवानामुत मर्त्यानाम् । याभ्यामिदं विश्वमेजत्समेति । यदन्तरा पितरं मातरं च । इदँ हविः प्रजननं मे अस्तु । दशवीरँ सर्वगणँ स्वस्तये । आत्मसनि प्रजासनि । पशुसन्यभयसनि लोकसनि । अग्निः प्रजां बहुलां मे करोतु । अन्नं पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा १३

सीसेन तन्त्रं मनसा मनीषिणः । ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञँ सविता सरस्वती ।इन्द्रस्य रूपं वरुणो भिषज्यन् । तदस्य रूपममृतँ शचीभिः । तिस्रो दधुर्देवताः सँरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिः । त्वगस्य माँसमभवन्न लाजाः । तदश्विना भिषजा रुद्रवर्तनी ।सरस्वती वयति पेशो अन्तरः १४

अस्थि मज्ञानं मासरैः । कारोतरेण दधतो गवां त्वचि । सरस्वती मनसा पेशलं वसु । नासत्याभ्यां वयति दर्शतं वपुः । रसं परिस्रुता न रोहितम्

। नग्नहुर्धीरस्तसरं न वेम । पयसा शुक्रममृतं जनित्रम् । सुरया मूत्राज्जनयन्ति रेतः । अपामतिं दुर्मतिं बाधमानाः । ऊवध्यं वातँ सबुवं तदारात् १५

इन्द्रः सुत्रामा हृदयेन सत्यम् । पुरोडाशेन सविता जजान । यकृत्क्लोमानं वरुणो भिषज्यन् । मतस्ने वायव्यैर्न मिनाति पित्तम् । आन्त्राणि स्थाली मधु पिन्वमाना । गुदा पात्राणि सुदुघा न धेनुः । श्येनस्य पत्रं न प्लीहा शचीभिः । आसन्दी नाभिरुदरं न माता । कुम्भो वनिष्ठुर्जनिता शचीभिः । यस्मिन्नग्रे योन्यां गर्भो अन्तः १६

प्लाशीर्व्यक्तः शतधार उत्सः । दुहे न कुम्भीँ स्वधां पितृभ्यः । मुखँ सदस्य शिर इत्सदेन । जिह्वा पवित्रमश्विना सँ सरस्वती ।चप्यं न पायुर्भिषगस्य वालः । वस्तिर्न शेपो हरसा तरस्वी ।अश्विभ्यां चक्षुरमृतं ग्रहाभ्याम् । छागेन तेजो हविषा शृतेन । पक्ष्माणि गोधूमैः क्वलैरुतानि । पेशो न शुक्लमसितं वसाते १७

अविर्न मेषो नसि वीर्याय । प्राणस्य पन्था अमृतो ग्रहाभ्याम् । सरस्वत्युप वाकैर्व्यानम् । नस्यानि बर्हिर्बदरैर्जजान । इन्द्रस्य रूपमृषभो बलाय । कर्णाभ्याँ श्रोत्रममृतं ग्रहाभ्याम् । यवा न बर्हिर्भ्रुवि केसराणि । कर्कन्धु जज्ञे मधु सारघं मुखात् । आत्मन्नुपस्थे न वृकस्य लोम । मुखे श्मश्रूणि न व्याघ्रलोमम् १८

केशा न शीर्षन्यशसे श्रियै शिखा । सिँहस्य लोम त्विषिरिन्द्रियाणि । अङ्गान्यात्मन्भिषजा तदश्विना । आत्मानमङ्गैः समधात्सरस्वती ।इन्द्रस्य रूपँ शतमानमायुः । चन्द्रेण ज्योतिरमृतं दधाना । सरस्वती योन्यां गर्भमन्तः । अश्विभ्यां पत्नी सुकृतं बिभर्ति । अपाँ रसेन वरुणो न साम्ना । इन्द्रँ श्रियै जनयन्नप्सु राजा । तेजः पशूनाँ हविरिन्द्रियावत् । परिस्रुता पयसा सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या । सुतासुताभ्याममृतः सोम इन्दुः १९

मित्रोऽसि वरुणोऽसि । समहं विश्वैर्देवैः । क्षत्रस्य नाभिरसि । क्षत्रस्य

योनिरसि । स्योनामासीद । सुषदामासीद । मा त्वा हिँसीत् । मा मा हिँसीत् । निषसाद धृतव्रतो वरुणः । पस्त्यास्वा २०

साम्राज्याय सुक्रतुः । देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन । तेजसे ब्रह्मवर्चसायाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्याम् । सरस्वत्यै भैषज्येन २१

वीर्यायान्नाद्यायाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बहुभ्याम् । पूष्णो हस्ताभ्याम् । इन्द्रस्येन्द्रियेण । श्रियै यशसे बलायाभिषिञ्चामि । कोऽसि कतमोऽसि । कस्मै त्वा काय त्वा । सुश्लोका३ँ सुमङ्गला३ँ सत्यराजा३न् । शिरो मे श्रीः २२

यशो मुखम् । त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽमृतम् । सम्राट्चक्षुः । विराट्श्रोत्रम् । जिह्वा मे भद्रम् । वाङ्महः । मनो मन्युः । स्वराड्भामः । मोदाः प्रमोदा अङ्गुलीरङ्गानि २३

चित्तं मे सहः । बाहू मे बलमिन्द्रियम् । हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम । पृष्टीर्मे राष्ट्रमुदरम् । अँसौ ग्रीवाश्च श्रोणयौ । ऊरू अरत्नी जानुनी ।विशो मेऽङ्गानि सर्वतः । नाभिर्मे चित्तं विज्ञानम् । पायुर्मेऽपचितिर्भसत् २४

आनन्दनन्दावाण्डौ मे । भगः सौभाग्यं पसः । जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि । विशि राजा प्रतिष्ठितः । प्रति क्षत्रे प्रतितिष्ठति राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् । प्रति प्राणेषु प्रतितिष्ठामि पुष्टे । प्रति द्यावापृथिव्योः । प्रतितिष्ठामि यज्ञे २५

त्रया देवा एकादश । त्रयस्त्रिँशाः सुराधसः । बृहस्पतिपुरोहिताः । देवस्य सवितुः सवे । देवा देवैरवन्तु मा । प्रथमा द्वितीयैः । द्वितीयास्तृतीयैः । तृतीयाः सत्येन । सत्यं यज्ञेन । यज्ञो यजुर्भिः २६

यजूँषि सामभिः । सामान्यृग्भिः । ऋचो याज्याभिः । याज्या वषट्कारैः । वषट्कारा आहुतिभिः । आहुतयो मे कामान्त्समर्धयन्तु । भूः स्वाहा । लोमानि प्रयतिर्मम । त्वङ्म आनतिरागतिः । माँसं म उपनतिः वस्वस्थि । मज्जा म आनतिः २७

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसः । विश्वान्मुञ्चत्वँहसः । यदि दिवा यदि नक्तम् । एनाँसि चकृमा वयम् । वायुर्मा तस्मादेनसः । विश्वान्मुञ्चत्वँहसः । यदि जाग्रद्यदि स्वप्ने । एनाँसि चकृमा वयम् २८

सूर्यो मा तस्मादेनसः । विश्वान्मुञ्चत्वँहसः । यद्ग्रामे यदरण्ये । यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये । एनश्चकृमा वयम् । यदेकस्याधि धर्मणि । तस्यावयजनमसि । यदापो अघ्निया वरुणेति शपामहे । ततो वरुण नो मुञ्च २९

अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण । अव देवैर्देवकृतमेनोऽयाट् । अव मर्त्यैर्मर्त्यकृतम् । उरोरा नो देव रिषस्पाहि । सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भुयासुः । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव ३०

पूतं पवित्रेणेवाज्यम् । आपः शुन्धन्तु मैनसः । उद्वयं तमसस्परि । पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यम् । अगन्म ज्योतिरुत्तमम् । प्रतियुतो वरुणस्य पाशः । प्रत्यस्तो वरुणस्य पाशः । एधोऽस्येधिषीमहि । समिदसि ३१

तेजोऽसि तेजो मयि धेहि । अपो अन्वचारिषम् । रसेन समसृक्ष्महि । पयस्वाँ अग्न आगमम् । तं मा सँसृज वर्चसा । प्रजया च धनेन च । समाववर्ति पृथिवी ।समुषाः । समु सूर्यः । समु विश्वामिदं जगत् । वैश्वानरज्योतिर्भूयासम् । विभुं कामं व्यश्नवै । भूः स्वाहा ३२

होता यक्षत्समिधेन्द्रमिडस्पदे । नाभा पृथिव्या अधि । दिवो वर्ष्मन्त्समिध्यते । ओजिष्ठश्चर्षणीसहान् । वेत्वाज्यस्य होतर्यज । होता यक्षत्तनूनपातम् । ऊतिभिर् । जेतारमपराजितम् । इन्द्रं देवँ सुवर्विदम् । पथिभिर्मधुमत्तमैः । नराशँसेन तेजसा ३३

वेत्वाज्यस्य होतर्यज । होता यक्षदिडाभिरिन्द्रमीडितम् । आजुह्वानममर्त्यम् । देवो देवैः सवीर्यः । वज्रहस्तः पुरंदरः । वेत्वाज्यस्य होतर्यज । होता यक्षद्बर्हिषीन्द्रं निषद्वरम् । वृषभं नर्यापसम् । वसुभी रुद्रैरादित्यैः । सयुग्भिर्बर्हिरासदत् ३४

वेत्वाज्यस्य होतर्यज । होता यक्षदोजो न वीर्यम् । सहो । द्वार इन्द्रमवर्धयन् । सुप्रायणा विश्रयन्तामृतावृधः । द्वार इन्द्राय मीढुषे । वियन्त्वाज्यस्य होतर्यज । होता यक्षदुषे इन्द्रस्य धेनू ।सुदुघे मातरौ मही ।सवातरौ न तेजसी ।वत्समिन्द्रमवर्धताम् ३५

वीतामाज्यस्य होतर्यज । होता यक्षद्दैव्या होतारा । भिषजा सखाया । हविषेन्द्रं भिषज्यतः । कवी देवौ प्रचेतसौ । इन्द्राय धत्त इन्द्रियम् । वीतामाज्यस्य होतर्यज । होता यक्षत्तिस्रो देवीः । त्रयस्त्रिधातवोऽपसः । इडा सरस्वती भारती ३६

महीन्द्रपत्नीर्हविष्मतीः । वियन्त्वाज्यस्य होतर्यज । होता यक्षत्त्वष्टारमिन्द्रं देवम् । भिषजँ सुयजं घृतश्रियम् । पुरुरूपँ सुरेतसं मघोनिम् । इन्द्राय त्वष्टा दधदिन्द्रियाणि । वेत्वाज्यस्य होतर्यज । होता यक्षद्वनस्पतिम्शमितारँ शतक्रतुम् । धियो जोष्टारमिन्द्रियम् ३७

मध्वा समञ्जन्पथिभिः सुगेभिः । स्वदाति हव्यं मधुना घृतेन । वेत्वाज्यस्य होतर्यज । होता यक्षदिन्द्रँ स्वाहाज्यस्य । स्वाहा मेदसः । स्वाहा स्तोकानाम् । स्वाहा स्वाहाकृतीनाम् । स्वाहा हव्यसूक्तीनाम् । स्वाहा देवाँ आज्यपान् । स्वाहेन्द्रँ होत्राज्जुषाणाः । इन्द्राज्यस्य वियन्तु । होतर्यज ३८

समिद्ध इन्द्र उषसामनीके । पुरोरुचा पूर्वकृद्वावृधानः । त्रिभिर्देवैस्त्रिँशता वज्रबाहुः । जघान वृत्रं वि दुरो ववार । नराशँसः प्रति शूरो मिमानः । तनूनपात्प्रति यज्ञस्य धाम । गोभिर्वपावान्मधुना समञ्जन् । हिरण्यैश्चन्द्री यजति प्रचेताः । ईडितो देवैर्हरिवाँ अभिष्टिः । आजुह्वानो हविषा शर्धमानः ३९

पुरंदरो मघवान्वज्रबाहुः । आयातु यज्ञमुप नो जुषाणः । जुषाणो बर्हिर्हरिवान्न इन्द्रः । प्राचीनँ सीदत्प्रदिशा पृथिव्याः । उरुव्यचाः प्रथमानँ स्योनम् । आदित्यैरक्तं वसुभिः सजोषाः । इन्द्रं दुरः कवष्यो धावमानाः । वृषाणं यन्तु जनयः सुपत्नीः । द्वारो देवीरभितो विश्रयन्ताम् । सुवीरा वीरं प्रथमाना महोभिः ४०

उषासानक्ता बृहती बृहन्तम् । पयस्वती सुदुघे शूरमिन्द्रम् । पेशस्वती तन्तुना संव्ययन्ती ।देवानां देवं यजतः सुरुक्मे । दैव्या मिमाना मनसा पुरुत्रा । होताराविन्द्रं प्रथमा सुवाचा । मूर्धन्यज्ञस्य मधुना दधाना । प्राचीनं ज्योतिर्हविषा वृधातः । तिस्रो देवीर्हविषा वर्धमानाः । इन्द्रं जुषाणा वृषणं न पत्नीः ४१

अच्छिन्नं तन्तुं पयसा सरस्वती ।इडा देवी भारती ।विश्वतूर्तिः । त्वष्टा दधदिन्द्राय शुष्मम् । अपाकोऽचिष्टुर्यशसे पुरूणि । वृषा यजन्वृषणं भूरिरेताः । मूर्धन्यज्ञस्य समनक्तु देवान् । वनस्पतिरवसृष्टो न पाशैः । त्मन्या समञ्जञ्शमिता न देवः । इन्द्रस्य हव्यैर्जठरं पृणानः । स्वदाति हव्यं मधुना घृतेन । स्तोकानामिन्दुं प्रति शूर इन्द्रः । वृषायमाणो वृषभस्तुराषाट् । घृतप्रुषा मधुना हव्यमुन्दन् । मूर्धन्यज्ञस्य जुषताँ स्वाहा ४२

आ चर्षणिप्रा । विवेष यन्मा । तँ सध्रीचीः । सत्यमित्तन्न त्वावाँ अन्यो अस्ति । इन्द्र देवो न मर्त्यो ज्यायान् । अहन्नहिं परिशयानमर्णः । अवासृजोऽपो अच्छा समुद्रम् । प्रससाहिषे पुरुहूत शत्रून् । ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राभर दक्षिणेना वसूनि । पतिः सिन्धूनामसि रेवतीनाम् । स शेवृधमधिधा द्युम्नमस्मे । महि क्षत्रं जनाषाडिन्द्र तव्यम् । रक्षा च

नो मघोनः पाहि सूरीन् । राये च नः स्वपत्या इषे धाः ४३

देवं बर्हिरिन्द्रँ सुदेवं देवैः । वीरवत्स्तीर्णं वेद्यामवर्धयत् । वस्तोर्वृतं प्राक्तोर्भृतम् । राया बर्हिष्मतोऽत्यगात् । वसुवने वसुधेयस्य वेतु यज । देवीर्द्वार इन्द्रँ संघाते । विड्वीर्यामन्नवर्धयन् । स्रा वत्सेन तरुणेन कुमारेण च मीविता स्रपार्वाणम् । रेणुककाटं नुदन्ताम् । वसुवने वसुधेयस्य वियन्तु यज ४४

देवी उषासानक्ता । इन्द्रं यज्ञे प्रयत्यह्वेताम् । दैवीर्विशः प्रायासिष्टाम् । सुप्रीते सुधिते स्रभूताम् । वसुवने वसुधेयस्य वीतां यज । देवी जोष्ट्री वसुधिती ।देवमिन्द्रमवर्धताम् । स्रयाव्यन्याघा द्वेषाँसि । स्रान्यावाक्षीद्वसु वार्याणि । यजमानाय शिक्षिते ४५

वसुवने वसुधेयस्य वीतां यज । देवी ऊर्जाहुती दुघे सुदुघे । पयसेन्द्रमवर्धताम् । इषमूर्जमन्यावाक्षीत् । सग्धिँ सपीतिमन्या । नवेन पूर्वं दयमाने । पुराणेन नवम् । स्रधातामूर्जमूर्जाहुती वसु वार्याणि । यजमानाय शिक्षिते । वसुवने वसुधेयस्य वीतां यज ४६

देवा दैव्या होतारा । देवमिन्द्रमवर्धताम् । हताघशँसावाभार्ष्टां वसु वार्याणि । यजमानाय शिक्षितौ । वसुवने वसुधेयस्य वीतां यज । देवीस्तिस्रस्तिस्रो देवीः । पतिमिन्द्रमवर्धयन् । ।

स्रस्पृक्षद्भारती दिवम् । रुद्रैर्यज्ञँ सरस्वती ।इडा वसुमती गृहान् ४७

वसुवने वसुधेयस्य वियन्तु यज । देव इन्द्रो नराशँसः । त्रिवरूथस्त्रिवन्धुरः । देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः । सहस्रेण प्रवर्तते । मित्रावरुणेदस्य होत्रमर्हतः । बृहस्पतिः स्तोत्रम् । स्रश्विनाध्वर्यवम् । वसु-वने वसुधेयस्य वेतु यज ४८

देव इन्द्रो वनस्पतिः । हिरण्यपर्णो मधुशाखः सुपिप्पलः । देवमिन्द्रमवर्धयत्

। दिवमग्रेणाप्रात् । आन्तरिक्षं पृथिवीमदृँहीत् । वसुवने वसुधेयस्य वेतु यज । देवं बर्हिर्वारितीनाम् । देवमिन्द्रमवर्धयत् । स्वासस्थमिन्द्रेणासन्नम् । अन्या बर्हीँष्यिभ्यभूत् । वसुवने वसुधेयस्य वेतु यज । देवो अग्निः स्विष्टकृत् । देवमिन्द्रमवर्धयत् । स्विष्टं कुर्वन्त्स्विष्टकृत् । स्विष्टमद्य करोतु नः । वसुवने वसुधेयस्य वेतु यज ४९

होता यक्षत्समिधाग्निमिडस्पदे । अश्विनेन्द्रँ सरस्वतीम् । अजो धूमो न गोधूमैः क्वलैर्भेषजम् । मधु शष्पैर्न तेज इन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षत्तनूनपात्सरस्वती ।अविर्मेषो न भेषजम् । पथा मधुमताभरन् । अश्विनेन्द्राय वीर्यम् ५०

बदरैरुपवाकाभिर्भेषजं तोक्मभिः । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षन्नराशँसं न नग्नहुम् । पतिँ सुरायै भेषजम् । मेषः सरस्वती भिषक् । रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् । बदरैरुपवाकाभिर्भेषजं तोक्मभिः । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज ५१

होता यक्षदिडेडित आजुह्वानः सरस्वतीम् । इन्द्रं बलेन वर्धयन् । ऋषभेण गवेन्द्रियम् । अश्विनेन्द्राय वीर्यम् । यवैः कर्कन्धुभिः । मधु लाजैर्न मासरम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षद्बर्हिः । सुष्टरीमोऽर्णम्रदाः । भिषङ्। नासत्या ५२

भिषजाश्विनाश्वा शिशुमती ।भिषग् । धेनुः सरस्वती ।भिषग् । दुह इन्द्राय भेषजम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षद्दुरो दिशः । कवष्यो न व्यचस्वतीः । अश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे । दुहे कामान्त्सरस्वती ५३

अश्विनेन्द्राय भेषजम् । शुक्रं न ज्योतिरिन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षत्सुपेशसोषे नक्तं दिवा । अश्विना संजानाने । समञ्जाते सरस्वत्या । त्विषिमिन्द्रे न भेषजम् । श्येनो

न रजसा हृदा । पयः सोमः परिस्रुता घृतं मधु ५४

वियन्त्वाज्यस्य होतर्यज । होता यक्षद्दैव्या होतारा भिषजाश्विना । इन्द्रं न जागृवी दिवा नक्तं न भेषजैः । शूषँ सरस्वती भिषक् । सीसेन दुह इन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षत्तिस्रो देवीर्न भेषजम् । त्रयस्त्रिधातवोऽपसः । रूपमिन्द्रे हिरण्ययम् ५५

अश्विनेडा न भारती ।वाचा सरस्वती ।मह । इन्द्राय दधुरिन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षत्त्वष्टार-मिन्द्रमश्विना । भीषजं न सरस्वतीम् । ओजो न जूतिरिन्द्रियम् । वृको न रभसो भिषक् । यशः सुरया भेषजम् ५६

श्रिया न मासरम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षद्वनस्पतिम् । शमितारँ शतक्रतुम् । भीमं न मन्युँ राजानं व्याघ्रं नमसाश्विना । भामम्सरस्वती भिषक् । इन्द्राय दुह इन्द्रियम् । पयः सोमः परिस्रुता घृतं मधु वियन्त्वाज्यस्य होतर्यज ५७

होता यक्षदग्निँ स्वाहाज्यस्य स्तोकानाम् । स्वाहा मेदसां पृथक् । स्वाहा छागमश्विभ्याम् । स्वाहा मेषँ सरस्वत्यै । स्वाहर्षभमिन्द्राय सिँहाय सहसेन्द्रियम् । स्वाहाग्निं न भेषजम् । स्वाहा सोममिन्द्रियम् । स्वाहेन्द्रँ सुत्रामानँ सवितारं वरुणं भिषजां पतिम् । स्वाहा वनस्पतिं प्रियं पाथो न भेषजम् । स्वहा देवाँ आज्यपान् ५८

स्वाहाग्निँ होत्राज्जुषाणो अग्निर्भेषजम् । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होता यक्षदश्विना सरस्वतीमिन्द्रँ सुत्रामाणम् । इमे सोमाः सुरामाणः । छागैर्न मेषैर्ऋषभैः सुताः । शष्पैर्न तोक्मभिः । लाजैर्महस्वन्तः । मदा मासरेण परिष्कृताः । शुक्राः पयस्वन्तोऽमृताः । प्रस्थिता वो मधुश्चुतः तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा । जुषन्ताँ सौम्यं मधु । पिबन्तु मदन्तु वियन्तु सोमम् । होतर्यज ५९

समिद्धो अग्निरश्विना । तप्तो घर्मो विराट्सुतः । दुहे धेनुः सरस्वती ।सोमँ शुक्रमिहेन्द्रियम् । तनूपा भिषजा सुते । अश्विनोभा सरस्वती ।मध्वा रजाँसी-न्द्रियम् । इन्द्राय पथिभिर्वहान् । इन्द्रायेन्दुँ सरस्वती ।नराशँसेन नग्नहुः ६०

अधातामश्विना मधु । भेषजं भिषजा सुते । आजुह्वाना सरस्वती । इन्द्रायेन्द्रियाणि वीर्यम् । इडाभिरश्विनाविषम् । समूर्जँ सँ रयिं दधुः । अश्विना नमुचेः सुतम् । सोमँ शुक्रं परिस्रुता । सरस्वती तमाभरत् । बर्हिषेन्द्राय पातवे ६१

कवष्यो न व्यचस्वतीः । अश्विभ्यां न दुरो दिशः । इन्द्रो न रोदसी दुघे । दुहे कामान्त्सरस्वती ।उषासा नक्तमश्विना । दिवेन्द्रँ सायमिन्द्रियैः । संजानाने सुपेशसा । समञ्जाते सरस्वत्या पातं नो अश्विना दिवा । पाहि नक्तँ सरस्वति ६२

दैव्या होतारा भिषजा । पातमिन्द्रँ सचा सुते । तिस्रस्त्रेधा सरस्वती ।अश्विना भारतीडा । तीव्रं परिस्रुता सोमम् । इन्द्राय सुषवुर्मदम् । अश्विना भेषजं मधु । भेषजं नः सरस्वती ।इन्द्रे त्वष्टा यशः श्रियम् । रूपँरूपमधुः सुते । ऋतुथेन्द्रो वनस्पतिः । शशमानः परिस्रुता । कीलालमश्विभ्यां मधु । दुहे धेनुः सरस्वती ।गोभिर्न सोममश्विना । मासरेण परिष्कृता । समधाताँ सरस्वत्या । स्वाहेन्द्रे सुतं मधु ६३

अश्विना हविरिन्द्रियम् । नमुचेर्धिया सरस्वती ।आ शुक्रमासुराद्वसु । मघमिन्द्राय जभ्रिरे । यमश्विना सरस्वती ।हविषेन्द्रमवर्धयन् । स बिभेद बलं मघम् । नमुचावासुरे सचा । तमिन्द्रं पशवः सचा । अश्विनोभा सरस्वती ६४

दधाना अभ्यनूषत । हविषा यज्ञमिन्द्रियम् । य इन्द्र इन्द्रियं दधुः । सविता वरुणो भगः । स सुत्रामा हविष्पतिः । यजमानाय सश्चत । सविता वरुणो दधत् । यजमानाय दाशुषे । आदत्त नमुचेर्वसु । सुत्रामा बलमिन्द्रियम्

६५

वरुणः क्षत्रमिन्द्रियम् । भगेन सविता श्रियम् । सुत्रामा यशसा बलम् । दधाना यज्ञमाशत । अश्विना गोभिरिन्द्रियम् । अश्वेभिर्वीर्यं बलम् । हविषेन्द्रँ सरस्वती ।यजमानमवर्धयन् । ता नासत्या सुपेशसा । हिरण्यवर्तनी नरा । सरस्वती हविष्मती ।इन्द्र कर्मसु नोऽवत । ता भिषजा सुकर्मणा । सा सुदुघा सरस्वती ।स वृत्रहा शतक्रतुः । इन्द्राय दधुरिन्द्रियम् ६६

देवं बर्हिः सरस्वती ।सुदेवमिन्द्रे अश्विना । तेजो न चक्षुरक्ष्योः । बर्हिषा दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज । देवीर्द्वारो अश्विना । भिषजेन्द्रे सरस्वती ।प्राणं न वीर्यं नसि । द्वारो दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज ६७

देवी उषासावश्विना । भिषजेन्द्रे सरस्वती ।बलं न वाचमास्ये । उषाभ्यां दधुरिन्द्रियम् । वसुमने वसुधेयस्य वियन्तु यज । देवी जोष्ट्री अश्विना सुत्रामेन्द्रे सरस्वती । श्रोत्रं न कर्णयोर्यशः । जोष्ट्रीभ्यां दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज ६८

देवी ऊर्जाहुती दुघे सुदुघे । पयसेन्द्रँ सरस्वत्यश्विना भिषजावत । शुक्रं न ज्योतिः स्तनयोराहुती धत्त इन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज । देवा देवानां भिषजा । होताराविन्द्रमश्विना । वषट्कारैः सरस्वती । त्विषिं न हृदये मतिम् । होतृभ्यां दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज ६९

देवीस्तिस्रस्तिस्रो देवीः । सरस्वत्यश्विना भारतीडा । शूषं न मध्ये नाभ्याम् । इन्द्राय दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज । देव इन्द्रो नराशँसः । त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः । रेतो न रूपममृतं जनित्रम् । इन्द्राय त्वष्टा दधदिन्द्रियाणि वसुवने वसुधेयस्य वियन्तु यज ७०

देव इन्द्रो वनस्पतिः । हिरण्यपर्णो अश्विभ्याम् । सरस्वत्याः सुपिप्पलः । इन्द्राय पच्यते मधु । ओजो न जूतिमृषभो न भामम् । वनसपतिर्नो दधदिन्द्रियाणि । वसुवने वसुधेयस्य वियन्तु यज । देवं बर्हिर्वारितीनाम् । अध्वरे स्तीर्णमश्विभ्याम् । ऊर्णम्रदाः सरस्वत्याः ७१

स्योनमिन्द्र ते सदः । ईशायै मन्युँ राजानं बर्हिषा दधुरिन्द्रियम् । वसुवने वसुधेयस्य वियन्तु यज । देवो अग्निः स्विष्टकृत् । देवान्यक्षद्यथायथम् । होताराविन्द्रमश्विना । वाचा वाचँ सरस्वतीम् । अग्निँ सोमँ स्विष्टकृत् । स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषक् । इष्टो देवो वनसपतिः । स्विष्टा देवा आज्यपाः । इष्टो अग्निरग्निना । होता होत्रे स्विष्टकृत् । यशो न दधदिन्द्रियम् । ऊर्जमपचितिँ स्वधाम् । वसुवने वसुधेयस्य वियन्तु यज ७२

अग्निमद्य होतारमवृणीत । अयँ सुतासुती यजमानः । पचन्पक्तीः । पचन्पुरोडाशान् । गृह्णन्ग्रहान् । बध्नन्नश्विभ्यां छागँ सरस्वत्या इन्द्राय । बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्याम् । बध्नन्निन्द्रायर्षभमश्विभ्याँ सरस्वत्यै । सूपस्था अद्य देवो वनस्पतिरभवत् । अश्विभ्यां छागेन सरस्वत्या इन्द्राय ७३

सर्स्वत्यै मेषेणेन्द्रायाश्विभ्याम् । इन्द्रायर्षभेणाश्विभ्याँ सरस्वत्यै । अक्षँस्तान्मेदस्तः प्रति पचताग्रभीसुः । अवीवृधन्त ग्रहैः । अपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा । सोमान्त्सुराम्णः । उपो उक्थामदाः श्रौद्विमदा अदन् । अवीवृधन्ताङ्गूषैः । त्वामद्यर्ष आर्षेयर्षीणां नपादवृणीत । अयँ सुतासुती यजमानः । बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्या यक्ष्यत इति । ता या देवा देवदानान्यदुः । तान्यस्मा आ च शास्स्व । आ च गुरस्व । इषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः । सूक्तवाकाय सूक्ता ब्रूहि ७४

उशन्तस्त्वा हवामह । आ नो अग्ने सुकेतुना । त्वँ सोम महे भगं। त्वँ सोम प्र चिकितो मनीषा । त्वया हि नः पितरः सोम पूर्वे । त्वँ सोम पितृभिः संविदानः । बर्हिषदः पितर । आहं पितॄन् । उपहूताः पितरो

। ऽग्निष्वात्ताः पितरः । अग्निष्वात्तानृतुमतो हवामहे । नराशँसे सोमपीथं य आशुः । ते नो अर्वन्तः सुहवा भवन्तु । शं नो भवन्तु द्विपदे शं चतुष्पदे । ये अग्निष्वात्ता येऽनग्निष्वात्ताः ७५

अँहोमुचः पितरः सोम्यासः । परेऽवरेऽमृतासो भवन्तः । अधिब्रुवन्तु ते अवन्त्वस्मान् । वान्यायै दुग्धे जुषमानाः करम्भम् । उदीरणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदानाः । इन्द्रवन्तो हविरिदं जुषन्ताम् । यदग्ने कव्यवाहन । त्वमग्न ईडितो जातवेदः । मातली कव्यैः । ये तातृपुर्देवत्रा जेहमानाः । होत्रावृधः स्तोमतष्टासो अर्कैः । आग्ने याहि सुविदत्रेभिरर्वाङ्।सत्यैः कव्यैः पितृभिर्घर्मसद्भिः । हव्यवाहमजरं पुरुप्रियम् । अग्निं घृतेन हविषा सपर्यन् । उपासदं कव्यवाहं पितृणाम् । स नः प्रजां वीरवतीँ समृणवतु ७६

होता यक्षदिडस्पदे । समिधानं महद्यशः । सुषमिद्धं वरेण्यम् । अग्निमिन्द्रं वयोधसम् । गायत्रीं छन्द इन्द्रियम् । त्र्यविं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षच्छुचिव्रतम् । तनूनपातमुद्भिदम् । यं गर्भमदितिर्दधे ७७

शुचिमिन्द्रं वयोधसम् । उष्णिहं छन्द इन्द्रियम् । दित्यवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षदीडेन्यम् । ईडितं वृत्रहन्तमम् । इडाभिरीड्यँ सहः । सोममिन्द्रं वयोधसम् । अनुष्टुभं छन्द इन्द्रियम् । त्रिवत्सं गां वयो दधत् ७८

वेत्वाज्यस्य होतर्यज । होता यक्षत्सुबर्हिषदम् । पूषण्वन्तममर्त्यम् । सीदन्तं बर्हिषि प्रिये । अमृतेन्द्रं वयोधसम् । बृहतीं छन्द इन्द्रियम् । पञ्चाविं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षद्व्यचस्वतीः । सुप्रायणा ऋतावृधः ७९

द्वारो देवीर्हिरण्ययीः । ब्रह्माण इन्द्रं वयोधसम् । पङ्क्तिं छन्द इहेन्द्रियम् । तुर्यवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षत्सुपेशसे ।

सुशिल्पे बृहती उभे । नक्तोषासा न दर्शते । विश्वमिन्द्रं वयोधसम् । त्रिष्टुभं छन्द इन्द्रियम् ८०

षष्ठवाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षत्प्रचेतसा । देवानामुत्तमं यशः । होतारा दैव्या कवी ।सयुजेन्द्रं वयोधसम् । जगतीं छन्द इहेन्द्रियम् । अनड्वाहं गां वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षत्पेशस्वतीः ८१

तिस्रो देवीर्हिरण्ययीः । भारतीर्बृहतीर्महीः । पतिमिन्द्रं वयोधसम् । विराजं छन्द इहेन्द्रियम् । धेनुं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षत्सुरेतसम् । त्वष्टारं पुष्टिवर्धनम् । रूपाणि बिभ्रतं पृथक् । पुष्टिमिन्द्रं वयोधसम् ८२

द्विपदं छन्द इहेन्द्रियम् । उक्षाणं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षच्छतक्रतुम् । हिरण्यपर्णमुक्थिनम् । रशनां बिभ्रतं वशिम् । भगमिन्द्रं वयोधसम् । ककुभं छन्द इहेन्द्रियम् । वशां वेहतं गां न वयो दधत् । वेत्वाज्यस्य होतर्यज । होता यक्षत्स्वाहाकृतीः । अग्निं गृहपतिं पृथक् । वरुणं भेषजं कविम् । क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इन्द्रियम् । बृहदृषभं गां वयो दधत् । वेत्वाज्यस्य होतर्यज ८३

समिद्धो अग्निः समिधा । सुषमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियम् । त्र्यविर्गौर्वयो दधुः । तनूनपाच्छुचिव्रतः । तनूनपाच्च सरस्वती ।उष्णिक्छन्द इन्द्रियम्दित्यवाड्गौर्वयो दधुः । इडाभिरग्निरीड्यः । सोमो देवो अमर्त्यः ८४

अनुष्टुप्छन्द इन्द्रियम् । त्रिवत्सो गौर्वयो दधुः । सुबर्हिरग्निः पूषण्वान् । स्तीर्णबर्हिरमर्त्यः । बृहती छन्द इन्द्रियम् । पञ्चाविर्गौर्वयो दधुः । दुरो देवीर्दिशो महीः । ब्रह्मा देवो बृहस्पतिः । पङ्क्तिश्छन्द इहेन्द्रियम् । तुर्यवाड्गौर्वयो दधुः ८५

उषे यह्वी सुपेशसा । विश्वे देवा अमर्त्याः । त्रिष्टुप्छन्द इन्द्रियम् । पष्ठवाड्गौर्वयो दधुः । दैव्या होतारा भिषजा । इन्द्रेण सयुजा युजा । जगती छन्द इहेन्द्रियम् । अनड्वान्गौर्वयो दधुः । तिस्र इडा सरस्वती ।भारती मरुतो विशः ८६

विराट्छन्द इहेन्द्रियम् । धेनुर्गौर्न वयो दधुः । त्वष्टा तुरीपो अद्भुतः । इन्द्राग्नी पुष्टिवर्धना । द्विपाच्छन्द इहेन्द्रियम् । उक्षा गौर्न वयो दधुः । शमिता नो वनस्पतिः । सविता प्रसुवन्भगम् । ककुच्छन्द इहेन्द्रियम् । वशा वेहद्गौर्न वयो दधुः । स्वाहा यज्ञं वरुणः । सुक्षत्रो भेषजं करत् । अतिच्छन्दाश्छन्द इन्द्रियम् । बृहदृषभो गौर्वयो दधुः ८७

वसन्तेनर्तुना देवाः । वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा । हविरिन्द्रे वयो दधुः । ग्रीष्मेण देवा ऋतुना । रुद्राः पञ्चदशे स्तुतम् । बृहता यशसा बलम् । हविरिन्द्रे वयो दधुः । वर्षाभिर्ऋतुनादित्याः । स्तोमे सप्तदशे स्तुतम् ८८

वैरूपेण विशौजसा । हविरिन्द्रे वयो दधुः । शारदेनर्तुना देवाः । एकविँश ऋभवः स्तुतम् । वैराजेन श्रिया श्रियम् । हविरिन्द्रे वयो दधुः । हेमन्तेनर्तुना देवाः । मरुतस्त्रिणवे स्तुतम् । बलेन शक्वरीः सहः । हविरिन्द्रे वयो दधुः । शैशिरेणर्तुना देवाः । त्रयस्त्रिँशेऽमृतँ स्तुतम् । सत्येन रेवतीः क्षत्रम् । हविरिन्द्रे वयो दधुः ८९

देवं बर्हिरिन्द्रं वयोधसम् । देवं देवमवर्धयत् । गायत्रिया छन्दसेन्द्रियम् । तेज इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज । देवीर्द्वारो देवमिन्द्रं वयोधसम् । देवीर्देवमवर्धयन् । उष्णिहा छन्दसेन्द्रियम् । प्राणमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वियन्तु यज ९०

देवी देवं वयोधसम् । उषे इन्द्रमवर्धताम् । अनुष्टुभा छन्दसेन्द्रियम् । वाचमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज । देवी जोष्ट्री देवमिन्द्रं वयोधसम् । देवी देवमवर्धताम् । बृहत्या छन्दसेन्द्रियम् ।

श्रोत्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज ९१

देवी ऊर्जाहुती देवमिन्द्रं वयोधसम् । देवी देवमवर्धताम् । पङ्क्त्या छन्दसेन्द्रियम् । शुक्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज । देवा दैव्या होतारा देवमिन्द्रं वयोधसम् । देवा देवमवर्धताम् । त्रिष्टुभा छन्दसेन्द्रियम् । त्विषिमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वीतां यज ९२

देवीस्तिस्रस्तिस्रो देवीर्वयोधसम् । पतिमिन्द्रमवर्धयन् । जगत्या छन्दसेन्द्रियम् । बलमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वियन्तु यज । देवो नराशँसो देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । विराजा छन्दसेन्द्रियम् । रेत इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज ९३

देवो वनस्पतिर्देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । द्विपदा छन्दसेन्द्रियम् । भगमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज । देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । ककुभा छन्दसेन्द्रियम् । यश इन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज । देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम् । देवो देवमवर्धयत् । अतिच्छन्दसा छन्दसेन्द्रियम् । क्षत्रमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वेतु यज ९४
६

त्रिवृत्स्तोमो भवति । ब्रह्मवर्चसं वै त्रिवृत् । ब्रह्मवर्चसमेवावरुन्धे । अग्निष्टोमः सोमो भवति । ब्रह्मवर्चसं वा अग्निष्टोमः । ब्रह्मवर्चसमेवावरुन्धे । रथंतरँ साम भवति । ब्रह्मवर्चसं वै रथंतरम् । ब्रह्मवर्चसमेवावरुन्धे । परिस्रजी होता भवति १

अरुणो मिर्मिरस्त्रिशुक्रः । एतद्वै ब्रह्मवर्चसस्य रूपम् । रूपेणैव ब्रह्मवर्चसमवरुन्धे । बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति । स एतं बृहस्पतिसवमपश्यत् । तमाहरत् । तेनायजत । ततो वै स देवानां पुरोधामगच्छत् । यः पुरोधाकामः स्यात् । स बृहस्पतिसवेन यजेत २

पुरोधामेव गच्छति । तस्य प्रातःसवने सन्नेषु नाराशँसेषु । एकादश दक्षिणा नीयन्ते । एकादश माध्यंदिने सवने सन्नेषु नाराशँसेषु । एकादश तृतीयसवने सन्नेषु नाराशँसेषु । त्रयस्त्रिँशत्संपद्यन्ते । त्रयस्त्रिँशद्वै देवताः । देवता एवावरुन्धे । अश्वश्चतुस्त्रिँशः । प्राजापत्यो वा अश्वः ३

प्रजापतिश्चतुस्त्रिँशो देवतानां ।यावतीरेव देवताः । ता एवावरुन्धे । कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतद्रूपम् । यत्कृष्णाजिनम् । ब्रह्मवर्चसेनैवैनँ समर्धयति । आज्येनाभिषिञ्चति । तेजो वा आज्यम् । तेज एवास्मिन्दधाति ४

यदाग्नेयो भवति । अग्निमुखा ह्यृद्धिः । अथ यत्पौष्णः । पुष्टिर्वै पूषा । पुष्टिर्वैश्यस्य । पुष्टिमेवावरुन्धे । प्रसवाय सावित्रः । अथ यत्त्वाष्ट्रः । त्वष्टा हि रूपाणि विकरोति । निर्वरुणत्वाय वारुणः ५

अथो य एव कश्च सन्त्सूयते । स हि वारुणः । अथ यद्वैश्वदेवः । वैश्वदेवो हि वैश्यः । अथ यन्मारुतः । मारुतो हि वैश्यः । सप्तैतानि हवींषि भवन्ति । सप्तगणा वै मरुतः । पृश्निः पष्ठौही मारुत्यालभ्यते । विड्वै मरुतः । विश एवैतन्मध्यतोऽभिषिच्यते । तस्माद्वा एष विशः प्रियः । विशो हि मध्यतोऽभिषिच्यते । ऋषभचर्मेऽध्यभिषिञ्चति । स हि प्रजनयिता । दध्नाभिषिञ्चति । ऊर्ग्वा अन्नाद्यं दधि । ऊर्जैवैनमन्नाद्येन समर्धयति ६

यदाग्नेयो भवति । आग्नेयो वै ब्राह्मणः । अथ यत्सौम्यः । सौम्यो हि ब्राह्मणः । प्रसवायैव सावित्रः । अथ यद्बार्हस्पत्यः । एतद्वै ब्राह्मणस्य वाक्पतीयम् । अथ यदग्नीषोमीयः । आग्नेयो वै ब्राह्मणः । तौ यदा संगच्छेते ७

अथ वीर्यावत्तरो भवति । अथ यत्सारस्वतः । एतद्धि प्रत्यक्षं ब्राह्मणस्य वाक्पतीयम् । निर्वरुणत्वायैव वारुणः । अथो य एव कश्च सन्त्सूयते । स हि वारुणः । अथ यद्द्यावापृथिव्यः । इन्द्रो वृत्राय वज्रमुदयच्छत् । तं द्यावापृथिवी नान्वमन्येताम् । तमेतेनैव भागधेयेनान्वमन्येताम् ८

वज्रस्य वा एषोऽनुमानाय । अनुमतवज्रः सूयाता इति । अष्टावेतानि हवींषि भवन्ति । अष्टाक्षरा गायत्री ।गायत्री ब्रह्मवर्चसम् । गायत्रियैव ब्रह्मवर्चसमवरुन्धे । हिरण्येन घृतमुत्पुनाति । तेजस एव रुचे । कृष्णाजिनेऽभिषिञ्चति । ब्रह्मणो वा एतदृक्सामयो रूपम् । यत्कृष्णाजिनम् । ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिञ्चति । घृतेनाभिषिञ्चति । तथा वीर्यावत्तरो भवति ९

न वै सोमेन सोमस्य सवोऽस्ति । हतो ह्येषः । अभिषुतो ह्येषः । न हि हतः सूयते । सौर्मीं सूतवशामालभते । सोमो वै रेतोधाः । रेत एव तद्दधाति । सौम्यर्चाभिषिञ्चति । रेतोधा ह्येषा । रेतः सोमः । रेत एवास्मिन्दधाति । यत्किं च राजसूयमृते सोमम् । तत्सर्वं भवति । अषाढं युत्सु पृतनासु पप्रिम् । सुवर्षामप्स्वां वृजनस्य गोपाम् । भरेषुजाँ सुक्षितिं सुश्रवसम् । जयन्तं त्वामनु मदेम सोम १०

यो वै सोमेन सूयते । स देवसवः । यः पशुना सूयते । स देवसवः । य इष्ट्या सूयते । स मनुष्यसवः । एतं वै पृथये देवाः प्रायच्छन् । ततो वै सोऽप्यारण्यानां पशूनामसूयत । यावतीः कियतीश्च प्रजा वाचं वदन्ति । तासाँ सर्वासाँ सूयते ११

य एतेन यजते । य उ चैनमेवं वेद । नाराशँस्यर्चाभिषिञ्चति । मनुष्या वै नराशँसः । निह्नुत्य वावैतत् । अथाभिषिञ्चति । यत्किं च राजसूयमनुत्तरवेदीकम् । तत्सर्वं भवति । ये मे पञ्चाशतं ददुः । अश्वानाँ सधस्तुतिः । द्युमदग्ने महि श्रवः । बृहत्कृधि मघोनाम् । नृवदमृत नृणाम् १२

एष गोसवः । षट्त्रिँश उक्थ्यो बृहत्सामा । पवमाने कण्वरथंतरं भवति । यो वै वाजपेयः । स सम्राट्त्सवः । यो राजसूयः । स वरुणसवः । प्रजापतिः स्वाराज्यं परमेष्ठी । स्वाराज्यं गौरेव । गौरिव भवति १३

य एतेन यजते । य उ चैनमेवं वेद । उभे बृहद्रथंतरे भवतः । तद्धि

स्वाराज्यम् । अयुतं दक्षिणाः । तद्धि स्वाराज्यम् । प्रतिधुषाभिषिञ्चति । तद्धि स्वाराज्यम् । अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहतस्तोत्रं प्रत्यभिषिञ्चति । इयं वाव रथंतरम् १४

असौ बृहत् । अनयोरेवैनमनन्तर्हितमभिषिञ्चति । पशुस्तोमो वा एषः । तेन गोसवः । षट्त्रिँशः सर्वः । रेवज्जातः सहसा वृद्धः । क्षत्राणां क्षत्रभृत्तमो वयोधाः । महान्महित्वे तस्तभानः । क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामीत्याह । स्वाराज्यमेवैनं गमयति १५

सिँहे व्याघ्र उत या पृदाकौ । त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । या राजन्ये दुन्दुभा-वायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । या हस्तिनि द्विपिनि या हिरण्ये । त्विषिरश्वेषु पुरुषेषु गोषु १६

इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । रथे अक्षेषु वृषभस्य वाजे । वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना । राडसि विराडसि । सम्राडसि स्वराडसि । इन्द्राय त्वा तेजस्वते तेजस्वन्तँ श्रीणामि । इन्द्राय त्वौजस्वत ओजसवन्तँ श्रीणामि १७

इन्द्राय त्वा पयस्वते पयस्वन्तँ श्रीणामि । इन्द्राय त्वायुष्मत आयुष्मन्तँ श्रीणामि । तेजोऽसि । तत्ते प्रयच्छामि । तेजस्वदस्तु मे मुखम् । तेजस्वच्छिरो अस्तु मे । तेजस्वान्विश्वतः प्रत्यङ्।तेजसा संपिपृग्धि मा । ओजोऽसि । तत्ते प्रयच्छामि १८

ओजस्वदस्तु मे मुखम् । ओजस्वच्छिरो अस्तु मे । ओजस्वान्विश्वतः प्रत्यङ्।ओजसा संपिपृग्धि मा । पयोऽसि । तत्ते प्रयच्छामि । पयस्वदस्तु मे मुखम् । पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ्।पयसा संपिपृग्धि मा १९

आयुरसि । तत्ते प्रयच्छामि । आयुष्मदस्तु मे मुखम् । आयुष्मच्छिरो अस्तु मे आयुष्मान्विश्वतः प्रत्यङ्।आयुषा संपिपृग्धि मा । इममग्न आयुषे वर्चसे कृधि । प्रियँ रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ । विश्वे देवा जरदष्टिर्यथा सत् २०

आयुरसि विश्वायुरसि । सर्वायुरसि सर्वमायुरसि । यतो वातो मनोजवाः । यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासाँ रुचा । अभिषिञ्चामि वर्चसा । समुद्र इवासि गह्मना । सोम इवास्यदाभ्यः । अग्निरिव विश्वतः प्रत्यङ्।सूर्य इव ज्योतिषा विभूः २१

अपां यो द्रवणे रसः । तमहमस्मा आमुष्यायणाय । तेजसे ब्रह्मवर्चसाय गृह्णामि । अपां य ऊर्मौ रसः । तमहमस्मा आमुष्यायणाय । ओजसे वीर्याय गृह्णामि । अपां यो मध्यतो रसः । तमहमस्मा आमुष्यायणाय । पुष्ट्यै प्रजननाय गृह्णामि । अपां यो यज्ञियो रसः । तमहमस्मा आमुष्यायणाय । आयुषे दीर्घायुत्वाय गृह्णामि २२

अभिप्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनः । तुभ्यं देवा अधिब्रुवन् । अङ्कौ न्यङ्कावभित आतिष्ठ वृत्रहन्रथम् । आतिष्ठन्तं परि विश्वे अभूषन् । श्रियं वसानश्चरति स्वरोचाः । महत्तदस्यासुरस्य नाम । आ विश्वरूपो अमृतानि तस्थौ । अनु त्वेन्द्रो मदत्वनु बृहस्पतिः २३

अनु सोमो अन्वग्निरावीत् । अनु त्वा विश्वे देवा अवन्तु । अनु सप्त राजानो य उताभिषिक्ताः । अनु त्वा मित्रावरुणाविहावतम् । अनु द्यावापृथिवी विश्वशंभू ।सूर्यो अहोभिरनु त्वावतु । चन्द्रमा नक्षत्रैरनु त्वावतु । द्यौश्च त्वा पृथिवी च प्रचेतसा । शुक्रो बृहद्दक्षिना त्वा पिपर्तु । अनु स्वधा चिकिताँ सोमो अग्निः । आयं पृणक्तु रजसी उपस्थम् २४

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन् । स एतं प्रजापतिरोदनमपश्यत् । सोऽन्नं भूतोऽतिष्ठत् । ता अन्यत्रान्नाद्यमवित्त्वा । प्रजापतिं प्रजा उपावर्तन्त । अन्नमेवैनं भूतं पश्यन्तीः प्रजा उपावर्तन्ते । य

एतेन यजते । य उ चैनमेवं वेद । सर्वाण्यन्नानि भवन्ति २५

सर्वे पुरुषाः । सर्वाण्येवान्नान्यवरुन्धे । सर्वान्पुरुषान् । राडसि विराडसीत्याह । स्वाराज्यमेवैनं गमयति । यद्धिरण्यं ददाति । तेजस्तेनावरुन्धे । यत्तिसृधन्वम् । वीर्यं तेन । यदष्ट्राम् २६

पुष्टिं तेन । यत्कमण्डलुम् । आयुष्टेन । यद्धिरण्यमाबध्नाति । ज्योतिर्वै हिरण्यम् । ज्योतिरेवास्मिन्दधाति । अथो तेजो वै हिरण्यम् । तेज एवात्मन्धत्ते । यदोदनं प्राश्नाति । एतदेव सर्वमवरुध्य २७

तदस्मिन्नेकधाधात् । रोहिण्यां कार्यः । यद्ब्राह्मण एव रोहिणी ।तस्मादेव । अथो वर्ष्मैवैनँ समानानां करोति । उद्यता सूर्येण कार्यः । उद्यन्तं वा एतँ सर्वाः प्रजाः प्रतिनन्दन्ति । दिदृक्षेण्यो दर्शनीयो भवति । य एवं वेद । ब्रह्मवादिनो वदन्ति २८

अवेत्योऽवभृथा३ ना३ इति । यद्दर्भपुञ्जीलैः पवयति । तत्स्विदेवावैति । तन्नावैति । त्रिभिः पवयति । त्रय इमे लोकाः । एभिरेवैनं लोकैः पवयति । अथो अपां वा एतत्तेजो वर्चः । यद्दर्भाः । यद्दर्भपुञ्जीलैः पवयति । अपामेवैनं तेजसा वर्चसाभिषिञ्चति २९

प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति । स एतं पञ्चशारदीयमपश्यत् । तमाहरत् । तेनायजत । ततो वै स बहोर्भूयानभवत् । यः कामयेत बहोर्भूयान्त्स्यामिति । स पञ्चशारदीयेन यजेत । बहोरेव भूयान्भवति । मरुत्स्तोमो वा एषः । मरुतो हि देवानां भूयिष्ठाः ३०

बहुर्भवति । य एतेन यजते । य उ चैनमेवं वेद । पञ्चशारदीयो भवति । पञ्च वा ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति । अथो पञ्चाक्षरा पङ्क्तिः । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्धे । सप्तदशँ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै ३१

अगस्त्यो मरुद्भ्य उक्ष्णः प्रौक्षत् । तानिन्द्र आदत्त । त एनं वज्रमुद्यत्याभ्यायन्त । तानगस्त्यश्चैवेन्द्रश्च कयाशुभीयेनाशमयताम् । ताण्शान्तानुपाह्वयत । यत्कयाशुभीयं भवति शान्त्यै । तस्मादेत ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ति । त्रयः प्रथमेऽहन्नालभ्यन्ते । एवं द्वितीये । एवं तृतीये ३२

एवं चतुर्थे । पञ्चोत्तमेऽहन्नालभ्यन्ते । वर्षिष्ठमिव ह्येतदहः । वर्षिष्ठः समानानां भवति । य एतेन यजते । य उ चैनमेवं वेद । स्वाराज्यं वा एष यज्ञः । एतेन वा एकयावा कान्दमः स्वाराज्यमगच्छत् । स्वाराज्यं गच्छति । य एतेन यजते ३३

य उ चैनमेवं वेद । मारुतो वा एष स्तोमः । एतेन वै मरुतो देवानां भूयिष्ठा अभवन् । भूयिष्ठः समानानां भवति । य एतेन यजते । य उ चैनमेवं वेद । पञ्चशारदीयो वा एष यज्ञः । आ पञ्चमात्पुरुषादन्नमत्ति । य एतेन यजते । य उ चैनमेवं वेद । सप्तदशँ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेरेव नैति ३४

अस्याजरासो दमा मरित्राः । अर्चद्धूमासो अग्नयः पावकाः । श्वितीचयः श्वात्रासो भुरण्यवः । वनर्षदो वायवो न सोमाः । यजा नो मित्रावरुणा । यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् । अश्विना पिबतँ सुतम् । दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ३५

द्वे विरूपे चरतः स्वर्थे । अन्यान्या वत्समुपधापयेते । हरिरन्यस्यां भवति स्वधावान् । शुक्रो अन्यस्यां ददृशे सुवर्चाः । पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्टे । ऋतूनन्यो विदधज्जायते पुनः । त्रीणि शता त्री सहस्राण्यग्निम् । त्रिँशच्च देवा नव चासपर्यन् ३६

औक्षन्घृतैरास्तृणन्बर्हिरस्मै । आदिद्धोतारं न्यषादयन्त । अग्निनाग्निः समिध्यते । कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः । अग्निर्देवानां जठरम् । पूतदक्षः कविक्रतुः । देवो देवेभिरागमत् । अग्निश्रियो मरुतो विश्वकृष्टयः

। स्रा त्वेषमुग्रमव ईमहे वयम् ३७

ते स्वामिनो रुद्रिया वर्षनिर्णिजः । सिँहा न हेषक्रतवः सुदानवः । यदुत्तमे मरुतो मध्यमे वा । यद्वावमे सुभगासो दिविष्ठ । ततो नो रुद्रा उत वान्वस्य । स्रग्ने वित्ताद्धविषो यद्यजामः । ईडे स्रग्निँ स्ववसं नमोभिः । इह प्रसत्तो विचयत्कृतं नः । रथैरिव प्रभरे वाजयद्भिः । प्रदक्षिणिन्मरुताँ स्तोममृध्याम् ३८

श्रुधि श्रुत्कर्ण वह्निभिः । देवैरग्ने सयावभिः । स्रासीदन्तु बर्हिषि । मित्रो वरुणो स्रर्यमा । प्रातर्यावाणो स्रध्वरम् । विश्वेषामदितिर्यज्ञियानाम् । विश्वेषामतिथिर्मानुषाणाम् । स्रग्निर्देवानामव स्रावृणानः । सुमृडीको भवतु विश्ववेदाः । त्वे स्रग्ने सुमतिं भिक्षमानाः ३९

दिवि श्रवो दधिरे यज्ञियासः । नक्ता च चक्रुरुषसा विरूपे । कृष्णं च वर्णमरुणं च संधुः । त्वामग्न स्रादित्यास स्रास्यम् । त्वां जिह्वाँ शुचयश्चक्रिरे कवे । त्वाँ रातिषाचो स्रध्वरेषु सश्चिरे । त्वे देवा हविरदन्त्याहुतम् । नि त्वा यज्ञस्य साधनम् । स्रग्ने होतारमृत्विजम् । वनुष्वद्देव धीमहि प्रचेतसम् । जीरं दूतममर्त्यम् ४०

तिष्ठा हरी रथ स्रा युज्यमाना याहि । वायुर्न नियुतो नो स्रच्छ । पिबास्यन्धो स्रभिसृष्टो स्रस्मे । इन्द्र स्वाहा ररिमा ते मदाय । कस्य वृषा सुते सचा । नियुत्वान्वृषभो रणत् । वृत्रहा सोमपीतये । इन्द्रं वयं महाधने । इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ४१

द्विता यो वृत्रहन्तमः । विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतम् । स सूर स्रा जनयञ्ज्योतिरिन्द्रम् । स्रया धिया तरणिरद्रिबर्हाः । स्रृतेन शुष्मीनवमानो स्रर्कैः । व्युस्त्रिधो स्रस्त्रो स्रद्रिर्बिभेद । उत त्यदाश्वश्वियम् । यदिन्द्र नाहुषीष्वा । स्रग्रे विक्षु प्रतीदयत् ४२

भरेष्विन्द्रँ सुहवँ हवामहे । स्रँहोमुचँ सुकृतं दैव्यं जनम् । स्रग्निं मित्रं वरुणँ

सातये भगम् । द्यावापृथिवी मरुतः स्वस्तये । महि क्षेत्रं पुरुश्चन्द्रं विविद्वान् । आदित्सखिभ्यश्च रथँ समैरत् । इन्द्रो नृभिरजनद्दीद्यानः साकम् । सूर्यमुषसं गातुमग्निम् । उरुं नो लोकमनुनेषि विद्वान् । सुवर्वज्ज्योतिरभयँ स्वस्ति ४३

ऋष्वा त इन्द्र स्थविरस्य बाहू ।उपस्थेयाम शरणा बृहन्ता । आ नो विश्वाहिरूतिभिः सजोषाः । ब्रह्म जुषाणो हर्यश्व याहि । वरीवृजत्स्थविरेभिः सुशिप्र । अस्मे दधद्वृषणँ शुष्ममिन्द्र । इन्द्राय गाव आशिरम् । दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरेऽविदत् । तास्ते वज्रिन्धेनवो जोजयुर्नः ४४

गभस्तयो नियुतो विश्ववाराः । अहरहर्भूय इज्जोगुवानाः । पूर्णा इन्द्र क्षुमतो भोजनस्य । इमां ते धियं प्रभरे महो महीम् । अस्य स्तोत्रे धिषणा यत्त आनजे । तमुत्सवे च प्रसवे च सासहिम् । इन्द्रं देवासः शवसा मदन्नन ४५

प्रजापतिः पशूनसृजत । तेऽस्मात्सृष्टाः पराञ्च आयन् । तानग्निष्टोमेन नाप्नोत् । तानुक्थ्येन नाप्नोत् । तान्षोडशिना नाप्नोत् । तान्रात्रिया नाप्नोत् । तान्त्संधिना नाप्नोत् । सोऽग्निमब्रवीत् । इमान्म ईप्सेति । तानग्निस्त्रिवृता स्तोमेन नाप्नोत् ४६

स इन्द्रमब्रवीत् । इमान्म ईप्सेति । तानिन्द्रः पञ्चदशेन स्तोमेन नाप्नोत् । स विश्वान्देवानब्रवीत् । इमान्म ईप्सतेति । तान्विश्वे देवाः सप्तदशेन स्तोमेन नाप्नुवन् । स विष्णुमब्रवीत् । इमान्म ईप्सेति । तान्विष्णुरेकविँशेन स्तोमेनाप्नोत् । वारवन्तीयेनावारयत ४७

इदं विष्णुर्विचक्रम इति व्यक्रमत । यस्मात्पशवः प्र प्रेव भ्रँशेरन् । स एतेन यजेत । यदाप्नोत् । तदप्तोर्यामस्याप्तोर्यामत्वम् । एतेन वै देवा जैत्वानि जित्वा । यं काममकामयन्त तमाप्नुवन् । यं कामं कामयते । तमेतेनाप्नोति ४८

व्याघ्रोऽयमग्नौ चरति प्रविष्टः । ऋषीणां पुत्रो अभिशस्तिपा अयम् । नमस्कारेण । नमसा ते जुहोमि । मा देवानां मिथुया कर्म भागम् । सावीर्हि देव प्रसवाय पित्रे । वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यँ सवितः सर्वताता । दिवे दिव आसुवा भूरिपश्वः । भूतो भुतेषु चरति प्रविष्टः । स भूतानामधिपतिर्बभूव ४९

तस्य मृत्यौ चरति राजसूयम् । स राजा राज्यमनुमन्यतामिदम् । येभिश्शिल्पैः पप्रथानामदृँहत् । योभिर्द्यामभ्यपिँशत्प्रजापतिः । येभिर्वाचं विश्वरूपाँ समव्ययत् । तेनेममग्न इह वर्चसा समङ्ग्धि । येभिरादित्यस्तपति प्रकेतुभिः । येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययत् । तेनेममग्न इह वर्चसा समङ्ग्धि ५०

आयं भातु शवसा पञ्च कृष्टीः । इन्द्र इव ज्वेष्ठो भवतु प्रजावान् । अस्मा अस्तु पुष्कलं चित्रभानु । आयं पृणक्तु रजसी उपस्थम् । यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्त्सूर्या अर्पिताः सप्त साकम् । तस्मिन्राजानमधिविश्रयेमम् । द्यौरसि पृथिव्यसि । व्याघ्रो वैयाघ्रेऽधि ५१

विश्रयस्व दिशो महीः । विशस्त्वा सर्वा वाञ्छन्तु । मा त्वद्राष्ट्रमधिभ्रशत् । या दिव्या आपः पयसा संबभूवुः । या अन्तरिक्ष उत पार्थिवीर्याः । तासां त्वा सर्वासाँ रुचा । अभिषिञ्चाइ वर्चसा । अभि त्वा वर्चसा सिचं दिव्येन । पयसा सह । यथासा राष्ट्रवर्धनः ५२

तथा त्वा सविता करत् । इन्द्रं विश्वा अवीवृधन् । समुद्रव्यचसं गिरः । रथीतमँ रथीनाम् । वाजानाँ सत्पतिं पतिम् । वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा । रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा । आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा । विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा । बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसा ५३

अरुणं त्वा वृकमुग्रं खजंकरम् । रोचमानं मरुतामग्रे अर्चिषः । सूर्यवन्तं मघवानं विषासहिम् । इन्द्रमुक्थ्येषु नामहूतमँ हुवेम । प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन । आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा । इन्द्रस्य ते वीर्यकृतः । बाहू उपावहरामि ५४

अभि प्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा । आतिष्ठ वृत्रहन्तमः । तुभ्यं देवा अधिब्रुवन् । अङ्कौ न्यङ्कावभितो रथं यौ । ध्वान्तं वाताग्रमनुसंचरन्तौ । दूरेहेतिरिन्द्रियावान्पतत्री ।ते नोऽग्नयः पप्रयः पारयन्तु । नमस्त ऋषे गद । अव्यथायै त्वा स्वधायै त्वा ५५

मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवा ब्रह्मन्तवेदस्तु । तिष्ठा रथे अधि यद्वज्रहस्तः । आ रश्मीन्देव युवसे स्वश्वः । आतिष्ठ वृत्रहन्नातिष्ठन्तं परि । अनु त्वेन्द्रो मदत्वनु त्वा मित्रावरुणौ । द्यौश्च त्वा पृथिवी च प्रचेतसा । शुक्रो बृहद्दक्षिणा त्वा पिपर्तु । अनु स्वधा चिकिताँ सोमो अग्निः । अनु त्वावतु सविता सवेन ५६

इन्द्रं विश्वा अवीवृधन् । समुद्रव्याचसं गिरः । रथीतमँ रथीनाम् । वाजानाँ सत्पतिं पतिम् । परि मा सेन्या घोषाः । ज्यानां वृञ्जन्तु गृध्नवः मेथिष्ठाः पिन्वमाना इह । मां गोपतिमभिसंविशन्तु । तन्मेऽनुमतिरनुमन्यताम् । तन्माता पृथिवी तत्पिता द्यौः ५७

तद्ग्रावाणः सोमसुतो मयोभुवः । तदश्विना शृणुतँ सौभगा युवम् । अवते हेड उदुत्तमम् । एना व्याघ्रं परिषस्वजानाः । सिँहँ हिन्वन्ति महते सौभगाय । समुद्रं न सुहवं तस्थिवाँसम् । मर्मृज्यन्ते द्वीपिनमप्स्वन्तः । उदसावेतु सूर्यः । उदिदं मामकं वचः । उदिहि देव सूर्य । सह वग्नुना मम । अहं वाचो विवाचनम् । मयि वागस्तु धर्णसिः । यन्तु नदयो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु । अन्नवतामोदनवतामामिक्षवताम् । एषाँ राजा भूयासम् ५८

ये केशिनः प्रथमाः सत्त्रमासत । येभिराभृतं यदिदं विरोचते । तेभ्यो जुहोमि

बहुधा घृतेन । रायस्पोषेणेमं वर्चसा सँसृजाथ । नर्ते ब्रह्मणस्तपसो विमोकः । द्विनाम्नी दीक्षा वशिनी ह्युग्रा । प्र केशाः सुवते काण्डिनो भवन्ति । तेषां ब्रह्मेदीशे वपनस्य नान्यः । आरोह प्रोष्ठं विषहस्व शत्रून् । अवास्राग्दीक्षा वशिनी ह्युग्रा ५९

देहि दक्षिणां प्रतिरस्वायुः । अथा मुच्यस्व वरुणस्य पाशात् । येनावपत्सविता क्षुरेण । सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्योर्जेमम् । रय्या वर्चसा सँसृजाथ । मा ते केशाननु गाद्वर्च एतत् । तथा धाता करोतु ते । तुभ्यमिन्द्रो बृहस्पतिः । सविता वर्च आदधात् ६०

तेभ्यो निधानं बहुधा व्यैच्छन् । अन्तरा द्यावापृथिवी अपः सुवः । दर्भस्तम्बे वीर्यकृते निधाय । पौँस्येनेमं वर्चसा सँसृजाथ । बलं ते बाहुवोः सविता दधातु । सोमस्त्वानक्तु पयसा घृतेन । स्त्रीषु रूपमश्विनैतन्निधत्तम् । पौँस्येनेमं वर्चसा सँसृजाथ । यत्सीमन्तं कङ्कतस्ते लिलेख । यद्वा क्षुरः परिववर्ज वपँस्ते । स्त्रीषु रूपमश्विनैतन्निधत्तम् । पौँस्येनेमँ सँसृजाथो वीर्येण ६१

इन्द्रं वै स्वा विशो मरुतो नापाचायन् । सोऽनपचाय्यमान एतं विघनमपश्यत् । तमाहरत् । तेनायजत । तेनैवासां तँ सँस्तम्भं व्यहन् । यद्व्यहन् । तद्विघनस्य विघनत्वम् । वि पाप्मानं भ्रातृव्यँ हते । य एतेन यजते । य उ चैनमेवं वेद ६२

यँ राजानं विशो नापचायेयुः । यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतः स्यात् । स एतेन यजेत । विघनेनैवैनद्विहत्य । विशामाधिपत्यं गच्छति । तस्य द्वे द्वादशे स्तोत्रे भवतः । द्वे चतुर्विँशे । औद्भिद्यमेव तत् । एतद्वै क्षत्रस्याउद्भिद्यम् । यदस्मै स्वा विशो बलिँ हरन्ति ६३

हरन्त्यस्मै विशो बलिम् । ऐनमप्रतिख्यातं गच्छति । य एवं वेद । प्रबा-हुग्वा अग्रे क्षत्राण्यातेपुः । तेषामिन्द्रः क्षत्राण्यादत्त । न वा इमानि क्षत्रा-

गयभूवन्निति । तन्नक्षत्राणां नक्षत्रत्वम् । आ श्रेयसो भ्रातृव्यस्य तेज इन्द्रियं दत्ते । य एतेन यजते । य उ चैनमेवं वेद ६४

तद्यथा ह वै सचाक्रिणौ कप्लकावुपावहितौ स्याताम् । एवमेतौ युग्मन्तौ स्तोमौ । अयुक्षु स्तोमेषु क्रियेते । पाप्मनोऽपहत्यै । अप पाप्मानं भ्रातृव्यँ हते । य एतेन यजते । य उ चैनमेवं वेद । तद्यथा ह वै सूतग्रामण्यः । एवं छन्दाँसि । तेष्वसावादित्यो बृहतीरभ्यूढः ६५

सतोबृहतीषु स्तुवते सतो बृहन् । प्रजया पशुभिरसानीत्येव । व्यतिषक्ताभिः स्तुवते । व्यतिषक्तं वै क्षत्रं विशा । विशैवैनं क्षत्रेण व्यतिषजति । व्यतिषक्ताभिः स्तुवते । व्यतिषक्तो वै ग्रामणीः सजातैः । सजातैरेवैनं व्यतिषजति । व्यतिषक्ताभिः स्तुवते । व्यतिषक्तो वै पुरुषः पाप्मभिः । व्यतिषक्ताभिरेवास्य पाप्मनो नुदते ६६ ७

पीवोन्नाँ रयिवृधः सुमेधाः । श्वेतः सिषक्ति नियुतामभिश्रीः । ते वायवे समनसो वितस्थुः । विश्वेन्नरः स्वपत्यानि चक्रुः । रायेऽनु यं जज्ञतू रोदसी उभे । राये देवी धिषणा धाति देवम् । अधा वायुं नियुतः सश्चत स्वाः । उत श्वेतं वसुधितिं निरेके । आ वायो । प्र याभिः । प्र वायुमच्छा बृहती मनीषा १

बृहद्रयिं विश्ववाराँ रथप्राम् । द्युतद्यामा नियुतः पत्यमानः । कविः कविमियक्षसि प्रयज्यो । आ नो नियुद्भिः शतिनीभिरध्वरम् । सहस्रिणी-भिरुप याहि यज्ञम् । वायो अस्मिन्हविषि मादयस्व । यूयं पात स्वस्तिभिः सदा नः । प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु २

वयँ स्याम पतयो रयीणाम् । रयीणां पतिं यजतं बृहन्तम् । अस्मिन्भरे नृतमं वाजसातौ । प्रजापतिं प्रथमजामृतस्य । यजाम देवमधि नो ब्रवीतु । प्रजापते त्वं निधिपाः पुराणः । देवानां पिता जनिता प्रजानाम् । पतिर्विश्वस्य जगतः परस्पाः । हविर्नो देव विहवे जुषस्व । तवेमे लोकाः प्रदिशो दिशश्च ३

परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीवधन्य इदं नो देव । प्रतिहर्य हव्यम् । प्रजापतिं प्रथमं यज्ञियानाम् । देवानामग्रे यजतं यजध्वम् । स नो ददातु द्रविणँ सुवीर्यम् । रायस्पोषं विष्यतु नाभिमस्मे । यो राय ईशे शतदाय उक्थ्यः । यः पशूनाँ रक्षिता विष्ठितानाम् । प्रजापतिः प्रथमजा ऋतस्य ४

सहस्रधामा जुषताँ हविर्नः । सोमापूषणेमौ देवौ । सोमापूषणा रजसो विमानम् । सप्तचक्रँ रथमविश्वमिन्वम् । विषूवृतं मनसा युज्यमानम् । तं जिन्वथो वृषणा पञ्चरश्मिम् । दिव्यन्यः सदनं चक्र उच्चा । पृथिव्यामन्यो अध्यन्तरिक्षे । तावस्मभ्यं पुरुवारं पुरुक्षुम् । रायस्पोषं विष्यतां नाभिमस्मे ५

धियं पूषा जिन्वतु विश्वमिन्वः । रयिँ सोमो रयिपतिर्दधातु । अवतु देव्यदितिरनर्वा । बृहद्वदेम विदथे सुवीराः । विश्वान्यन्यो भुवना जजान । विश्वमन्यो अभिचक्षाण एति । सोमापूषणाववतं धियं मे । युवभ्यां विश्वाः पृतना जयेम । उदुत्तमं वरुणास्तभ्नाद्द्याम् । यत्किं चेदं कितवासः । अव ते हेडस्तत्त्वा यामि । आदित्यानामवसा न दक्षिणा । धारयन्त आदित्यासस्तिस्रो भूमीर्धारयन् । यज्ञो देवानाँ शुचिरपः ६

ते शुक्रासः शुचयो रश्मिवन्तः । सीदन्नादित्या अधि बर्हिषि प्रिये । कामेन देवाः सरथं दिवो नः । आयान्तु यज्ञमुप नो जुषाणाः । ते सूनवो अदितेः पीवसामिषम् । घृतं पिन्वत्प्रतिहर्यन्नृतेजाः । प्र यज्ञिया यजमानाय येमुरे । आदित्याः कामं पितुमन्तमस्मे । आ नः पुत्रा अदितेर्यान्तु यज्ञम् । आदित्यासः पथिभिर्देवयानैः ७

अस्मे कामं दाशुषे सन्नमन्तः । पुरोडाशं घृतवन्तं जुषन्ताम् । स्कभायत निर्ऋतिँ सेधताममतिम् । प्र रशिभिर्यतमाना अमृध्राः । आदित्याः काम प्रयतां वषट्कृतिम् । जुषध्वं नो हव्यदातिं यजत्राः । आदित्यान्काममवसे हुवेम । ये भूतानि जनयन्तो विचिख्युः । सीदन्तु पुत्रा अदितेरुपस्थम् । स्तीर्णं बर्हिर्हविरद्याय देवाः ८

स्तीर्णं बर्हिः सीदता यज्ञे अस्मिन् । ध्राजाः सेधन्तो अमतिं दुरेवाम् । अस्मभ्यं पुत्रा अदितेः प्रयँसत । आदित्याः काम हविषो जुषाणाः । अग्ने नय सुपथा राये अस्मान् । विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनः । भूयिष्ठां ते नमौक्तिं विधेम । प्र वः शुक्राय भानवे भरध्वम् । हव्यं मतिं चाग्नये सुपूतम् ९

यो दैव्यानि मानुषा जनूँषि । अन्तर्विश्वानि विद्मना जिगाति । अच्छा गिरो मतयो देवयन्तीः । अग्निं यन्ति द्रविणं भिक्षमाणाः । सुसंदृशँ सुप्रतीकँ स्वञ्चम् । हव्यवाहमरतिं मानुषाणाम् । अग्ने त्वमस्मद्युयोध्यमीवाः । अनग्नित्रा अभ्यमन्त कृष्टीः । पुनरस्मभ्यँ सुविताय देव । क्षां विश्वेभिरजरेभिर्यजत्र १०

अग्ने त्वं पारया नव्यो अस्मान् । स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी ।भवा तोकाय तनयाय शं योः । प्र कारवो मनना वच्यमानाः । देवद्रीचीं नयथ देवयन्तः । दक्षिणावाड्वाजिनी प्राच्येति । हविर्भरन्त्यग्नये घृताची ।इन्द्रं नरो । युजे रथम् । ।जगृभ्णा ते दक्षिणामिन्द्र हस्तम् ११

वसूयवो वसुपते वसूनाम् । विद्मा हि त्वा गोपतिँ शूर गोनाम् । अस्मभ्यं चित्रं वृषणँ रयिं दाः । तवेदं विश्वमभितः पशव्यम् । यत्पश्यसि चक्षसा सूर्यस्य । गवामसि गोपतिरेक इन्द्र । भक्षीमहि ते प्रयतस्य वस्वः । समिन्द्र णो मनसा नेषि गोभिः । सँ सूरिभिर्मघवन्त्सँ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति १२

सं देवानाँ सुमत्या यज्ञियानाम् । आराच्छत्रुमप बाधस्व दूरम् । उग्रो यः शम्बः पुरुहूत तेन । अस्मे धेहि यवमद्गोमदिन्द्र । कृधी धियं जरित्रे वाजरत्नाम् । आ वेधसाँ स हि शुचिः । बृहस्पतिः प्रथमं जायमानः । महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो रवेण । वि सप्तरश्मिरधमत्तमाँसि १३

बृहस्पतिः समजयद्वसूनि । महो व्रजान्गोमतो देव एषः । अपः

सिषासन्त्सुवरप्रतीत्तः । बृहस्पतिर्हन्त्यमित्रमर्कैः । बृहस्पते परि । एवा पित्रे । आ नो दिवः । पावीरवी । इमा जुह्वाना । यस्ते स्तनः । सरस्वत्यभि नो नेषि । इयँ शुष्मेभिर्बिसखा इवारुजत् । सानु गिरीणां तविषेभिरूर्मिभिः । पारावदघ्नीमवसे सुवृक्तिभिः । सरस्वतीमाविवासेम धीतिभिः १४

सोमो धेनुँ सोमो अर्वन्तमाशुम् । सोमो वीरं कर्मण्यं ददातु । सादन्यं विदथ्यँ सभेयम् । पितुःश्रवणं यो ददाशदस्मै । अषाढं युत्सु । त्वँ सोम क्रतुभिः । ।या ते धामानि हविषा यजन्ति । ।त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अजनयस्त्वं गाः । त्वमाततन्थोर्वन्तरिक्षम् । त्वं ज्योतिषा वि तमो ववर्थ १५

या ते धामानि दिवि या पृथिव्याम् । या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेडन् । राजन्त्सोम प्रति हव्या गृभाय । विष्णोर्नु कं। तदस्य प्रियम् । प्र तद्विष्णुः । ।परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वम् । परमस्य वित्से १६

विचक्रमे । त्रिर्देवः । आ ते महो । यो जात एव । अभि गोत्राणि । आभिः स्पृधो मिथतीररिषण्यन् । अमित्रस्य व्यथया मन्युमिन्द्र आभिर्विश्वा अभियुजो विषूचीः । आर्याय विशोऽवतरीर्दासीः । अयँ शृण्वे अध जयन्नुत घ्नन् । अयमुत प्रकृणुते युधा गाः । यदा सत्यं कृणुते मन्युमिन्द्रः १७

विश्वं दृढं भयत एजदस्मात् । अनु स्वधामक्षरन्नापो अस्य । अवर्धत मध्य आ नाव्यानाम् । सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन । हन्मनाहन्नभि द्यून् । मरुत्वन्तं वृषभं वावृधानम् । अकवारिं दिव्यँ शासमिन्द्रम् । विश्वासाहमवसे नूतनाय । उग्रँ सहोदामिह तँ हुवेम । जनिष्ठा उग्रः सहसे तुराय १८

मन्द्र ओजिष्ठो बहुलाभिमानः । अवर्धन्निन्द्रं मरुतश्चिदत्र । माता यद्वीरं

दधनद्धनिष्ठा । क्व स्या वो मरुतः स्वधासीत् । यन्मामेकँ समधत्ताहिहत्ये । अहँ ह्युग्रस्तविषस्तुविष्मान् । विश्वस्य शत्रोरनमं वधस्नैः । वृत्रस्य त्वा श्वसथादीषमाणाः । विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्तु १९

अथेमा विश्वाः पृतना जयासि । वधीं वृत्रं मरुत इन्द्रियेण । स्वेन भामेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः । सुगा अपश्चकर वज्रबाहुः । स यो वृषा वृष्णियेभिः समोकाः । महो दिवः पृथिव्याश्च सम्राट् । सतीनसत्त्वा हव्यो भरेषु । मरुत्वान्नो भवत्विन्द्र ऊती । इन्द्रो वृत्रमतरद्वृत्रतूर्ये २०

अनाधृष्यो मघवा शूर इन्द्रः । अन्वेनं विशो अमदन्त पूर्विः । अयँ राजा जगतश्चर्षणीनाम् । स एव वीरः स उ वीर्यावान् । स एकराजो जगतः परस्पाः । यदा वृत्रमतरच्छूर इन्द्रः । अथाभवद्दमिताभिक्रतूनाम् । इन्द्रो यज्ञं वर्धयन्विश्ववेदाः । पुरोडाशस्य जुषताँ हविर्नः । वृत्रं तीर्त्वा दानवं वज्रबाहुः २१

दिशोऽदृँहद्दृँहिता दृँहणेन । इमं यज्ञं वर्धयन्विश्ववेदाः । पुरोडाशं प्रतिगृभ्णात्विन्द्रः । यदा वृत्रमतर्च्छूर इन्द्रः । अथैकराजो अभवज्जनानाम् । इन्द्रो देवाञ्शम्बरहत्य आवत् । इन्द्रो देवानामभवत्पुरोगाः । इन्द्रो यज्ञे हविषा वावृधानः । वृत्रतूर्णो अभयँ शर्म यँसत् । यः सप्त सिन्धूँरदधा-त्पृथिव्याम् । यः सप्त लोकानकृणोद्दिशश । इन्द्रो हविष्मान्त्सगणो मरुद्भिः । वृत्रतूर्णो यज्ञमिहोपयासत् २२

इन्द्रस्तरस्वानभिमातिहोग्रः । हिरण्यवाशीरिषिरः सुवर्षाः । तस्य वयँ सुमतौ यज्ञियस्य । अपि भद्रे सौमनसे स्याम । हिरण्यवर्णो अभयं कृणोतु । अभिमातिहेन्द्रः पृतनासु जिष्णुः । स नः शर्म त्रिवरूथं वियँसत् । यूयं पात स्वस्तिभिः सदा नः । इन्द्रँ स्तुहि वज्रिणँ स्तोमपृष्ठम् । पुरोडाशस्य जुषताँ हविर्नः २३

हत्वाभिमातीः पृतनाः सहस्वान् । अथाभयं कृणुहि विश्वतो नः । स्तुहि शूरं वज्रिणमप्रतीतम् । अभिमातिहनं पुरुहूतमिन्द्रम् । य एक इच्छतपतिर्जनेषु । तस्मा इन्द्राय हविराजुहोत । इन्द्रो देवानामधिपाः पुरोहितः । दिशां पतिरभवद्वाजिनीवान् । अभिमातिहा तविषस्तुविष्मान् । अस्मभ्यं चित्रं वृषणँ रयिं दात् २४

य इमे द्यावापृथिवी महित्वा । बलेनादृँहदभिमातिहेन्द्रः । स नो हविः प्रतिगृभ्णातु रातये । देवानां देवो निधिपा नो अव्यात् । अनवस्ते रथं। वृष्णे यत्ते । इन्द्रस्य नु वीर्याणि । अहन्नहिम् । ।इन्द्रो यातोऽवसितस्य राजा । शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षेति चर्षणीनाम् । अरान्न नेमिः परि ता बभूव २५

अभि सिध्मो अजिगादस्य शत्रून् । वि तिग्मेन वृषभेणा पुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिन्द्रः । प्र स्वां मतिमतिरच्छाशदानः । विष्णुं देवं वरुणमूतये भगम् । मेदसा देवा वपया यजध्वम् । ता नो यज्ञमागतं विश्वधेना । प्रजावदस्मे द्रविणेह धत्तम् । मेदसा देवा वपया यजध्वम् । विष्णुं च देवं वरुणं च रातिम् २६

ता नो अमीवा अपबाधमानौ । इमं यज्ञं जुषमाणावुपेतम् । विष्णूवरुणा युवमध्वराय नः । विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्यू हविषा वृधाना । ज्योतिषारातीर्दहतं तमाँसि । ययोरोजसा स्कभिता रजाँसि । वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता शहोभिः । विष्णू अगन्वरुणा पूर्वहूतौ २७

विष्णूवरुणावभिशस्तिपा वाम् । देवा यजन्त हविषा घृतेन । अपामीवाँ सेधतँ रक्षसश्च । अथा धत्तं यजमानाय शं योः । अँहोमुचा वृषभा सुप्रतूर्ती । देवानां देवतमा शविष्ठा । विष्णूवरुणा प्रतिहर्यतं नः । इदं नरा प्रयतमूतये हविः । मही नु द्यावापृथिवी इह ज्येष्ठे । रुचा भवताँ शुचयद्भिरर्कैः २८

यत्सीं वरिष्ठे बृहती विमिन्वन् । नृवद्ध्योऽक्षा पप्रथानेभिरेवैः । प्र पूर्वजे

पितरा नव्यसीभिः । गीर्भिः कृणुध्वँ सदने ऋतस्य । आ नो द्यावापृथिवी दैव्येन । जनेन यातं महि वां वरूथम् । स इत्स्वपा भुवनेष्वास । य इमे द्यावापृथिवी जजान । उर्वी गभीरे रजसी सुमेके । अवँशे धीरः शच्या समैरत् २९

भूरिं द्वे अचरन्ती चरन्तम् । पद्वन्तं गर्भमपदी दधाते । नित्यं न सूनुं पित्रोरुपस्थे । तं पिपृतँ रोदसी सत्यवाचम् । इदं द्यावापृथिवी सत्यमस्तु । पितर्मातर्यदिहोपब्रुवे वाम् । भूतं देवानामवमे अवोभिः । विद्यामेषं वृजनं जीरदानुम् । उर्वी पृथ्वी बहुले दूरेऽन्ते । उपब्रुवे नमसा यज्ञे अस्मिन् । दधाते ये सुभगे सुप्रतूर्ती ।द्यावा रक्षतं पृथिवी नो अभ्वात् । या जाता ओषधयो । ऽति विश्वाः परिष्ठाः । ।या ओषधयः सोमराज्ञीर् । अश्वावतीँ सोमवतीम् । ओषधीरिति मातरो । अन्या वो अन्यामवतु ३०

शुचिं नु स्तोमँ। श्नथद्वृत्रम् । ।उभा वामिन्द्राग्नी। प्र चर्षणिभ्यः । ।आ वृत्रहणा । गीर्भिर्विप्रः । ।ब्रह्मणस्पते त्वमस्य यन्ता । सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवाः । बृहद्वदेम विदथे सुवीराः । स ईँ सत्येभिः सखिभिः शुचद्भिः । गोधायसं वि धनसैरतर्दत् । ब्रह्मणस्पतिर्वृषभिर्वराहैः ३१

घर्मस्वेदोभिर्द्रविणं व्यानट् । ब्रह्मणस्पतेरभवद्यथावशम् । सत्यो मन्युर्महि कर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चाभजत् । महीव रीतिः शवसा सरत्पृथक् । इन्धानो अग्निं वनवद्वनुष्यतः । कृतब्रह्मा शूशुवद्रातहव्य इत् । जातेन जातमति सृत्प्रसृँसते । यंयं युजं कृणुते ब्रह्मणस्पतिः । ब्रह्मणस्पते सुयमस्य विश्वहा ३२

रायः स्याम रथ्यो विवस्वतः । वीरेषु वीराँ उपपृङ्गधि नस्त्वम् । यदीशानो ब्रह्मणा वेषि मे हवम् । स इज्जनेन स विशा स जन्मना । स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमाविवासति । श्रद्धामना हविषा ब्रह्मणस्पतिम् । यस्ते पूषन्नावो अन्तः । शुक्रं ते अन्यत् । पूषेमा आशाः । प्रपथे पथामजनिष्ट पूषा ३३

प्रपथे दिवः प्रपथे पृथिव्याः । उभे अभि प्रियतमे सधस्थे । आ च परा च चरति प्रजानन् । पूषा सुबन्धुर्दिव आ पृथिव्याः । इडस्पतिर्मघवा दस्मवर्चाः । तं देवासो अददुः सूर्यायै । कामेन कृतं तवसँ स्वञ्चम् । अजाश्वः पशुपा वाजवस्त्यः । धियंजिन्वो विश्वे भुवने अर्पितः । अष्ट्रां पूषा शिथिरामुद्वरीवृजत् ३४

संचक्षाणो भुवना देव ईयते । शुची वो हव्या मरुतः शुचीनाम् । शुचिँ हिनोम्यध्वरँ शुचिभ्यः । ऋतेन सत्यमृतसाप आयन् । शुचिजन्मानः शुचयः पावकाः । प्र चित्रमर्कं गृणते तुराय । मारुताय स्वतवसे भरध्वम् । ये सहाँसि सहसा सहन्ते । रेजते अग्ने पृथिवी मखेभ्यः । अँसेष्वा मरुतः खादयो वः ३५

वक्षःसु रुक्मा उपशिश्रियाणाः । वि विद्युतो न व्यृष्टिभी रुचानाः । अनु स्वधामायुधैर्यच्छमानाः । या वः शर्म शशमानाय सन्ति । त्रिधातूनि दाशुषे यच्छताधि । अस्मभ्यं तानि मरुतो वियन्त । रयिं नो धत्त वृषणः सुवीरम् । इमे तुरं मरुतो रामयन्ति । इमे सहः सहस आनमन्ति । इमे शँसं वनुष्यतो निपान्ति ३६

गुरु द्वेषो अररुषे दधन्ति । अरा इवेदचरमा अहेव । प्र प्रजायन्ते अकवा महोभिः । पृश्नेः पुत्रा उपमासो रभिष्ठाः । स्वया मत्या मरुतः संमिमिक्षुः । अनु ते दायि मह इन्द्रियाय । सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्र । इन्द्र देवेभिरनु ते नृषह्ये । य इन्द्र शुष्मो मघवन्ते अस्ति ३७

शिक्षा सखिभ्यः पुरुहूत नृभ्यः । त्वँ हि दृढा मघवन्विचेताः । अपावृधि परिवृतिं न राधः । इन्द्रो राजा जगतश्चर्षणीनाम् । अधि क्षमि विषुरूपं यदस्ति । ततो ददातु दाशुषे वसूनि । चोदद्राध उपस्तुतश्चिदर्वाक् । तमु ष्टुहि यो अभिभूत्योजाः । वन्वन्नवातः पुरुहूत इन्द्रः । अषाढमुग्रँ सहमानमाभिः ३८ गीर्भिर्वर्ध वृषभं चर्षणीनाम् । स्थूरस्य रायो बृहतो य ईशे । तमु ष्टवाम विदथेष्विन्द्रम् । यो वायुना जयति गोमतीषु । प्र धृष्णुया नयति वस्यो अच्छ । आ ते शुष्मो वृषभ एतु पश्चात् । ओत्तरादधरागा पुरस्तात्

। आ विश्वतो अभि समेत्वर्वाङ्।इन्द्र द्युम्नँ सुवर्वद्धेह्यस्मे ३९

आ देवो यातु सविता सुरत्नः । अन्तरिक्षप्रा वहमानो अश्वैः । हस्ते दधानो नर्या पुरूणि । निवेशयन्च प्रसुवन्च भूम । अभीवृतं कृशनैर्विश्वरूपम् । हिरण्यशम्यं यजतो बृहन्तम् । आस्थाद्रथँ सविता चित्रभानुः । कृष्णा रजाँसि तविषीं दधानः । स घा नो देवः सविता सवाय । आसाविषद्वसु-पतिर्वसूनि ४०

विश्रयमाणो अमतिमुरूचीम् । मर्तभोजनमध रासते न । वि जनाञ्श्यावाः शितिपादो अख्यन् । रथँ हिरण्यप्रौगं वहन्तः । शश्वद्विशः सवितुर्दैव्यस्य । उपस्थे विश्वा भुवनानि तस्थुः । वि सुपर्णो अन्तरिक्षाण्यख्यत् । गभीरवेपा असुरः सुनीथः । क्वेदानीँ सूर्यः कश्चिकेत । कतमां द्याँ रश्मिरस्याततान ४१

भगं धियं वाजयन्तः पुरन्धिम् । नराशँसो ग्नास्पतिर्नो अव्यात् । आऽये वामस्य संगथे रयीणाम् । प्रिया देवस्य सवितुः स्याम । आ नो विश्वे अस्क्रा गमन्तु देवाः । मित्रो अर्यमा वरुणः सजोषाः । भुवन्यथा नो विश्वे वृधासः । करन्त्सुषहा विथुरं न शवः । शं नो देवा विश्वदेवा भवन्तु । शँ सरस्वती सह धीभिरस्तु ४२

शमभिषाचः शमु रातिषाचः । शं नो दिव्याः पार्थिवाः शं नो अप्याः । ये सवितुः सत्यसवस्य विश्वे । मित्रस्य व्रते वरुणस्य देवाः । ते सौभगं वीरवद्गोमदप्नः । दधातन द्रविणं चित्रमस्मे । अग्ने याहि दूत्यं वारिषेण्यः । देवाँ अच्छा ब्रह्मकृता गणेन । सरस्वतीं मरुतो अश्विनापः । यक्षि देवान्रत्नधेयाय विश्वान् ४३

द्यौः पितः पृथिवि मातरध्रुक । अग्ने भ्रातर्वसवो मृडता नः । विश्व आदित्या आदिते सजोषाः । अस्मभ्यँ शर्म बहुलं वियन्त । विश्वे देवाः शृणुतेमँ हवं मे । ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्राः । आसद्यास्मिन्बर्हिषि मादयध्वम् । आ वां मित्रावरुणा हव्यजुष्टिम् । नमसा

देवाववववसा ववृत्याम् ४४

अस्माकं ब्रह्म पृतनासु सह्या अस्माकम् । वृष्टिर्दिव्या सुपारा । युवं वस्त्राणि पीवसा वसाथे । युवोरच्छिद्रा मन्तवो ह सर्गाः । अवातिरतमनृतानि विश्वा । ऋतेन मित्रावरुणा सचेथे । तत्सु वां मित्रावरुणा महित्वम् । ईर्मा तस्थुषीरहभिर्दुदुह्रे । विश्वाः पिन्वथ स्वसरस्य धेनाः अनु वामेकः पविराववर्ति ४५

यद्बँहिष्ठं नातिविदे सुदानू ।अच्छिद्रँ शर्म भुवनस्य गोपा । ततो नो मित्रावरुणाववीष्टम् । सिषासन्तो जीगिवाँसः स्याम । आ नो मित्रावरुणा हव्यदातिम् । घृतैर्गव्यूतिमुक्षतमिडाभिः । प्रति वामत्र वरमा जनाय । पृणीतमुद्नो दिव्यस्यं चारोः । प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन ४६

आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा । इमा रुद्राय स्थिरधन्वने गिरः । क्षिप्रेषवे देवाय स्वधाम्ने । अषाढाय सहमानाय मीढुषे । तिग्मायुधाय भरता शृणोतन । त्वा दत्तेभी रुद्र शंतमेभिः । शतँ हिमा अशीय भेषजेभिः । व्यस्मद्द्वेषो वितरं व्यँहः । व्यमीवाँश्चातयस्वा विषूचीः ४७

अर्हन्बिभर्षि । मा नस्तोके । ।आ ते पितर्मरुताँ सुम्नमेतु । मा नः सूर्यस्य संदृशो युयोथाः । अभि नो वीरो अर्वति क्षमेत । प्रजायेमहि रुद्र प्रजाभिः । एवा बभ्रो वृषभ चेकितान । यथा देव न हृणीषे न हँसि । हावनश्रूर्नो रुद्रेह बोधि । बृहद्वदेम विदथे सुवीराः । परि णो रुद्रस्य हेतिः । स्तुहि श्रुतम् ।मीढुष्टमार्हन्बिभर्षि । त्वमग्ने रुद्र । आ वो राजानम् ४८

सूर्यो देवीमुषसँ रोचमाना मर्यः । न योषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि । वितन्वते प्रति भद्राय भद्रम् । भद्रा अश्वा हरितः सूर्यस्य । चित्रा एदग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः । परि द्यावापृथिवी यन्ति सद्यः । तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्या कर्तोर्विततँ

संजभार ४९

यदेदयुक्त हरितः सधस्थात् । आद्रात्री वासस्तनुते सिमस्मै । तन्मित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्द्रुशदस्य पाजः । कृष्णमन्यद्धरितः संभरन्ति । अद्या देवा उदिता सूर्यस्य । निरँहसः पिपृतान्निरवद्यात् । तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यौः ५०

दिवो रुक्म उरुचक्षा उदेति । दूर अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूताः । आयन्नर्थानि कृणवन्नपाँसि । शं नो भव चक्षसा शं नो अह्ना । शं भानुना शँ हिमा शं घृणेन । यथा शमस्मै शमसद्दुरोणे । तत्सूर्य द्रविणं धेहि चित्रम् । चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः ५१

आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्च । त्वष्टा दधत् । तन्नस्तुरीपम् । ।त्वष्टा वीरं। पिशङ्गरूपः । ।दशेमं त्वष्टुर्जनयन्त गर्भम् । अतन्द्रासो युवतयो बिभर्त्रम् । तिग्मानीकँ स्वयशसं जनेषु । विरोचमानं परि षीं नयन्ति । आविष्टयो वर्धते चारुरासु । जिह्मानामूर्ध्वः स्वयशा उपस्थे ५२

उभे त्वष्टुर्बिभ्यतुर्जायमानात् । प्रतीची सिँहं प्रतिजोषयेते । मित्रो जनान् । प्र स मित्र । ।अयं मित्रो नमस्यः सुशेवः । राजा सुक्षत्रो अजनिष्ट वेधाः । तस्य वयँ सुमतौ यज्ञियस्य अपि भद्रे सौमनसे स्याम । अनमीवासं इडया मदन्तः । मितज्ञवो वरिमन्ना पृथिव्याः । आदित्यस्य व्रतमुपक्षयन्तः ५३

वयं मित्रस्य सुमतौ स्याम । मित्रं न ईँ शिम्या गोषु गव्यवत् । स्वाधियो विदथे अप्स्वजीजनन् । अरेजयताँ रोदसी पाजसा गिरा । प्रति प्रियं यजतं जनुषामवः । महाँ आदित्यो नमसोपसद्यः । यातयज्ञनो गृणते सुशेवः । तस्मा एतत्पन्यतमाय जुष्टम् । अग्नौ मित्राय हविराजुहोत । आ वाँ रथो रोदसी बद्बधानः ५४

हिरण्ययो वृषभिर्यात्वश्वैः । घृतवर्तनिः पविभी रुचानः । इषां वोढा नृपतिर्वाजिनीवान् । स पप्रथानो अभि पञ्च भूम । त्रिवन्धुरो मनसायातु युक्तः । विशो येन गच्छथो देवयन्तीः । कुत्राचिद्यामममश्विना दधाना । स्वश्वा यशसायातमर्वाक् । दस्रा निधिं मधुमन्तं पिबाथः । वि वाँ रथो वध्वा यादमानः ५५

अन्तान्दिवो बाधते वर्तनिभ्याम् । युवोः श्रियं परि योषा वृणीत । सूरो दुहिता परितक्मियायाम् । यद्देवयन्तमवथः शचीभिः । परिघ्रँस वां मना वां वयो गाम् । यो ह स्य वाँ रथिरा वस्त उस्राः । रथो युजानः परियाति वर्तिः । तेन नः शं योरुषसो व्युष्टौ । न्यश्विना वहतं यज्ञे अस्मिन् । युवं भुज्युमवविद्धँ समुद्रे ५६

उदूहथुरर्णसो अस्त्रिधानैः । पतत्रिभिरश्रमैरव्यथिभिः । दँसनाभिरश्विना पारयन्ताम् । अग्नीषोमा यो अद्य वाम् । इदं वचः सपर्यति । तस्मै धत्तँ सुवीर्यम् । गवां पोषँ स्वश्वियं ।यो अग्नीषोमा हविषा सपर्यात् । देवद्रीचा मनसा यो घृतेन । तस्य व्रतँ रक्षतं पातमँहसः ५७

विशे जनाय महि शर्म यच्छतम् । अग्नीषोमा य आहुतिम् । यो वां दाशाद्धविष्कृतिम् । स प्रजया सुवीर्यम् । विश्वमायुर्व्यश्नवत् । अग्नीषोमा चेति तद्वीर्यं वाम् । यदमुष्णीतमवसं पणिं गोः । अवातिरतं प्रथयस्य शेषः अविन्दतंज्योतिरेकं बहुभ्यः । अग्नीषोमाविमँ सु मे । ऽग्नीषोमा हविषः प्रस्थितस्य ५८

अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो अमृतस्य नाभिः । यो मा ददाति स इदेव मावाः । अहमन्नमन्नमदन्तमद्मि । पूर्वमग्नेरपि दहत्यन्नम् । यत्तौ हासाते अहमुत्तरेषु । व्यात्तमस्य पशवः सुजम्भम् । पश्यन्ति धीराः प्रचरन्ति पाकाः । जहाम्यन्यं न जहाम्यन्यम् । अहमन्नं वशमिच्चरामि ५९

समानमर्थं पर्येमि भुञ्जत् । को मामन्नं मनुष्यो दयेत । पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गुप्तमन्नम् । यदद्यते लुप्यते यत्परोप्यते ।

शततमी सा तनूर्मे बभूव । महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकम् । तत्संपिबन्तो न मिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः ६०

अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानाम् । मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी ।अहं मेघः स्तनयन्वर्षन्नस्मि । मामदन्त्यहमद्म्यन्यान् ६१

अहँ सदमृतो भवामि । मदादित्या अधि सर्वे तपन्ति । देवीं वाचमजनयन्त । यद्वाग्वदन्ति । अनन्तामन्तादधि निर्मितां महीम् । यस्यां देवा अद-धुर्भोजनानि । एकाक्षरां द्विपदाँ षट्पदां च । वाचं देवा उपजीवन्ति विश्वे । वाचं देवा उपजीवन्ति विश्वे । वाचं गन्धर्वाः पशवो मनुष्याः । वाचीमा विश्वा भुवनान्यर्पिता ६२

सा नो हवं जुषतामिन्द्रपत्नी ।वागक्षरं प्रथमजा ऋतस्य । वेदानां मातामृतस्य नाभिः । सा नो जुषाणोऽपयज्ञमागात् । अवन्ती देवी सुहवा मे अस्तु । यामृषयो मन्त्रकृतो मनीषिणः । अन्वैच्छन्देवास्तपसा श्रमेण । तां देवीं वाचँ हविषा यजामहे । सा नो दधातु सुकृतस्य लोके । चत्वारि वाक्परि-मिता पदानि ६३

तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति । श्रद्धयाग्निः समिध्यते । श्रद्धया विन्दते हविः । श्रद्धां भगस्य मूर्धनि । वचसावेदयामसि । प्रियँ श्रद्धे ददतः । प्रियँ श्रद्धे दिदासतः । प्रियं भोजेषु यज्वसु ६४

इदं म उदितं कृधि । यथा देवा असुरेषु । श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु । अस्माकमुदितं कृधि । श्रद्धां देवा यजमानाः । वायुगोपा उपासते । श्रद्धाँ हृदय्ययाकूत्या । श्रद्धया हूयते हविः । श्रद्धां प्रातर्हवामहे ६५

श्रद्धां मध्यंदिनं परि । श्रद्धाँ सूर्यस्य निम्रुचि । श्रद्धे श्रद्धापयेह मा । श्रद्धा देवानधिवस्ते । श्रद्धा विश्वमिदं जगत् । श्रद्धां कामस्य मातरम् । हविषा वर्धयामसि । ब्रह्म जज्ञानं प्रथमं पुरस्तात् । वि सीमतः सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाः ६६

सतश्च योनिमसतश्च विवः । पिता विराजामृषभो रयीणाम् । अन्तरिक्षं विश्वरूप आविवेश । तमर्कैरभ्यर्चन्ति वत्सम् । ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः । ब्रह्म देवानजनयत् । ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना । अन्तरस्मिन्निमे लोकाः ६७

अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठम् । तेन कोऽर्हति स्पर्धितुम् । ब्रह्मन्देवास्त्रयस्त्रिँशत् । ब्रह्मन्निन्द्रप्रजापती ।ब्रह्मन्ह विश्वा भूतानि । नावीवान्तः समाहिता । चतस्र आशाः प्रचरन्त्वग्नयः । इमं नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरं सुवीरम् ६८

ब्रह्म समिद्भवत्याहुतीनाम् । आ गावो अग्मन्नुत भद्रमक्रन् । सीदन्तु गोष्ठे रणयन्त्वस्मे । प्रजावतीः पुरुरूपा इह स्युः । इन्द्राय पूर्वीरुषसो दुहानाः । इन्द्रो यज्वने पृणते च शिक्षति । उपेद्ददाति न स्वं मुषायति । भूयोभूयो रयिमिदस्य वर्धयन् । अभिन्ने खिल्ले निदधाति देवयुम् । न ता नशन्ति । न ता अर्वा ६९

गावो भगो गाव इन्द्रो मे अच्छात् । गावः सोमस्य प्रथमस्य भक्षः । इमा या गावः स जनास इन्द्रः । इच्छामीद्धृदा मनसा चिदिन्द्रम् । यूयं गावो मेदयथा कृशं चित् । अश्लीलं चित्कृणुथा सुप्रतीकम् । भद्रं गृहं कृणुथ भद्रवाचः । बृहद्वो वय उच्यते सभासु । प्रजावतीः सूयवसँ रिशन्तीः । शुद्धा अप सुप्रपाणे पिबन्तीः । मा वः स्तेन ईशत माघशँसः । परि वो हेती रुद्रस्य वृञ्ज्यात् । उपेदमुपपर्चनम् । आसु गोषूपपृच्यताम् । उपर्षभस्य रेतसि । उपेन्द्र तव वीर्ये ७०

ता सूर्याचन्द्रमसा विश्वभृत्तमा महत् । तेजो वसुमद्राजतो दिवि ।

सामात्माना चरतः सामचारिणा । ययोर्व्रतं न ममे जातु देवयोः । उभावन्तौ परियात अर्म्या । दिवो न रश्मींस्तनुतो व्यर्णवे । उभा भुवन्ती भुवना कविक्रतू ।सूर्या न चन्द्रा चरतो हतामती ।पती द्युमद्विश्वविदा उभा दिवः । सूर्या उभा चन्द्रमसा विचक्षणा ७१

विश्ववारा विरिवोभा वरेण्या । ता नोऽवतं मतिमन्ता महिव्रता । विश्ववपरी प्रतरणा तरन्ता । सुवर्विदा दृशये भूरिरश्मी ।सूर्या हि चन्द्रा वसु त्वेष दर्शता । मनस्विनोभानुचरतो नु सं दिवम् । अस्य श्रवो नद्यः सप्त बिभ्रति । द्यावाक्षामा पृथिवी दर्शतं वपुः । अस्मे सूर्याचन्द्रमसाभिचक्षे । श्रद्धे कमिन्द्र चरतो विचर्तुरम् ७२

पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्टे । ऋतूनन्यो विदधज्जायते पुनः । हिरण्यवर्णाः शुचयः पावका । यासाँ राजा । ।यासां देवाः । शिवेन मा चक्षुषा पश्यत । ।आपो भद्रा । आदित्पश्यामि । ।नासदासीन्नो सदासीत्तदानीम् । नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुह कस्य शर्मन् ७३

अम्भः किमासीद्गहनं गभीरम् । न मृत्युरमृतं तर्हि न रात्रिया अह्न आसीत्प्रकेतः । आनीदवातँ स्वधया तदेकम् । तस्माद्धान्यं न परः किं चनास । तम आसीत्तमसा गूढमग्रे प्रकेतम् । सलिलँ सर्वमा इदम् । तुच्छेनाभ्वपिहितं यदासीत् । तमसस्तन्महिनाजायतैकम् । कामस्तदग्रे समवर्तताधि ७४

मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषा । तिरश्चीनो विततो रश्मिरेषाम् । अधः स्विदासी३दुपरि स्विदासी३त् । रेतोधा आसन्महिमान आसन् । स्वधा अवस्तात्प्रयतिः परस्तात् । को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनाय ७५

अथा को वेद यत आबभूव । इयं विसृष्टिर्यत आबभूव । यदि वा दधे

यदि वा न । यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद । किँ स्विद्वनं क उ स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तत् । यदध्यतिष्ठद्भुवनानि धारयन् । ब्रह्म वनं ब्रह्म स वृक्ष आसीत् ७६

यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वः । ब्रह्माध्य-तिष्ठद्भुवनानि धारयन् । प्रातरग्निं प्रातरिन्द्रँ हवामहे । प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिम् । प्रातः सोममुत रुद्रँ हुवेम । प्रातर्जितं भगमुग्रँ हुवेम । वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चित् ७७

राजा चिद्यं भगं भक्षीत्याह । भग प्रणेतर्भग सत्यराधः । भगेमां धियमुदव ददन्नः । भग प्र णो जनय गोभिरश्वैः । भग प्र नृभिर्नृवन्तः स्याम । उतेदानीं भगवन्तः स्याम । उत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन्त्सूर्यस्य । वयं देवानाँ सुमतौ स्याम । भग एव भगवाँ अस्तु देवाः ७८

तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्ञोहवीमि । स नो भग पुर एता भवेह । समध्वरायोषसो नमन्त । दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नः । रथमिवाश्वा वाजिन आवहन्तु । अश्वावतीर्गोमतीर्न उषासः । वीरवतीः सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः । यूयं पात स्वस्तिभिः सदा नः ७९ ८

अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासं जुहोतन । यस्य भान्ति रश्मयो यस्य केतवः । यस्येमा विश्वा भुवनानि सर्वा । स कृत्तिकाभिरभि संवसानः । अग्निर्नो देवः सुविते दधातु । प्रजापते रोहिणी वेतु पत्नी ।विश्वरूपा बृहती चित्रभानुः १

सा नो यज्ञस्य सुविते दधातु । यथा जीवेम शरदः सवीराः । रोहिणी देव्युदगात्पुरस्तात् । विश्वा रूपाणि प्रतिमोदमाना । प्रजापतिँ हविषा वर्धयन्ती ।प्रिया देवानामुपयातु यज्ञम् । सोमो राजा मृगशीर्षेण आगन्न् ।

शिवं नक्षत्रं प्रियमस्य धाम । आप्यायमानो बहुधा जनेषु । रेतः प्रजां यजमाने दधातु २

यत्ते नक्षत्रं मृगशीर्षमस्ति । प्रियँ राजन्प्रियतमं प्रियाणाम् । तस्मै ते सोम हविषा विधेम । शं न एधि द्विपदे शं चतुष्पदे । आर्द्रया रुद्रः प्रथमान एति । श्रेष्ठो देवानां पतिरघ्नियानाम् । नक्षत्रमस्य हविषा विधेम । मा नः प्रजाँ रीरिषन्मोत वीरान् । हेती रुद्रस्य परि णो वृणक्तु । आर्द्रा नक्षत्रं जुषताँ हविर्नः ३

प्रमुञ्चमानौ दुरितानि विश्वा । अपाघशँसं नुदतामरातिम् । पुनर्नो देव्यदितिः स्पृणोतु । पुनर्वसू नः पुनरेतां यज्ञम् । पुनर्नो देवा अभियन्तु सर्वे । पुनःपुनर्वो हविषा यजामः । एवा न देव्यदितिरनर्वा । विश्वस्य भर्त्री जगतः प्रतिष्ठा । पुनर्वसू हविषा वर्धयन्ती ।प्रियं देवानामप्येतु पाथः ४

बृहस्पतिः प्रथमं जायमानः । तिष्यं नक्षत्रमभि संबभूव । श्रेष्ठो देवानां पृतनासु जिष्णुः । दिशोऽनु सर्वा अभयं नो अस्तु । तिष्यः पुरस्तादुत मध्यतो नः । बृहस्पतिर्नः परिपातु पश्चात् । बाधेतां द्वेषो अभयं कृणुताम् । सुवीर्यस्य पतयः स्याम । इदँ सर्पेभ्यो हविरस्तु जुष्टम् । आश्रेषा येषामनुयन्ति चेतः ५

ये अन्तरिक्षं पृथिवीं क्षियन्ति । ते नः सर्पासो हवमागमिष्ठाः । ये रोचने सूर्यस्यापि सर्पाः । ये दिवं देवीमनु संचरन्ति । येषामाश्रेषा अनुयन्ति कामम् । तेभ्यः सर्पेभ्यो मधुमज्जुहोमि । उपहूताः पितरो ये मघासु । मनोजवसः सुकृतः सुकृत्याः । ते नो नक्षत्रे हवमागमिष्ठाः । स्वधाभिर्यज्ञं प्रयतं जुषन्ताम् ६

ये अग्निदग्धा येऽनाग्निदग्धाः । येऽमुं लोकं पितरः क्षियन्ति । याँश्च विद्म याँ उ च न प्रविद्म । मघासु यज्ञँ सुकृतं जुषन्ताम् । गवां पतिः फल्गुनीनामसि त्वम् । तदर्यमन्वरुण मित्र चारु । तं त्वा वयँ सनितारँ सनीनाम् । जीवा जीवन्तमुप संविशेम । येनेमा विश्वा भुवनानि संजिता । यस्य देवा

अनुसंयन्ति चेतः ७

अर्यमा राजाजरस्तुविष्मान् । फल्गुनीनामृषभो रोरवीति । श्रेष्ठो देवानां भगवो भगासि । तत्त्वा विदुः फलुगुनीस्तस्य वित्तात् । अस्मभ्यं क्षत्रमजरँ सुवीर्यम् । गोमदश्ववदुप संनुदेह । भगो ह दाता भग इत्प्रदाता । भगो देवीः फल्गुनीराविवेश । भगस्येत्तं प्रसवं गमेम । यत्र देवैः सधमादं मदेम ८

आयातु देवः सवितोपयातु । हिरण्ययेन सुवृता रथेन । वहन्हस्तँ सुभगं विद्मनापसम् । प्रयच्छन्तं पपुरिं पुण्यमच्छ । हस्तः प्रयच्छत्वमृतं वसीयः । दक्षिणेन प्रतिगृभ्णीम एनत् । दातारमद्य सविता विदेय । यो नो हस्ताय प्रसुवाति यज्ञम् । त्वष्टा नक्षत्रमभ्येति चित्राम् । सुभँससं युवतिँ रोचमानाम् ९

निवेशयन्नमृतान्मर्त्यांश्च । रूपाणि पिँशन्भुवनानि विश्वा । तन्नस्त्वष्टा तदु चित्रा विचष्टाम् । तन्नक्षत्रं भूरिदा अस्तु मह्यम् । तन्नः प्रजां वीरवतीँ सनोतु । गोभिर्नो अश्वैः समनक्तु यज्ञम् । वायुर्नक्षत्रमभ्येति निष्ट्याम् । तिग्मशृङ्गो वृषभो रोरुवाणः । समीरयन्भुवना मातरिश्वा । अप द्वेषाँसि नुदतामरातीः १०

तन्नो वायुस्तदु निष्ट्या शृणोतु । तन्नक्षत्रं भूरिदा अस्तु मह्यम् । तन्नो देवासो अनुजानन्तु कामम् । यथा तरेम दुरितानि विश्वा । दूरमस्मच्छत्रवो यन्तु भीताः । तदिन्द्राग्नी कृणुतां तद्विशाखे । तन्नो देवा अनुमदन्तु यज्ञम् । पश्चात्पुरस्तादभयं नो अस्तु । नक्षत्राणामधिपत्नी विशाखे । श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ ११

विषूचः शत्रूनपबाधमानौ । अप क्षुधं नुदतामरातिम् । पूर्णा पश्चादुत पूर्णा पुरस्तात् । उन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्तः । उत्तमे नाक इह मादयन्ताम् । पृथ्वी सुवर्चा युवतिः सजोषाः । पौर्णमास्युदगाच्छोभमाना । आप्याययन्ती दुरितानि विश्वा । उरुं दुहां

यजमानाय यज्ञम् १२

ऋध्यास्म हव्यैर्नमसोपसद्य । मित्रं देवं मित्रधेयं नो ग्रस्तु । ग्रनूराधान्हविषा वर्धयन्तः । शतं जीवेम शरदः सवीराः । चित्रं नक्षत्रमुदगात्पुरस्तात् । ग्रनूराधास इति यद्वदन्ति । तन्मित्र एति पथिभिर्देवयानैः । हिरगयैर्विततैरन्तरिक्षे । इन्द्रो ज्येष्ठामनु नक्षत्रमेति । यस्मिन्वृत्रं वृत्रतूर्ये ततार १३

तस्मिन्वयममृतं दुहानाः । क्षुधं तरेम दुरितिं दुरिष्टिम् । पुरन्दराय वृषभाय धृष्णवे । ग्रषाढाय सहमानाय मीढुषे । इन्द्राय ज्येष्ठा मधुमद्दुहाना । उरुं कृणोतु यजमानाय लोकम् । मूलं प्रजां वीरवतीं विदेय । पराच्येतु निर्ऋतिः पराचा । गोभिर्नक्षत्रं पशुभिः समक्तम् । ग्रहर्भूयाद्यजमानाय मह्यम् १४

ग्रहर्नो ग्रद्य सुविते दधातु । मूलं नक्षत्रमिति यद्वदन्ति । पराचीं वाचा निर्ऋतिं नुदामि । शिवं प्रजायै शिवमस्तु मह्यम् । या दिव्या ग्रापः पयसा संबभूवुः । या ग्रन्तरिक्ष उत पार्थिवीर्याः । यासामषाढा ग्रनुयन्ति कामम् । ता न ग्रापः शँ स्योना भवन्तु । याश्च कूप्या याश्च नाद्याः समुद्रियाः । याश्च वैशन्तीरुत प्रासचीर्याः १५

यासामषाढा मधु भक्षयन्ति । ता न ग्रापः शँ स्योना भवन्तु । तन्नो विश्वे उपशृगवन्तु देवाः । तदषाढा ग्रभि संयन्तु यज्ञम् । तन्नक्षत्रं प्रथतां पशुभ्यः । कृषिर्वृष्टिर्यजमानाय कल्पताम् । शुभ्राः कन्या युवतयः सुपेशसः । कर्मकृतः सुकृतो वीर्यावतीः । विश्वान्देवान्हविषा वर्धयन्तीः । ग्रषाढाः काममुपयान्तु यज्ञम् १६

यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् । ग्रमुं च लोकमिदमू च सर्वम् । तन्नो नक्षत्रमभिजिद्विजित्य । श्रियं दधात्वहृणीयमानम् । उभौ लोकौ ब्रह्मणा संजितेमौ । तन्नो नक्षत्रमभिजिद्विचष्टाम् । तस्मिन्वयं पृतनाः संजयेम । तं नो देवासो ग्रनुजानन्तु कामम् । शृगवन्ति श्रोणाममृतस्य गोपाम् । पुरायामस्या उपशृणोमि वाचम् १७

महीं देवीं विष्णुपत्नीमजूर्याम् । प्रतीचीमेनाँ हविषा यजामः । त्रेधा विष्णुरुरुगायो विचक्रमे । महीं दिवं पृथिवीमन्तरिक्षम् । तच्छ्रोणैति श्रव इच्छमाना । पुण्यँ श्लोकं यजमानाय कृण्वती ।अष्टौ देवा वसवः सोम्यासः । चतस्रो देवीरजराः श्रविष्ठाः । ते यज्ञं पान्तु रजसः परस्तात् । संवत्सरीणममृतँ स्वस्ति १८

यज्ञं नः पान्तु वसवः पुरस्तात् । दक्षिणतोऽभियन्तु श्रविष्ठाः । पुण्यं नक्षत्रमभि संविशाम । मा नो अरातिरघशँसागन्न् । क्षत्रस्य राजा वरुणोऽधिराजः । नक्षत्राणाँ शतभिषग्वसिष्ठः । तौ देवेभ्यः कृणुतो दीर्घमायुः । शतँ सहस्रा भेषजानि धत्तः । यज्ञं नो राजा वरुण उपयातु । तन्नो विश्वे अभि संयन्तु देवाः १९

तन्नो नक्षत्रँ शतभिषग्जुषाणम् । दीर्घमायुः प्रतिरद्भेषजानि । अज एकपादुदगात्पुरस्तात् । विश्वा भूतानि प्रतिमोदमानः । तस्य देवाः प्रसवं यन्ति सर्वे । प्रोष्ठपदासो अमृतस्य गोपाः । विभ्राजमानः समिधान उग्रः । आन्तरिक्षमरुहदगं द्याम् । तँ सूर्यं देवमजमेकपादम् । प्रोष्ठपदासो अनुयन्ति सर्वे २०

अहिर्बुध्नियः प्रथमान एति । श्रेष्ठो देवानामुत मानुषाणाम् । तं ब्राह्मणाः सोमपाः सोम्यासः । प्रोष्ठपदासो अभिरक्षन्ति सर्वे । चत्वार एकमभि कर्म देवाः । प्रोष्ठपदास इति यान्वदन्ति । ते बुध्नियं परिषद्यँ स्तुवन्तः । अहिँ रक्षन्ति नमसापसद्य । पूषा रेवत्यन्वेति पन्थाम् । पुष्टिपती पशुपा वाजबस्त्यौ २१

इमानि हव्या प्रयता जुषाणा । सुगैर्नो यानैरुपयातां यज्ञम् । क्षुद्रान्पशून्रक्षतु रेवती नः । गावो नो अश्वाँ अन्वेतु पूषा । अन्नँ रक्षन्तौ बहुधा विरूपम् । वाजँ सनुतां यजमानाय यज्ञम् । तदश्विनावश्वयुजोपयाताम् । शुभं गमिष्ठौ सुयमेभिरश्वैः । स्वं नक्षत्रँ हविषा यजन्तौ । मध्वा संपृक्तौ यजुषा समक्तौ २२

यौ देवानां भिषजौ हव्यवाहौ । विश्वस्य दूतावमृतस्य गोपौ । तौ नक्षत्रं जुजुषाणोपयाताम् । नमोऽश्विभ्यां कृणुमोऽश्वयुग्भ्याम् । अप पाप्मानं भरणीर्भरन्तु । तद्यमो राजा भगवान्विचष्टाम् । लोकस्य राजा महतो महान्हि । सुगं नः पन्थामभयं कृणोतु । यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेनमभ्यषिञ्चन्त देवाः । तदस्य चित्रँ हविषा यजाम । अप पाप्मानं भरणीर्भरन्तु । निवेशनी यत्ते देवा अदधुः २३

नवोनवो भवति जायमानो यमादित्या अँशुमाप्याययन्ति । ये विरूपे समनसा संव्ययन्ती ।समानं तन्तुं परि तातनाते । विभू प्रभू अनुभू विश्वतो हुवे । ते नो नक्षत्रे हवमागमेतम् । वयं देवी ब्रह्मणा संविदानाः । सुरत्नासो देववीतिं दधानाः । अहोरात्रे हविषा वर्धयन्तः । अति पाप्मानमतिमुक्त्या गमेम । प्रत्युवदृश्यायती २४

व्युच्छन्ती दुहिता दिवः । अपो मही वृणुते चक्षुषा । तमो ज्योतिष्कृणोति सूनरी ।उदुस्त्रियाः सचते सूर्यः । सचा उद्यन्नक्षत्रमर्चिमत् । तवेदुषो व्युषि सूर्यस्य च । सं भक्तेन गमेमहि । तन्नो नक्षत्रमर्चिमत् । भानुमत्तेज उच्चरत् । उप यज्ञमिहागमत् २५

प्र नक्षत्राय देवाय । इन्द्रायेन्दुँ हवामहे । स नः सविता सुवत्सनिम् । पुष्टिदां वीरवत्तमम् । उदु त्यं चित्रम् । अदितिर्न उरुष्यतु महीमू षु मातरम् । इदं विष्णुः प्र तद्विष्णुः । अग्निर्मूर्धा । भुवः । अनु नोऽद्यानुमतिरन्विदनुमते त्वम् । हव्यवाहँ स्विष्टम् २६

अग्निर्वा अकामयत । अन्नादो देवानाँ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् । ततो वै सोऽन्नादो देवानामभवत् । अग्निर्वै देवानामन्नादः । यथा ह वा अग्निर्देवनामन्नादः । एवँ ह वा एष मनुष्याणां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा । अम्बायै स्वाहा दुलायै स्वाहा । नितत्न्यै स्वाहाभ्रयन्त्यै स्वाहा । मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहेति २७

प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन्न् । तासाँ रोहिणीमभ्यध्यायत् । सोऽकामयत । उप मावर्तेत ।समेनया गच्छेयेति । स एतं प्रजापतये रोहिण्यै चरुं निरवपत् । ततो वै सा तमुपावर्तत । समेनयागच्छत । उप ह वा एनं प्रियमावर्तते । सं प्रियेण गच्छते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा रोहिण्यै स्वाहा रोचमानायै स्वाहा प्रजाभ्यः स्वाहेति २८

सोमो वा अकामयत । ओषधीनाँ राज्यमभिजयेयमिति । स एतँ सोमाय मृगशीर्षाय श्यामाकं चरुं पयसि निरवपत् । ततो वै स ओषधीनाँ राज्यमभ्यजयत् । समानानाँ ह वै राज्यमभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सोमाय स्वाहा मृगशीर्षाय स्वाहा । इन्वकाभ्यः स्वाहौषधीभ्यः स्वाहा । राज्याय स्वाहाभिजित्यै स्वाहेति २९

रुद्रो वा अकामयत । पशुमान्त्स्यामिति । स एतँ रुद्रायार्द्रायै प्रैयंगवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । पशुमान्ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । रुद्राय स्वाहार्द्रायै स्वाहा । पिन्वमानायै स्वाहा पशुभ्यः स्वाहेति ३०

ऋक्षा वा इयमलोमकासीत् । साकामयत । ओषधीभिर्वनस्पतिभिः प्रजायेयेति । सैतमदित्यै पुनर्वसुभ्यां चरुं निरवपत् । ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत । प्रजायते ह वै प्रजया पशुभिः । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति अदित्यै स्वाहा पुनर्वसुभ्याम्स्वाहाभूत्यै स्वाहा प्रजात्यै स्वाहेति ३१

बृहस्पतिर्वा अकामयत । ब्रह्मवर्चसी स्यामिति । स एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत् । ततो वै स ब्रह्मवर्चस्यभवत् । ब्रह्मवर्चसी ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । बृहस्पतये स्वाहा तिष्याय स्वहा । ब्रह्मवर्चसाय स्वाहेति ३२

देवासुराः संयत्ता आसन्न् । ते देवाः सर्पेभ्य आश्रेषाभ्य आज्ये करम्भं निरवपन्न् । तनेताभिरेव देवताभिरुपानयन् । एताभिर्ह वै देवताभिर्द्विषन्तं भ्रा-तृव्यमुपनयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सर्पेभ्यः स्वाहा श्रेषाभ्यः स्वाहा । दन्दशूकेभ्यः स्वाहेति ३३

पितरो वा अकामयन्त । पितृलोक ऋध्नुयामेति । त एतं पितृभ्यो मघाभ्यः पुरोडाशँ षट्कपालं निरवपन्न् । ततो वै ते पितृलोक आर्ध्नुवन् । पितृलोके ह वा ऋध्नोति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । पितृभ्यः स्वाहा मघाभ्यः स्वाहानघाभ्यः स्वाहागदाभ्यः स्वाहा-रुन्धतीभ्यः स्वाहेति ३४

अर्यमा वा अकामयत । पशुमान्त्स्यामिति । स एतमर्यम्णे फल्गुनीभ्यां चरुं निरवपत् । ततो वै स पशुमानभवत् । पशुमान्ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अर्यम्णे स्वाहा फल्गुनीभ्याँ स्वाहा । पशुभ्यः स्वाहेति ३५

भगो वा अकामयत । भगी श्रेष्ठी देवानाँ स्यामिति । स एतं भगाय फल्गुनीभ्यां चरुं निरवपत् । ततो वै स भगी श्रेष्ठी देवानामभवत् । भगी ह वै श्रेष्ठी समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । भगाय स्वाहा फल्गुनीभ्याँ स्वाहा । श्रैष्ठ्याय स्वाहेति ३६

सविता वा अकामयत श्रन्मे देवा दधीरन्न् । सविता स्यामिति । स एतँ सवित्रे हस्ताय पुरोडाशं द्वादशकपालं निरवपदाशूनां व्रीहीणाम् । ततो वै तस्मै श्रद्देवा अदधत । सविताभवत् । श्रद्ध वा अस्मै मनुष्या दधते । सविता समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सवित्रे स्वाहा हस्ताय स्वाहा ददते स्वाहा पृणते स्वाहा प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहेति ३७

त्वष्टा वा अकामयत । चित्रं प्रजां विन्देयेति । स एतं त्वष्ट्रे चित्रायै

पुरोडाशमष्टाकपालं निरवपत् । ततो वै स चित्रं प्रजामविन्दत । चित्रँ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । त्वष्ट्रे स्वाहा चित्रायै स्वाहा । चैत्राय स्वाहा प्रजायै स्वाहेति ३८

वायुर्वा अकामयत । कामचारमेषु लोकेष्वभिजयेयमिति । स एतद्वायवे निष्ट्यायै गृष्ट्यै दुग्धं पयो निरवपत् । ततो वै स कामचारमेषु लोकेष्व-भ्यजयत् । कामचारँ ह वा एषु लोकेष्वभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वायवे स्वाहा निष्ट्यायै स्वाहा । कामचाराय स्वाहाभिजित्यै स्वाहेति ३९

इन्द्राग्नी वा अकामयेताम् । श्रैष्ठ्यं देवानामभिजयेवेति । तावेतमिन्द्राग्निभ्यां विशाखाभ्यां पुरोडाशमेकादशकपालं निरवपताम्ततो वै तौ श्रैष्ठ्यं देवानामभ्यजयताम् । श्रैष्ठ्यँ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राग्निभ्याँ स्वाहा विशाखाभ्याँ स्वाहा । श्रैष्ठ्याय स्वाहाभिजित्यै स्वाहेति ४०

अथैतत्पौर्णमास्या आज्यं निर्वपति । कामो वै पौर्नमासी ।काम आज्यम् । कामेनैव कामँ समर्धयति । क्षिप्रमेनँ स काम उपनमति । येन कामेन यजते । सोऽत्र जुहोति । पौर्णमास्यै स्वाहा कामाय स्वाहागत्यै स्वाहेति ४१

मित्रो वा अकामयत । मित्रधेयमेषु लोकेष्वभिजयेयमिति । स एतं मित्रायानूराधेभ्यश्चरुं निरवपत् । ततो वै स मित्रधेयमेषु लोकेष्वभ्यजयत् । मित्रधेयँ ह वा एषु लोकेष्वभिजयति । य एतेन हविषा यजते । य उ चैन-देवं वेद । सोऽत्र जुहोति । मित्राय स्वाहानूराधेभ्यः स्वाहा । मित्रधेयाय स्वाहाभिजित्यै स्वाहेति ४२

इन्द्रो वा अकामयत । ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं

देवानामभ्यजयत् । ज्यैष्ठ्यँ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राय स्वाहा ज्येष्ठायै स्वाहा ज्यैष्ठ्याय स्वाहाभिजित्यै स्वाहेति ४३

प्रजापतिर्वा अकामयत । मूलं प्रजां विन्देयेति । स एतं प्रजापतये मूलाय चरुं निरवपत् । ततो वै स मूलं प्रजामविन्दत । मूलँ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहेति ४४

आपो वा अकामयन्त । समुद्रं काममभिजयेमेति । ता एतमद्भ्योऽषाढाभ्यश्चरुं निरवपन्न् । ततो वै ताः समुद्रं काममभ्यजयन् । समुद्रँ ह वै काममभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अद्भ्यः स्वाआषाढाभ्यः स्वाहा । समुद्राय स्वाहा कामाय स्वाहा । अभिजित्यै स्वाहेति ४५

विश्वे वै देवा अकामयन्त । अनपजय्यं जयेमेति । त एतं विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुं निरवपन् । ततो वै तेऽनपजय्यमजयन्न् । अनपजय्यँ ह वै जयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । विश्वेभ्यो देवेभ्यः स्वाहाषाढाभ्यः स्वाहा । अनपजय्याय स्वाहा जित्यै स्वाहेति ४६

ब्रह्म वा अकामयत । ब्रह्मलोकमभिजयेयमिति । तदेतं ब्रह्मणेऽभिजिते चरुं निरवपत् । ततो वै तद्ब्रह्मलोकमभ्यजयत् । ब्रह्मलोकँ ह वा अभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । ब्रह्मणे स्वाहाभिजिते स्वाहा । ब्रह्मलोकाय स्वाहाभिजित्यै स्वाहेति ४७

विष्णुर्वा अकामयत । पुण्यँ श्लोकँ शृण्वीय । न मा पापी कीर्तिरागच्छेदिति । स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत् । ततो वै स पुण्यँ श्लोकमशृणुत । नैनं पापी कीर्तिरागच्छत् । पुण्यँ ह वै श्लोकँ शृणुते । नैनं पापी कीर्तिरागच्छति । य एतेन हविषा यजते । य उ चैनदेवं वेद ।

सोऽत्र जुहोति । विष्णवे स्वाहा श्रोणायै स्वाहा । श्लोकाय स्वाहा श्रुताय स्वाहेति ४८

वसवो वा अकामयन्त । अग्रं देवतानां परीयामेति । त एतं वसुभ्यः श्रविष्ठाभ्यः पुरोडाशमष्टाकपालं निरवपन् । ततो वै तेऽग्रं देवतानां पर्यायन् । अग्रँ ह वै समानानां पर्येति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वसुभ्यः स्वाहा श्रविष्ठाभ्यः स्वाहा । अग्राय स्वाहा परीत्यै स्वाहेति ४९

इन्द्रो वा अकामयत । दृढोऽशिथिलः स्यामिति । स एतं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत्कृष्णानां व्रीहीणाम् । ततो वै स दृढोऽशिथिलोऽभवत् । दृढो ह वा अशिथिलो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वरुणाय स्वाहा शतभिषजे स्वाहा । भेषजेभ्यः स्वाहेति ५०

अजो वा एकपादकामयत । तेजस्वी ब्रह्मवर्चसी स्यामिति । स एतमजायैकपदे प्रोष्ठपदेभ्यश्चरुं निरवपत् । ततो वै स तेजस्वी ब्रह्मवर्चस्यभवत् । तेजस्वी ह वै ब्रह्मवर्चसी भवति । य एतेन हविषा यजते । य उ चैन-देवं वेद । सोऽत्र जुहोति । अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा । तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहेति ५१

अहिर्वै बुध्नियोऽकामयत । इमां प्रतिष्ठां विन्देयेति । स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं भूमिकपालं निरवपत् । ततो वै स इमां प्रतिष्ठामविन्दत । इमाँ ह वै प्रतिष्ठां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा । प्रतिष्ठायै स्वाहेति ५२

पूषा वा अकामयत । पशुमान्त्स्यामिति । स एतं पूष्णे रेवत्यै चरुं निरवपत् । ततो वै स पशुमानभवत् । पशुमान्ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । पूष्णे स्वाहा रेवत्यै स्वाहा ।

पशुभ्यः स्वाहेति ५३

अश्विनौ वा अकामयेताम् । श्रोत्रस्विनावबधिरौ स्यावेति । तवेतमश्विभ्यामश्वयुग्भ्यां पुरोडाशं द्विकपालं निरवपताम् । ततो वै तौ श्रोत्रस्विनावबधिरावभवताम् । श्रोत्रस्वी ह वा अबधिरो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अश्विभ्याँ स्वाहाश्वयुग्भ्याँ स्वाहा । श्रोत्राय स्वाहा श्रुत्यै स्वाहेति ५४

यमो वा अकामयत । पितॄणाँ राज्यमभिजयेयमिति । स एतं यमायापभरणीभ्यश्चरुं निरवपत् । ततो वै स पितॄणाँ राज्यमभ्यजयत् । समानानाँ ह वै राज्यमभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । यमाय स्वाहापभरणीभ्यः स्वाहा । राज्याय स्वाहाभिजित्यै स्वाहेति ५५

अथैतदमावास्याया आज्यं निर्वपति । कामो वा अमावास्या । काम आज्यम् । कामेनैव कामँ समर्धयति । क्षिप्रमेनँ स काम उपनमति । येन कामेन यजते । सोऽत्र जुहोति । अमावास्यायै स्वाहा कामाय स्वाहागत्यै स्वाहेति ५६

चन्द्रमा वा अकामयत । अहोरात्रानर्धमासान्मासानृतून्त्संवत्सरमाप्त्वा । चन्द्रमसः सायुज्यँ सलोकतामाप्नुयामिति । स एतं चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालं निरवपत् । ततो वै सोऽहोरात्रानर्धमासान्मासानृतून्त्संवत्सरमाप्त्वा । चन्द्रमसः सायुज्यँ सलोकतामाप्नोत् । अहोरात्रान्ह वा अर्धमासान्मासानृतून्त्संवत्सरमाप्त्वा । चन्द्रमसः सायुज्यँ सलोकतामाप्नोति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । चन्द्रमसे स्वाहा प्रतीदृश्यायै स्वाहा । अहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा । मासेभ्यः स्वाहर्तुभ्यः स्वाहा । संवत्सराय स्वाहेति ५७

अहोरात्रे वा अकामयेताम् । अत्यहोरात्रे मुच्येवहि । न नावहोरात्रे

आप्नुयातामिति । ते एतमहोरात्राभ्यां चरुं निरवपताम् । द्व्यानां व्रीहीणाम् । शुक्लानां च कृष्णानां च । सवात्योर्दुग्धे । श्वेतायै च कृष्णायै च । ततो वै ते अत्यहोरात्रे अमुच्येते । नैने अहोरात्रे आप्नुताम् । अति ह वा अहोरात्रे मुच्यते । नैनमहोरात्रे आप्नुतः । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अह्ने स्वाहा रात्रियै स्वाहा । अतिमुक्त्यै स्वाहेति ५८

उषा वा अकामयत । प्रियादित्यस्य सुभगा स्यामिति । सैतमुषसे चरुं निरवपत् । ततो वै सा प्रियादित्यस्य सुभगाभवत् । प्रियो ह वै समानानाँ सुभगो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । उषसे स्वाहा व्युष्टचै स्वाहा । व्यूषुष्यै स्वाहा व्युच्छन्त्यै स्वाहा । व्युष्टायै स्वाहेति ५९

अथैतस्मै नक्षत्राय चरुं निर्वपति । यथा त्वं देवानामसि । एवमहं मनुष्याणां भूयासमिति । यथा ह वा एतद्देवानाम् । एवँ ह वा एष मनुष्याणां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । नक्षत्राय स्वाहोदेष्यते स्वाहा । उद्यते स्वाहोदिताय स्वाहा । हरसे स्वाहा भरसे स्वाहा । भ्राजसे स्वाहा तेजसे स्वाहा । तपसे स्वाहा ब्रह्मवर्चसाय स्वाहेति ६०

सूर्यो वा अकामयत । नक्षत्राणां प्रतिष्ठा स्यामिति । स एतँ सूर्याय नक्षत्रेभ्यश्चरुं निरवपत् । ततो वै स नक्षत्राणां प्रतिष्ठाभवत् । प्रतिष्ठा ह वै समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सूर्याय स्वाहा नक्षत्रेभ्यः स्वाहा । प्रतिष्ठायै स्वाहेति ६१

अथैतमदित्यै चरुं निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । सोऽत्र जुहोति । अदित्यै स्वाहा प्रतिष्ठायै स्वाहेति ६२

अथैतं विष्णवे चरुं निर्वपति । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति । सोऽत्र जुहोति । विष्णवे स्वाहा यज्ञाय स्वाहा । प्रतिष्ठायै स्वाहेति ६३

१

तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् । ब्रह्म वै पर्णः । यत्पर्णशाखया वत्सानपाकरोति । ब्रह्मणैवैनानपाकरोति । गायत्रो वै पर्णः । गायत्राः पशवः १

तस्मात्त्रीणित्रीणि पर्णस्य पलाशानि । त्रिपदा गायत्री ।यत्पर्णशखया गाः प्रार्पयति । स्वयैवैना देवतया प्रार्पयति । यं कामयेतापशुः स्यादिति । अपर्णां तस्मै शुष्काग्रामाहरेत् । अपशुरेव भवति । यं कामयेत पशुमान्त्स्यादिति । बहुपर्णां तस्मै बहुशाखामाहरेत् । पशुमन्तमेवैनं करोति २

यत्प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीं मनुष्यलोकम् । प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै । इषे त्वोर्जे त्वेत्याह । इषमेवोर्जं यजमाने दधाति । वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः ३

वायव एवैनान्परिददाति । प्र वा एनानेतदाकरोति । यदाह । वायवः स्थेत्युपायवः स्थेत्याह । यजमानायैव पशूनुपह्वयते । देवो वः सविता प्रार्पयत्वित्याह प्रसूत्यै । श्रेष्ठतमाय कर्मण इत्याह । यज्ञो हि श्रेष्ठतमं कर्म । तस्मादेवमाह । आप्यायध्वमघ्निया देवभागमित्याह ४

वत्सेभ्यश्च वा एताः पुरा मौष्येभ्यश्चाप्यायन्त । देवेभ्य एवैना इन्द्रायाप्यायति । ऊर्जस्वतीः पयस्वतीरित्याह । ऊर्जँ हि पयः संभरन्ति । प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै । मा वः स्तेन ईशत माघशँस इत्याह गुप्त्यै । रुद्रस्य हेतिः परि वो वृणक्त्वित्याह । रुद्रादेवैनास्त्रायते । ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरित्याह । ध्रुवा एवास्मिन्बह्वीः करोति ५

यजमानस्य पशून्पाहीत्याह । पशुनां गोपीथाय । तस्मात्सायं पशव उप

समावर्तन्ते । अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै ६

देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । यो वा ओषधीः पर्वशो वेद । नैनाः स हिनस्ति । प्रजापतिर्वा ओषधीः पर्वशो वेद । स एना न हिनस्ति अश्वपर्श्वा बर्हिरच्छैति । प्राजापत्यो वा अश्वः सयोनित्वाय ७

ओषधीनामहिँसायै । यज्ञस्य घोषदसीत्याह । यजमान एव रयिं दधाति । प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । प्रेयमगाद्धिषणा बर्हिरच्छेत्याह । विद्या वै धिषणा । विद्ययैवैनदच्छैति । मनुना कृता स्वधया वितष्टेत्याह । मानवी हि पर्शुः स्वधाकृता ८

त आवहन्ति कवयः पुरस्तादित्याह । शुश्रुवाँसो वै कवयः । यज्ञः पुरस्तात् । मुखत एव यज्ञमारभते । अथो यदेतदुक्त्वा यतः कुतश्चाहरति । तत्प्राच्या एव दिशो भवति । देवेभ्यो जुष्टमिह बर्हिरासद इत्याह । बर्हिषः समृद्ध्यै । कर्मणोऽनपराधाय । देवानां परिषूतमसीत्याह ९

यद्वा इदं किं च । तद्देवानां परिषूतम् । अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति । एवमेव तदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति । आत्मनोऽहिँसायै । यावतः स्तम्बान्परिदिशेत् । यत्तेषामुच्छिँष्यात् । अति तद्यज्ञस्य रेचयेत् । एकँ स्तम्बं परिदिशेत् । तँ सर्वं दायात् १०

यज्ञस्यानतिरेकाय । वर्षवृद्धमसीत्याह । वर्षवृद्धा वा ओषधयः । देवबर्हिरित्याह । देवेभ्य एवैनत्करोति । मा त्वान्वङ्क्तिर्यगित्याहाहिँसायै । पर्व ते राध्यासमित्याहर्ध्यै । आच्छेत्ता ते मा रिषमित्याह । नास्यात्मनो मीयते । य एवं वेद ११

देव बर्हिश्शतवल्शं विरोहेत्याह । प्रजा वै बर्हिः । प्रजानां प्रजननाय । सहस्रवल्शा वि वयँ रुहेमेत्याह । आशिषमेवैतामाशास्ते । पृथिव्याः संपृचः पाहीत्याह प्रतिष्ठित्यै । अयुं गायुं गान्मुष्टीँल्लुनोति । मिथुनत्वाय प्रजात्यै । सुसंभृता त्वा संभरामीत्याह । ब्रह्मणैवैनत्संभरति १२

अदित्यै रास्नासीत्याह । इयं वा अदितिः । अस्या एवैनद्रास्नां करोति । इन्द्राण्यै संनहनमित्याह । इन्द्राणी वा अग्रे देवतानाँ समनह्यत । सार्ध्नोत् । ऋद्ध्यै संनह्यति । प्रजा वै बर्हिः । प्रजानामपरावापाय । तस्मात्स्नावसंतताः प्रजा जायन्ते १३

पूषा ते ग्रन्थिं ग्रथ्नात्वित्याह । पुष्टिमेव यजमाने दधाति । स ते मा स्थादित्याहाहिँसायै । पश्चात्प्राञ्चमुपगूहति । पश्चाद्धि प्राचीनँ रेतो धीयते । पश्चादेवास्मै प्राचीनँ रेतो दधाति । इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्याह । इन्द्रियमेव यजमाने दधाति । बृहस्पतेर्मूर्ध्ना हरामीत्याह । ब्रह्म वै देवानां बृहस्पतिः १४

ब्रह्मणैवैनद्धरति । उर्वन्तरिक्षमन्विहीत्याह गत्यै । देवंगममसीत्याह । देवानेवैनद्गमयति । अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै १५

पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवारभ्य गृहीत्वोपवसति । प्रजापतिर्यज्ञमसृजत । तस्योखे अस्रँसेताम् । यज्ञो वै प्रजापतिः । यत्सांनाय्योखे भवतः । यज्ञस्यैव तदुखे उपदधात्यप्रस्रँसाय । शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्याया एवैनानि शुन्धति । मातरिश्वनो घर्मोऽसीत्याह १६

अन्तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानं विधृत्यै । द्यौरसि पृथिव्यसीत्याह । दिवश्च ह्येषा पृथिव्याश्च संभृता । यदुखा । तस्मादेवमाह । विश्वधाया असि परमेण धाम्नेत्याह । वृष्टिर्वै विश्वधायाः । वृष्टिमेवावरुन्धे

। दृँहस्व मा ह्वारित्याह धृत्यै १७

वसूनां पवित्रमसीत्याह । प्राणा वै वसवः । तेषां वा एतद्भागधेयम् । यत्पवित्रम् । तेभ्य एवैनत्करोति । शतधारँ सहस्रधारमित्याह । प्राणेष्वेवायुर्दधाति सर्वत्वाय । त्रिवृत्पलाशशाखायां दर्भमयं भवति । त्रिवृद्वै प्राणः । त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति १८

सौम्यः पर्णः सयोनित्वाय । साक्षात्पवित्रं दर्भाः । प्राक्सायमधिनिदधाति । तत्प्राणापानयो रूपम् । तिर्यक्प्रातः । तद्दर्शस्य रूपम् । दार्श्यँ ह्येतदहः । अन्नं वै चन्द्रमाः । अन्नं प्राणाः । उभयमेवोपैत्यजामित्वाय १९

तस्मादयँ सर्वतः पवते । हुतः स्तोको हुतो द्रप्स इत्याह प्रतिष्ठित्यै । हविशोऽस्कन्दाय । न हि हुतँ स्वाहाकृतँ स्कन्दति । दिवि नाको नामाग्निः । तस्य विप्रुषो भागधेयम् । अग्नये बृहते नाकायेत्याह । नाकमेवाग्निं भागधेयेन समर्धयति । स्वाहा द्यावापृथिवीभ्यामित्याह । द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति २०

पवित्रवत्यानयति । अपां चैवौषधीनां च रसँ सँसृजति । अथो ओषधीष्वेव पशून्प्रतिष्ठापयति । अन्वारभ्य वाचं यच्छति । यज्ञस्य धृत्यै । धारयन्नास्ते । धारयन्त इव हि दुहन्ति । कामधुक्ष इत्याहा तृतीयस्यै । त्रय इमे लोकाः । इमानेव लोकान्यजमानो दुहे २१

अमूमिति नाम गृह्णाति । भद्रमेवासां कर्माविष्करोति । सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मेत्याह । इयं वै विश्वायुः । अन्तरिक्षं विश्वव्यचाः । असौ विश्वकर्मा । इमानेवैताभिर्लोकान्यथापूर्वं दुहे । अथो यथा प्रदात्रे पुण्यमाशास्ते । एवमेवैना एतदुपस्तौति । तस्मात्प्रादादित्युन्नीय वन्दमाना उपस्तुवन्तः पशून्दुहन्ति २२

बहु दुग्धीन्द्राय देवेभ्यो हविरिति वाचं विसृजते । यथादेवतमेव प्रसौति । दैव्यस्य च मानुषस्य च व्यावृत्त्यै । त्रिराह । त्रिषत्या हि देवाः ।

अवाचंयमोऽनन्वारभ्योत्तराः । अपरिमितमेवावरुन्धे । न दारुपात्रेण दुह्यात् । अग्निवद्वै दारुपात्रम् । यद्दारुपात्रेण दुह्यात् २३

यातयाम्ना हविषा यजेत । अथो खल्वाहुः । पुरोडाशमुखानि वै हवींषि । नेतैतः पुरोडाशँ हविषो यामोऽस्तीति । काममेव दारुपात्रेण दुह्यात् । शूद्र एव न दुह्यात् । असतो वा एष संभूतः । यच्छूद्रः । अहविरेव तदित्याहुः । यच्छूद्रो दोग्धीति २४

अग्निहोत्रमेव न दुह्याच्छूद्रः । तद्धि नोत्पुनन्ति । यदा खलु वै पवित्रमत्येति । अथ तद्धविरिति । संपृच्यध्वमृतावरीरित्याह । अपां चैवौषधीनां च रसँ सँसृजति । तस्मादपां चौषधीनां च रसमुपजीवामः । मन्द्रा धनस्य सातय इत्याह । पुष्टिमेव यजमाने दधाति । सोमेन त्वातनच्मीन्द्राय दधीत्याह २५

सोममेवैनत्करोति । यो वै सोमं भक्षयित्वा । संवत्सरँ सोमं न पिबति । पुनर्भक्ष्योऽस्य सोमपीथो भवति । सोमः खलु वै सांनाय्यम् । य एवं विद्वान्त्सांनाय्यं पिबति । अपुनर्भक्ष्योऽस्य सोमपीथो भवति । न मृन्मयेनापिदध्यात् । यन्मृन्मयेनापिदध्यात् । पितृदेवत्यँ स्यात् २६

अयस्पात्रेण वा दारुपात्रेण वापिदधाति । तद्धि सदेवम् । उदन्वद्भवति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । अदस्तमसि विष्णवे त्वेत्याह । यज्ञो वै विष्णुः । यज्ञायैवैनददस्तं करोति । विष्णो हव्यँ रक्षस्वेत्याह गुप्त्यै । अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै २७

कर्मणे वां देवेभ्यश्शकेयमित्याह शक्त्यै । यज्ञस्य वै संततिमनु प्रजाः पशवो यजमानस्य संतायन्ते । यज्ञस्य विच्छित्तिमनु प्रजाः पशवो यजमानस्य विच्छिद्यन्ते । यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येत्याहवनीयात्संतनोति । यजमानस्य प्रजायै पशूनाँ संतत्यै । अपः

प्रणयति । श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । यज्ञो वा आपः २८

यज्ञमेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । वज्रो वा आपः । वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचरति । अपः प्रणयति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । अपः प्रणयति । आपो वै देवानां प्रियं धाम । देवानामेव प्रियं धाम प्रणीय प्रचरति २९

अपः प्रणयति । आपो वै सर्वा देवताः । देवता एवारभ्य प्रणीय प्रचरति । वेषाय त्वेत्याह । वेषाय ह्येनदादत्ते । प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । धूरसीत्याह । एष वै धुर्योऽग्निः । तं यदनुपस्पृश्यातीयात् ३०

अध्वर्युं च यजमानं च प्रदहेत् । उपस्पृश्यात्येति । अध्वर्योश्च यजमानस्य चाप्रदाहाय । धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं दूर्वाम इत्याह । द्वौ वाव पुरुषौ । यं चैव धूर्वति । यश्चैनं धूर्वति । तावुभौ शुचार्पयति । त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममित्याह । यथायजुरेवैतत् ३१

अह्रुतमसि हविर्धानमित्याहानार्त्यै । दृँहस्व मा ह्वारित्याह धृत्यै । मित्रस्य त्वा चक्षुषा प्रेक्ष इत्याह मित्रत्वाय । मा भेर्मा संविक्था मा त्वा हिँसिषमित्याहाहिँसायै । यद्वै किं च वातो नाभिवाति । तत्सर्वं वरुणदेवत्यम् । उरु वातायेत्याह । अवारुणमेवैनत्करोति । देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह ३२

अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह । यत्यै । अग्नये जुष्टं निर्वपामीत्याह । अग्नय एवैनाञ्जुष्टं निर्वपति । त्रिर्यजुषा । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । तूष्णीं चतुर्थम् । अपरिमितमेवावरुन्धे । स एवमेवानुपूर्वँ हवींषि निर्वपति ३३

इदं देवानामिदमु नः सहेत्याह व्यावृत्त्यै । स्फात्यै त्वा नारात्या इत्याह गुप्त्यै । तमसीव वा एषोऽन्तश्चरति । यः परीणहि । सुवरभि विख्येषं वैश्वानरं ज्योतिरित्याह । सुवरेवाभि विपश्यति वैश्वानरं ज्योतिः । द्यावापृथिवी हविषि गृहीत उदवेपेताम् । दृँहन्तां दुर्या द्यावापृथिव्योरित्याह । गृहाणां द्यावापृथिव्योर्धृत्यै । उर्वन्तरिक्षमन्विहीत्याह गत्यै । अदित्यास्त्वोपस्थे सादयामीत्याह । इयं वा अदितिः । अस्या एवैनदुपस्थे सादयति । अग्ने हव्यँ रक्षस्वेत्याह गुप्त्यै ३४

इन्द्रो वृत्रमहन्न् । सोऽपः । अभ्यम्रियत । तासां यन्मेध्यं यज्ञियँ सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन्न् । यद्दर्भैरप उत्पुनाति । या एव मेध्या यज्ञियाः सदेवा आपः । ताभिरेवैना उत्पुनाति । द्वाभ्यामुत्पुनाति ३५

द्विपाद्यजमानः प्रतिष्ठित्यै । देवो वः सवितोत्पुनात्वित्याह । सवितृप्रसूत एवैना उत्पुनाति । अच्छिद्रेण पवित्रेणेत्याह । असौ वा अदित्योऽच्छिद्रं पवित्रम् । तेनैवैना उत्पुनाति । वसोः सूर्यस्य रश्मिभिरित्याह । प्राणा वा आपः प्राणा वसवः । प्राणा रश्मयः ३६

प्राणैरेव प्राणान्त्संपृणक्ति । सावित्रियर्चा । सवितृप्रसूतं मे कर्मासदिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिषमृद्धत्वाय । आपो देवीरग्रेपुवो अग्रेगुव इत्याह । रूपमेवासामेतन्महिमानं व्याचष्टे । अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह । अग्रे एव यज्ञं नयन्ति । अग्रे यज्ञपतिम् ३७

युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह । वृत्रँ ह हनिष्यन्निन्द्र आपो वव्रे । आपो हेन्द्रं वव्रिरे । संज्ञामेवासामेतत्सामानं व्याचष्टे । प्रोक्षिताः स्थेत्याह । तेनापः प्रोक्षिताः । अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याह । यथादेवतमेवैनान्प्रोक्षति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः ३८

अथो रक्षसामपहत्यै । शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्याया एवैनानि शुन्धति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो

मेध्यत्वाय । अवधूतँ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै । अदित्यास्त्वगसीत्याह । इयं वा अदितिः ३९

अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै । पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते । तस्मात्प्रजा मृगं ग्राहुकाः । यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय ४०

अधिषवणमसि वानस्पत्यमित्याह । अधिषवणमेवैनत्करोति । प्रति त्वादित्यास्त्वग्वेत्त्वित्याह सयत्वाय । अग्नेस्तनूरसीत्याह । अग्नेर्वा एषा तनूः । यदोषधयः । वाचो विसर्जनमित्याह । यदा हि प्रजा ओषधीनामश्नन्ति । अथ वाचं विसृजन्ते । देववीतये त्वा गृह्णामीत्याह ४१

देवताभिरेवैनत्समर्धयति । अद्रिरसि वानस्पत्य इत्याह । ग्रावाणमेवैनत्करोति । स इदं देवेभ्यो हव्यँ सुशमि शमिष्वेत्याह शान्त्यै । हविष्कृदेहीत्याह । य एव देवानाँ हविष्कृतः । तान्ह्वयति । त्रिर्ह्वयति । त्रिषत्या हि देवाः । इषमावदोर्जमावदेत्याह ४२

इषमेवोर्जं यजमाने दधाति । द्युमद्वदत वयँ संघातं जेष्मेत्याह भ्रातृव्याभिभूत्यै । मनोः श्रद्धादेवस्य यजमानस्यासुरघ्नी वाक् । यज्ञायुधेषु प्रविष्टासीत् । तेऽसुरा यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन्न् । ते पराभवन् । तस्मात्स्वानां मध्येऽवसाय यजेत । यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपश्शृण्वन्ति । ते पराभवन्ति । उच्चैः समाहन्तवा आह विजित्यै ४३

वृङ्क्त एषामिन्द्रियं वीर्यम् । श्रेष्ठ एषां भवति । वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह । वर्षवृद्धा वा ओषधयः । वर्षवृद्धा इषीकाः समृद्ध्यै । यज्ञँ रक्षाँस्यनु प्राविशन् । तान्यस्रा पशुभ्यो निरवादयन्त । तुषैरोषधीभ्यः

। परापूतँ रक्षः परापूता अरातय इत्याह । रक्षसामपहत्यै ४४

रक्षसां भागोऽसीत्याह । तुषैरेव रक्षाँसि निरवदयते । अप उपस्पृशति मेध्यत्वाय । वायुर्वो विविनक्त्वित्याह । पवित्रं वै वायुः । पुनात्येवैनान् । अन्तरिक्षादिव वा एते प्रस्कन्दन्ति । ये शूर्पात् । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । त्रिष्फलीकर्तवा आह । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय ४५

अवधूतँ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै । अदित्या-स्त्वगसीत्याह । इयं वा अदितिः । अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै । पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते । तस्मा-त्प्रजा मृगं ग्राहुकाः । यज्ञो देवेभ्यो निलायत ४६

कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरधिपिनष्टि । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय । द्यावापृथिवी सहास्ताम् । ते शम्यामात्रमेकमहर्व्यैताँ शम्यामात्रमेकमहः । दिवः स्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्त्वित्याह । द्यावापृथिव्योर्वीत्यै । धिषणासि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्त्वित्याह । द्यावापृथिव्योर्विधृत्यै ४७

धिषणासि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्वित्याह । द्यावापृथिव्योर्धृत्यै । देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । अधिवपामीत्याह । यथादेवतमेवैनानधिवपति । धान्यमसि धिनुहि देवानित्याह । एतस्य यजुषो वीर्येण ४८

यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते । न हि तदस्ति । यत्तावदेव स्यात् । यावज्जुहोति । प्राणाय त्वापानाय त्वेत्याह । प्राणानेव यजमाने दधाति । दीर्घामनु प्रसितिमायुषे धामित्याह । आयुरेवास्मिन्दधाति । अन्तरिक्षादिव वा एतानि प्रस्कन्दन्ति । यानि दृषदः । देवो वः सविता

हिरण्यपानिः प्रति गृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । असंवपन्ती पिँषाणूनि कुरुतादित्याह मेध्यत्वाय ४९

धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै । अपाग्नेऽग्निमामादं जहि निष्क्रव्यादँ सेधा देवयजं वहेत्याह । य एवामात्क्रव्यात् । तमपहत्य । मेध्येऽग्नौ कपालमुपदधाति । निर्दग्धँ रक्षो निर्दग्धा अरातय इत्याह । रक्षाँस्येव निर्दहति । अग्निवत्युपदधाति । अस्मिन्नेव लोके ज्योतिर्धत्ते । अङ्गारमधिवर्तयति ५०

अन्तरिक्ष एव ज्योतिर्धत्ते । आदित्यमेवामुष्मिन्लोके ज्योतिर्धत्ते । ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति । य एवं वेद । ध्रुवमसि पृथिवीं दृँहेत्याह । पृथिवीमेवैतेन दृँहति । धर्त्रमस्यन्तरिक्षं दृँहेत्याह । अन्तरिक्षमेवैतेन दृँहति । धरुणमसि दिवं दृँहेत्याह । दिवमेवैतेन दृँहति ५१

धर्मासि दिशो दृँहेत्याह । दिश एवैतेन दृँहति । इमानेवैतैर्लोकान्दृँहति । दृँहन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद । त्रीण्यग्रे कपा-लान्युपदधाति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । एकमग्रे कपालमुपदधाति । एकं वा अग्रे कपालं पुरुषस्य संभवति ५२

अथ द्वे । अथ त्रीणि । अथ चत्वारि । अथाष्टौ । तस्मादष्टाकपालं पुरुषस्य शिरः । यदेवं कपालान्युपदधाति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिँ सँस्करोति । आत्मानमेव तत्सँस्करोति । तँ सँस्कृतमात्मानम् ५३

अमुष्मिँल्लोकेऽनु परैति । यदष्टावुपदधाति । गायत्रिया तत्संमितम् । यन्नव । त्रिवृता तत् । यद्दश । विराजा तत् । यदेकादश । त्रिष्टुभा तत् । यद्द्वादश ५४

जगत्या तत् । छन्दःसंमितानि स उपदधत्कपालानि । इमान्लोकाननुपूर्वं दिशो विधृत्यै दृँहति । अथायुः प्राणान्प्रजां पशून्यजमाने दधाति ।

सजातानस्मा अभितो बहुलान्करोति । चितः स्थेत्याह । यथायजुरेवैतत् । भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह । देवतानामेवैनानि तपसा तपति । तानि ततः सँस्थिते । यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा विमुञ्चति । चतुष्पादः पशवः । पशुष्वेवोपरिष्टात्प्रतितिष्ठति ५५

देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । संवपामीत्याह । यथादेवतमेवैनानि संवपति । समापो अद्भिरग्मत समोषधयो रसेनेत्याह । आपो वा ओषधीर्जिन्वन्ति । ओषधयोऽपो जिन्वन्ति । अन्या वा एतासामन्या जिन्वन्ति ५६

तस्मादेवमाह । सँ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह । आपो वै रेवतीः । पशवो जगतीः । ओषधयो मधुमतीः । आप ओषधीः पशून् । तानेवास्मा एकधा सँसृज्य । मधुमतः करोति । अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वमिति पर्याप्लावयति । यथा सुवृष्ट इमामनुविसृत्य ५७

आप ओषधीर्महयन्ति । तादृगेव तत् । जनयत्यै त्वा संयौमीत्याह । प्रजा एवैतेन दाधार । अग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्यै । मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्पुरोडाशः । तस्मादेवमाह ५८

घर्मोऽसि विश्वायुरित्याह । विश्वमेवायुर्यजमाने दधाति । उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह । यजमानमेव प्रजया पशुभिः प्रथयति । त्वचं गृह्णीष्वेत्याह । सर्वमेवैनँ सतनुं करोति । अथाप आनीय परि मार्ष्टि । माँस एव तत्त्वचं दधाति । तस्मात्त्वचा माँसं छन्नम् । घर्मो वा एषोऽशान्तः ५९

अर्धमासेऽर्धमासे प्रवृज्यते । यत्पुरोडाशः । स ईश्वरो यजमानँ शुचा प्रदहः

। पर्यग्नि करोति । पशुमेवैनमकः । शान्त्या अप्रदाहाय । त्रिः पर्यग्नि करोति । त्र्यावृद्धि यज्ञः । अथो रक्षसामपहत्यै । अन्तरितँ रक्षोऽन्तरिता अरातय इत्याह ६०

रक्षसामन्तर्हित्यै । पुरोडाशं वा अधिश्रितँ रक्षाँस्यजिघाँसन् । दिवि नाको नामाग्नी रक्षोहा । स एवास्माद्रक्षाँस्यपाहन्न् । देवस्त्वा सविता श्रपयत्वित्याह । सवितृप्रसूत एवैनँ श्रपयति । वर्षिष्ठे अधि नाक इत्याह । रक्षसामपहत्यै । अग्निस्ते तनुवं मातिधागित्याहानतिदाहाय । अग्ने हव्यँ रक्षस्वेत्याह गुप्त्यै ६१

अविदहन्तश्श्रपयतेति वाचं विसृजते । यज्ञमेव हवीँश्यभिव्याहृत्य प्रतनुते । पुरोरुचमविदाहाय शृत्यै करोति । मस्तिष्को वै पुरोडाशः । तं यन्नाभिवासयेत् । आविर्मस्तिष्कः स्यात् । अभिवासयति । तस्माद्गुहा मस्तिष्कः । भस्मनाभिवासयति । तस्मान्माँसेनास्थि छन्नम् ६२

वेदेनाभिवासयति । तस्मात्केशैः शिरश्छन्नम् । अखलतिभावुको भवति । य एवं वेद । पशोर्वै प्रतिमा पुरोडाशः । स नायजुष्कमभिवास्यः । वृथेव स्यात् । ईश्वरा यजमानस्य पशवः प्रमेतोः । सं ब्रह्मणा पृच्यस्वेत्याह । प्राणा वै ब्रह्म ६३

प्राणाः पशवः । प्राणैरेव पशून्त्संपृणक्ति । न प्रमायुका भवन्ति । यजमानो वै पुरोडाशः । प्रजा पशवः पुरीषम् । यदेवमभिवासयति । यजमानमेव प्रजया पशुभिः समर्धयति । देवा वै हविर्भृत्वाब्रुवन्न् । कस्मिन्निदं म्रक्ष्यामह इति । सोऽग्निरब्रवीत् ६४

मयि तनूः सं निधद्ध्वम् । अहं वस्तं जनयिष्यामि । यस्मिन्म्रक्ष्यध्व इति । ते देवा अग्नौ तनूः सं न्यदधत । तस्मादाहुः । अग्निः सर्वा देवता इति । सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत । स द्वितीय-मभ्यपातयत् ६५

ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । यद-द्भ्योऽजायन्त । तदाप्यानामाप्यत्वम् । यदात्मभ्योऽजायन्त । तदात्म्या-नामात्म्यत्वम् । ते देवा आप्येष्वमृजत । आप्या अमृजत सूर्याभ्युदिते । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते ६६

सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि तद्ब्रह्महणं नात्यच्यवत । अन्तर्वेदि निनयत्यवरुध्यै । उल्मुकेनाभिगृह्णाति शृतत्वाय । शृतकामा इव हि देवाः ६७

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । आदद इन्द्रस्य बाहुरसि दक्षिण इत्याह । इन्द्रियमेव यजमाने दधाति । सहस्रभृष्टिः शततेजा इत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । वायुरसि तिग्मतेजा इत्याह । तेजो वै वायुः ६८

तेज एवास्मिन्दधाति । विषाद्वै नामासुर आसीत् । सोऽबिभेत् । यज्ञेन मा देवा अभिभविष्यन्तीति । स पृथिवीमभ्यवमीत् । सामेध्याभवत् । अथो यदिन्द्रो वृत्रमहन् । तस्य लोहितं पृथिवीमनु व्यधावत् । सामेध्याभवत् । पृथिवि देवयजनीत्याह ६९

मेध्यामेवैनां देवयजनीं करोति । ओषध्यास्ते मूलं मा हिँसिषमित्याह । ओषधीनामहिँसायै । व्रजं गच्छ गोस्थानमित्याह । छन्दाँसि वै व्रजो गोस्थानः । छन्दाँस्येवास्मै व्रजं गोस्थानं करोति । वर्षतु ते द्यौरित्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे । बधान देव सवितः परमस्यां परावतीत्याह ७०

द्वौ वाव पुरुषौ । यं चैव द्वेष्टि । यश्चैनं द्वेष्टि । तावुभौ बध्नाति परमस्यां परावति शतेन पाशैः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगित्याहा-निम्रुक्त्यै । अररुर्वै नामासुर आसीत् । स पृथिव्यामुपम्लुप्तोऽशयत् । तं

देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन् । भ्रातृव्यो वा अररुः । अपहतोऽररुः पृथिव्या इति यदाह ७१

भ्रातृव्यमेव पृथिव्या अपहन्ति । तेऽमन्यन्त । दिवं वा अयमितः पतिष्यतीति । तमररुस्ते दिवं मा स्कानिति दिवः पर्यबाधन्त । भ्रातृव्यो वा अररुः । अररुस्ते दिवं मा स्कानिति यदाह । भ्रातृव्यमेव दिवः परिबाधते । स्तम्बयजुर्हरति । पृथिव्या एव भ्रातृव्यमपहन्ति । द्वितीयँ हरति ७२

अन्तरिक्षादेवैनमपहन्ति । तृतीयँ हरति । दिव एवैनमपहन्ति । तूष्णीं चतुर्थँ हरति । अपरिमितादेवैनमपहन्ति । असुराणां वा इयमग्र आसीत् । यावदासीनः परापश्यति । तावद्देवानाम् । ते देवा अब्रुवन् । अस्त्वेव नोऽस्यामपीति ७३

क्यन्नो दास्यथेति । यावत्स्वयं परिगृह्णीथेति । ते वसवस्त्वेति दक्षिणतः पर्यगृह्णन् । रुद्रास्त्वेति पश्चात् । आदित्यास्त्वेत्युत्तरतः । तेऽग्निना प्राञ्चोऽजयन् । वसुभिर्दक्षिणा । रुद्रैः प्रत्यञ्चः । आदित्यैरुदञ्चः । यस्यैवं विदुषो वेदिं परिगृह्णन्ति ७४

भवत्यात्मना । परास्य भ्रातृव्यो भवति । देवस्य सवितुः सव इत्याह प्रसूत्यै । कर्म कृण्वन्ति वेधस इत्याह । इषितँ हि कर्म क्रियते । पृथिव्यै मेध्यं चामेध्यं च व्युदक्रामताम् । प्राचीनमुदीचीनं मेध्यम् । प्रतीचीनं दक्षिणामेध्यम् । प्राचीमुदीचीं प्रवणां करोति । मेध्यामेवैनां देवयजनीं करोति ७५

प्राञ्चौ वेद्याँवुन्नयति । आहवनियस्य परिगृहीत्यै । प्रतिची श्रोणी ।गार्हपत्यस्य परिगृहीत्यै । अथो मिथुनत्वाय । उद्धन्ति । यदेवास्या अमेध्यम् । तदपहन्ति । उद्धन्ति तस्मादोषधयः पराभवन्ति ७६

मूलं छिनत्ति । भ्रातृव्यस्यैव मूलं छिनत्ति । मूलं वा अतितिष्ठद्रक्षाँस्यनूत्पिपते । यद्धस्तेन छिन्द्यात् । कुनखिनीः प्रजाः स्युः । स्फ्येन छिनत्ति । वज्रो

वै स्फ्यः । वज्रेणैव यज्ञाद्रक्षाँस्यपहन्ति । पितृदेवत्यातिखाता । इयतीं खनति ७७

प्रजापतिना यज्ञमुखेन संमिताम् । वेदिर्देवेभ्यो निलायत । तां चतुरङ्गुलेऽन्वविन्दन्न् । तस्माच्चतुरङ्गुलं खेया । चतुरङ्गुलं खनति । चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति । आ प्रतिष्ठायै खनति । यजमानमेव प्रतिष्ठां गमयति । दक्षिणतो वर्षीयसीं करोति । देवयजनस्यैव रूपमकः ७८

पुरीषवतीं करोति । प्रजा वै पशवः पुरीषम् । प्रजयैवैनं पशुभिः पुरीषवन्तं करोति । उत्तरं परिग्राहं परिगृह्णाति । एतावती वै पृथिवी ।यावती वेदिः । तस्या एतावत एव भ्रातृव्यं निर्भज्य । आत्मन उत्तरं परिग्राहं परिगृह्णाति । ऋतमस्यृतसदनमस्यृतश्रीरसीत्याह । यथायजुरेवैतत् ७९

क्रूरमिव वा एतत्करोति । यद्वेदिं करोति । धा असि स्वधा असीति योयुप्यते शान्त्यै । उर्वी चासि वस्वी चासीत्याह । उर्वीमेवैनां वस्वीं करोति । पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय । उदादाय पृथिवीं जीरदा-नुर्यामैरयन्चन्द्रमसि स्वधाभिरित्याह । यदेवास्या अमेध्यम् । तदपहत्य । मेध्यां देवयजनीं कृत्वा ८०

यददश्चन्द्रमसि मेध्यम् । तदस्यामेरयति । तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै । प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । स्रुवं च स्रुचश्च संमृड्ढि । पत्नीं संनह्य । आज्येनोदेहीत्याहानुपूर्वतायै । प्रोक्षणी-रासादयति । आपो वै रक्षोघ्नीः ८१

रक्षसामपहत्यै । स्फ्यस्य वर्त्मन्त्सादयति । यज्ञस्य संतत्यै । उवाच हासितो दैवलः । एतावतीर्वा अमुष्मिँल्लोक आप आसन्न् । यावतीः प्रोक्षणीरिति । तस्माद्बह्वीरासाद्याः । स्फ्यमुदस्यन् । यं द्विष्यात्तं ध्यायेत् । शुचैवैनमर्पयति ८२

वज्रो वै स्फ्यः । यदन्वञ्चं धारयेत् । वज्रेऽध्वर्युः क्षणवीत । पुरस्तात्तिर्यञ्चं

धारयति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञस्य दक्षिणतो रक्षाँस्यपहन्ति । अग्निभ्यां प्राचश्च प्रतीचश्च । स्फ्येनोदीचश्चाधाचश्च । स्फ्येन वा एष वज्रेणास्यै पाप्मानं भ्रातृव्यमपहत्य । उत्करेऽधि प्रवृश्चति ८३

यथोपधाय वृश्चन्त्येवम् । हस्ताववनेनिक्ते । आत्मानमेव पवयते । स्फ्यं प्रक्षालयति मेध्यत्वाय । अथो पाप्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति । इध्माबर्हिरुपसादयति युक्त्यै । यज्ञस्य मिथुनत्वाय । अथो पुरोरुचमेवैतां दधाति । उत्तरस्य कर्मणोऽनुख्यात्यै । न पुरस्तात्प्रत्यगुपसादयेत् ८४

यत्पुरस्तात्प्रत्यगुपसादयेत् । अन्यत्राहुतिपथादिध्मं प्रतिपादयेत् । प्रजा वै बर्हिः । अपराध्नुयाद्बर्हिषा प्रजानां प्रजननम् । पश्चात्प्रागुपसादयति । आहुतिपथेनेध्मं प्रतिपादयति । संप्रत्येव बर्हिषा प्रजानां प्रजननमुपैति । दक्षिणमिध्मम् । उत्तरं बर्हिः । आत्मा वा इध्मः । प्रजा बर्हिः । प्रजा ह्यात्मन उत्तरतरा तीर्थे । ततो मेधमुपनीय । यथादेवतमेवैनत्प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ८५ २

प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय । स्रुचः संमार्ष्टि । स्रुवमग्रे । पुमाँसमेवाभ्यः सँश्यति मिथुनत्वाय । अथ जुहूम् । अथोपभृतम् । अथ ध्रुवाम् । असौ वै जुहूः १

अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । इमे वै लोकाः स्रुचः । वृष्टिः संमार्जनानि । वृष्टिर्वा इमाँल्लोकाननुपूर्वं कल्पयति । ते ततः क्लृप्ताः समेधन्ते । समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद । यदि कामयेत वर्षुकः पर्जन्यः स्यादिति । अग्रतः संमृज्यात् २

वृष्टिमेव नियच्छति । अर्वाचीनाग्रा हि वृष्टिः । यदि कामयेतावर्षुकः स्यादिति । मूलतः संमृज्यात् । वृष्टिमेवोद्यच्छति । तदु वा आहुः । अग्रत एवोपरिष्टात्संमृज्यात् । मूलतोऽधस्तात् । तदनुपूर्वं कल्पते । वर्षुको भवतीति ३

प्राचीमभ्याकारम् । अग्नेरन्तरतः । एवमिव ह्यन्नमद्यते । अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति । ऊर्ज एवान्नाद्यस्यावरुध्यै । अधस्ता-त्प्रतीचीम् । दण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै । तस्मादरत्नौ प्राञ्च्युप-रिष्टाल्लोमानि । प्रत्यञ्च्यधस्तात् ४

स्रुग्घ्येषा । प्राणो वै स्रुवः । जुहूर्दक्षिणो हस्तः । उपभृत्सव्यः । आत्मा ध्रुवा । अन्नँ संमार्जनानि । मुखतो वै प्राणोऽपानो भूत्वा । आत्मानमन्नं प्रविश्य । बाह्यतस्तनुवँ शुभयति । तस्मात्स्रुवमेवाग्रे संमार्ष्टि । मुखतो हि प्राणोऽपानो भूत्वा । आत्मानमन्नमाविशति । तौ प्राणापाणौ । अन्यर्धुकः प्राणापानाभ्यां भवति । य एवं वेद ५

दिवः शिल्पमवततम् । पृथिव्याः ककुभि श्रितम् । तेन वयँ सहस्रवल्शेन । सपत्नं नाशयामसि स्वाहेति स्रुक्संमार्जनान्यग्नौ प्रहरति । आपो वै दर्भाः । रूपमेवैषामेतन्महिमानं व्याचष्टे । अनुष्टुभर्चा । आनुष्टुभः प्रजापतिः । प्राजापत्यो वेदः । वेदस्याग्रँ स्रुक्संमार्जनानि ६

स्वेनैवैनानि छन्दसा । स्वया देवतया समर्धयति । अथो ऋग्वाव योषा । दर्भो वृषा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया पशुभिर्यजमानः । तान्येके वृथैवापास्यन्ति । तत्तथा न कार्यम् । आरब्धस्य यज्ञियस्य कर्मणः स विदोहः ७

यद्येनानि पशवोऽभितिष्ठेयुः । न तत्पशुभ्यः कम् । अद्भिर्मार्जयित्वोत्करे न्यस्येत् । यद्वै यज्ञियस्य कर्मणोऽन्यत्राहुतीभ्यः संतिष्ठते । उत्करो वाव तस्य प्रतिष्ठा । एताँ हि तस्मै प्रतिष्ठां देवाः समभरन् । यदद्भिर्मार्जयति । तेन शान्तम् । यदुत्करे न्यस्यति । प्रतिष्ठामेवैनानि तद्गमयति ८

प्रतितिष्ठति प्रजया पशुभिर्यजमानः । अथो स्तम्बस्य वा एतद्रूपम् । यत्स्रुक्संमार्जनानि । स्तम्बशो वा ओषधयः । तासां जरत्कक्षे पशवो न रमन्ते । अप्रियो ह्येषां जरत्कक्षः । यावदप्रियो ह वै जरत्कक्षः पशूनाम् । तावदप्रियः पशूनां भवति । यस्यैतान्यन्यत्राग्नेर्दधति । नवदाव्यासु वा

। तामिष्ट्वोपह्वयेत । अमू हमस्मि । सा त्वम् । द्यौरहम् । पृथिवी त्वम् । सामाहम् । ऋक्त्वम् । तावेहि संभवाव । सह रेतो दधावहै । पुँसे पुत्राय वेत्तवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति । अर्ध एवैनामुपह्वयते । सैव ततः प्रायश्चित्तिः ९

यद्विष्यगणेन जुहुयात् । अप्रजा अपशुर्यजमानः स्यात् । यदनायतने निनयेत् । अनायतनः स्यात् । प्राजापत्ययर्चा वल्मीकवपायामवनयेत् । प्राजापत्यो वै वल्मीकः । यज्ञः प्रजापतिः । प्रजापतावेव यज्ञं प्रतिष्ठापयति । भूरित्याह । भूतो वै प्रजापतिः १०

भूतिमेवोपैति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः । यत्कीटावपन्नेन जुहुयात् । अप्रजा अपशुर्यजमानः स्यात् । यदनायतने निनयेत् । अनायतनः स्यात् । मध्यमेन पर्णेन द्यावापृथिव्य-यर्चान्तःपरिधि निनयेत् । द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति ११

तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः । यदववृष्टेन जुहुयात् । अपरूपमस्यात्मन्जायेत । किलासो वा स्यादर्शसो वा । यत्प्रत्येयात् । यज्ञं विच्छिन्द्यात् । स जुहुयात् । मित्रो जनान्कल्पयति प्रजानन् १२

मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभिचष्टे । सत्याय हव्यं घृतवज्जुहोतेति । मित्रेणैवैनत्कल्पयति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः । यत्पूर्वस्यामाहुत्याँ हुतायामुत्तराहुतिः स्कन्देत् । द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत । यदुत्तरयाभिजुहुयात् १३

चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत । यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय । तूष्णीमेव पुनर्जुहुयात् । वनस्पतिनैव यज्ञस्यार्तां चानार्तां चाहुती विदाधार । तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । सैव ततः प्रायश्चित्तिः । यत्पुरा प्रयाजेभ्यः प्राङङ्गारः स्कन्देत् । अध्वर्यवे च यजमानाय चाकँ स्यात् १४

यद्दक्षिणा । ब्रह्मणे च यजमानाय चार्कं स्यात् । यत्प्रत्यक् । होत्रे च पत्नियै च यजमानाय चार्कं स्यात् । यदुदङ्। अग्नीधे च पशुभ्यश्च यजमानाय चार्कं स्यात् । यदभि जुहुयात् । रुद्रोऽस्य पशून्घातुकः स्यात् । यन्नाभिजुहुयात् । अशान्तः प्रह्रियेत १५

स्रुवस्य बुध्नेनाभिनिदध्यात् । मा तमो मा यज्ञस्तमन्मा यजमानस्तमत् । नमस्ते अस्त्वायते । नमो रुद्र परायते । नमो यत्र निषीदसि । अमुं मा हिँसीरमुं मा हिँसीरिति येन स्कन्देत् । तं प्रहरेत् । सहस्रशृङ्गो वृषभो जातवेदाः । स्तोमपृष्ठो घृतवान्त्सुप्रतीकः । मा नो हासीन्मेत्थितो नेत्त्वा जहाम । गोपोषं नो वीरपोषं च यच्छेति । ब्रह्मणैवैनं प्रहरति । सैव ततः प्रायश्चित्तिः १६

वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यस्याहिताग्नेरग्निर्मथ्यमानो न जायते । यत्रान्यं पश्येत् । तत आहृत्य होतव्यम् । अग्नावेवास्याग्निहोत्रँ हुतं भवति । यद्यन्यं न विन्देत् । अजायाँ होतव्यम् । आग्नेयी वा एषा । यदजा । अग्नावेवास्याग्निहोत्रँ हुतं भवति १७

अजस्य तु नाश्नीयात् । यदजस्याश्नीयात् । यामेवाग्नावाहुतिं जुहुयात् । तामद्यात् । तस्मादजस्य नाश्यम् । यद्यजां न विन्देत् । ब्राह्मणस्य दक्षिणे हस्ते होतव्यम् । एष वा अग्निर्वैश्वानरः । यद्ब्राह्मणः । अग्नावेवास्याग्निहोत्रँ हुतं भवति १८

ब्राह्मणं तु वसत्यै नापरुन्ध्यात् । यद्ब्राह्मणं वसत्या अपरुन्ध्यात् । यस्मिन्नेवाग्नावाहुतिं जुहुयात् । तं भागधेयेन व्यर्धयेत् । तस्माद्ब्राह्मणो वसत्यै नापरुध्यः । यदि ब्राह्मणं न विन्देत् । दर्भस्तम्बे होतव्यम् । अग्निवान्वै दर्भस्तम्बः । अग्नावेवास्याग्निहोत्रँ हुतं भवति । दर्भाँस्तु नाध्यासीत १९

यद्दर्भानध्यासीत । यामेवाग्नावाहुतिं जुहुयात् । तामध्यासीत । तस्माद्दर्भा नाध्यासितव्याः । यदि दर्भान्न विन्देत् । अप्सु होतव्यम् । आपो वै सर्वा

देवताः । देवतास्वेवास्याग्निहोत्रँ हुतं भवति । आपस्तु न परिचक्षीत । यदापः परिचक्षीत २०

यामेवाप्स्वाहुतिं जुहुयात् । तां परिचक्षीत । तस्मादापो न परिचक्ष्याः । मेध्या च वा एतस्यामेध्या च तनुवौ सँसृज्येते । यस्याहिताग्नेरन्यैरग्निभिरग्नयः सँसृज्यन्ते । अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत् । मेध्यां चैवास्यामेध्यां च तनुवौ व्यावर्तयति । अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव व्रतपतिँ स्वेन भागधेयेनोपधावति । स एवैनं व्रतमालम्भयति २१

गर्भँ स्रवन्तमगदमकः । अग्निरिन्द्रस्त्वष्टा बृहस्पतिः । पृथिव्यामवचुश्चोतैतत् । नाभि प्राप्नोति निर्ऋतिं पराचैः । रेतो वा एतद्वाजिनमाहिताग्नेः । यदग्नि-होत्रम् । तद्यत्स्रवेत् । रेतोऽस्य वाजिनँ स्रवेत् । गर्भँ स्रवन्तमगदमकरित्याह । रेत एवास्मिन्वाजिनं दधाति २२

अग्निरित्याह । अग्निर्वै रेतोधाः । रेत एव तद्दधाति । इन्द्र इत्याह । इन्द्रियमेवास्मिन्दधाति । त्वष्टेत्याह । त्वष्टा वै पशूनाम्मिथुनानाँ रूपकृत् । रूपमेव पशुषु दधाति । बृहस्पतिरित्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवास्मै प्रजाः प्रजनयति । पृथिव्यामवचुश्चोतैतदित्याह । अस्यामे-वैनत्प्रतिष्ठापयति नाभि प्राप्नोति निर्ऋतिं पराचैरित्याह । रक्षसामपहत्यै २३

याः पुरस्तात्प्रस्रवन्ति । उपरिष्टात्सर्वतश्च याः । ताभी रश्मिपवित्राभिः । श्रद्धां यज्ञमारभे । देवा गातुविदः । गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन । वाताद्यज्ञः प्रयुज्यताम् । तृतीयस्यै दिवः । गायत्रिया सोम आभृतः २४

सोमपीथाय संनयितुम् । वकलमन्तरमाददे । आपो देवीः शुद्धाः स्थ । इमा पात्राणि शुन्धत । उपातङ्क्याय देवानाम् । पर्णवल्कमुत शुन्धत । पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पय इन्द्राय हविषे ध्रियस्व । गायत्री पर्णवल्केन । पयः सोमं करोत्विमम् २५

अग्निं गृह्णामि सुरथं यो मयोभूः । य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमम् । श्वो यज्ञाय रमतां देवताभ्यः । वसून्रुद्रानादित्यान् । इन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि । स्व आयतने मनीषया । इमामूर्जं पञ्चदशीं ये प्रविष्टाः । तान्देवान्परिगृह्णामि पूर्वाः २६

अग्निर्हव्यवाडिह तानावहतु । पौर्णमासँ हविरिदमेषां मयि । आमावास्यँ हविरिदमेषां मयि । अन्तराग्नी पशवः । देवसँसदमागमन् । तान्पूर्वः परिगृह्णामि । स्व आयतने मनीषया । इह प्रजा विश्वरूपा रमन्ताम् । अग्निं गृहपतिमभि संवसानाः । ताः पूर्वः परिगृह्णामि २७

स्व आयतने मनीषया । इह पशवो विश्वरूपा रमन्ताम् । अग्निं गृहपतिमभि संवसानाः । तान्पूर्वः परिगृह्णामि । स्व आयतने मनीषया । अयं पितृणामग्निः । अवाड्व्या पितृभ्य आ । तं पूर्वः परिगृह्णामि । अविषं नः पितुं करत् । अजस्रं त्वाँ सभापालाः २८

विजयभागँ समिन्धताम् । अग्ने दीदाय मे सभ्य । विजित्यै शरदः शतम् । अन्नमावसथीयम् । अभिहराणि शरदः शतम् । आवसथे श्रियं मन्त्रम् । अहिर्बुध्नियो नियच्छतु । इदमहमग्निज्येष्ठेभ्यः । वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यः २९

रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्यः । आदित्येभ्यो यज्ञं प्रब्रवीमि । पयस्वतीरोषधयः । पयस्वद्वीरुधां पयः । अपां पयसो यत्पयः । तेन मामिन्द्र सँसृज । अग्ने व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत आदित्य व्रतपते ३०

व्रतानां व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । इमां प्राचीमुदीचीम् । इषमूर्जमभि सँस्कृताम् । बहुपर्णामशुष्काग्राम् । हरामि पशुपामहम् । यत्कृष्णो रूपं कृत्वा । प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविँशतिधा । संभरामि सुसंभृता ३१

त्रीन्परिधीँस्तिस्त्रः समिधः । यज्ञायुरनुसंचरान् । उपवेषं मेक्षणं धृष्टिम् । संभरामि सुसंभृता । या जाता ओषधयः । देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासम् । परिस्तरमाहरन् । अपां मेध्यं यज्ञियम् । सदेवँ शिवमस्तु मे ३२

आच्छेत्ता वो मा रिषम् । जीवानि शरदः शतम् । अपरिमितानां परिमिताः । संनह्ये सुकृताय कम् । एनो मा निगां कतमच्चनाहम् । पुनरुत्थाय बहुला भवन्तु । सकृदाच्छिन्नं बर्हिरूर्णामृदु । स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्त्सीदन्तु मे पितरः सोम्याः । पितामहाः प्रपितामहाश्चानुगैः सह ३३

त्रिवृत्पलाशे दर्भः । इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमम् । पयो हव्यं करोतु मे । इमौ प्राणापानौ । यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ संचरताम् । पवित्रे हव्यशोधने । पवित्रे स्थो वैष्णवी ।वायुर्वां मनसा पुनातु ३४

अयं प्राणश्चापानश्च । यजमानमपिगच्छताम् । यज्ञे ह्यभूतां पोतारौ । पवित्रे हव्यशोधने । त्वया वेदिं विविदुः पृथिवीम् । त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वान् । त्वया होता संतनोत्यर्धमसान् । त्रयस्त्रिँशोऽसि तन्तूनाम् । पवित्रेण सहागहि ३५

शिवेऽयँ रज्जुरभिधानी ।अघ्नियामुपसेवताम् । अप्रस्त्रँसाय यज्ञस्य । उखे उपदधाम्यहम् । पशुभिः संनीतं बिभृताम् । इन्द्राय शृतं दधि । उपवेषोऽसि यज्ञाय । त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः । शिवः शग्मो भवासि नः ३६

अमृन्मयं देवपात्रम् । यज्ञस्यायुषि प्रयुज्यताम् । तिरःपवित्रमतिनीताः । आपो धारय मातिगुः । देवेन सवित्रोत्पूताः । वसोः सूर्यस्य रश्मिभिः । गां दोहपवित्रे रज्जुम् । सर्वा पात्राणि शुन्धत । एता आचरन्ति मधुमद्दुहानाः । प्रजावतीर्यशसो विश्वरूपाः ३७

बह्वीर्भवन्तीरुप जायमानाः । इह व इन्द्रो रमयतु गावः । पूषा स्थ । अयक्ष्मा वः प्रजया सँसृजामि । रायस्पोषेण बहुला भवन्तीः । ऊर्जं पयः पिन्वमाना घृतं च । जीवो जीवन्तीरुप वः सदेयम् । द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यजमानाय द्रविणं दधातु ३८

उत्सं दुहन्ति कलशं चतुर्बिलम् । इडां देवीं मधुमतीँ सुवर्विदम् । तदिन्द्राग्नी जिन्वतँ सूनृतावत् । तद्यजमानममृतत्वे दधातु । कामधुक्षः प्र णो ब्रूहि । इन्द्राय हविरिन्द्रियम् । अमूं यस्यां देवानाम् । मनुष्याणां पयो हितम् । बहु दुग्धीन्द्राय देवेभ्यः । हव्यमाप्यायतां पुनः ३९

वत्सेभ्यो मनुष्येभ्यः । पुनर्दोहाय कल्पताम् । यज्ञस्य संततिरसि । यज्ञस्य त्वा संततिमनु संतनोमि । अदस्तमसि विष्णवे त्वा । यज्ञायापिदधाम्यहम् । अद्भिररिक्तेन पात्रेण । याः पूताः परिशेरते । अयं पयः सोमं कृत्वा । स्वां योनिमपिगच्छतु ४०

पर्णवल्कः पवित्रम् । सौम्यः सोमाद्धि निर्मितः । इमौ पर्णं च दर्भं च । देवानाँ हव्यशोधनौ । प्रातर्वेषाय गोपाय विष्णो हव्यँ हि रक्षसि । उभावग्नी उपस्तृणते । देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि । मह्यं गोप-तये पशून् ४१

देवा देवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु । द्वितीयास्तृतीयेषु । त्रिरेकादशा इह मावत । इदँ शकेयं यदिदं करोमि । आत्मा करोत्वात्मने । इदं करिष्ये भेषजम् । इदं मे विश्वभेषजा । अश्विना प्रावतं युवम् । इदमहँ सेनाया अभीत्वर्यै ४२

मुखमपोहामि । सूर्यज्योतिर्विभाहि । महत इन्द्रियाय । आप्यायतां घृतयोनिः । अग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व । सुरूपं त्वा वसुविदम् । पशूनां तेजसा । अग्नये जुष्टमभिघारयामि । स्योनं ते सदनं करोमि ४३

घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ । व्रीहीणां मेध सुमनस्यमानः । आर्द्रः प्रथस्नुर्भुवनस्य गोपाः । शृत उत्स्नाति जनिता मतीनाम् । यस्त आत्मा पशुषु प्रविष्टः । देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम घृतवान्हि भूत्वा । देवान्गच्छ सुवर्विद यजमानाय मह्यम् । इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् ४४

देवाः पितरः पितरो देवाः । योऽहमस्मि स सन्यजे । यस्यास्मि न तमन्तरेमि । स्वं म इष्टँ स्वं दत्तम् । स्वं पूर्तँ स्वँ श्रान्तम् । स्वँ हुतम् । तस्य मेऽग्निरुपद्रष्टा । वायुरुपश्रोता । आदित्योऽनुख्याता । द्यौः पिता ४५

पृथिवी माता । प्रजापतिर्बन्धुः । य एवास्मि स सन्यजे । मा भेर्मा संविक्था मा त्वा हिँसिषम् । मा ते तेजोऽपक्रमीत् । भरतमुद्धरेमनुसिञ्च । अवदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिँसीः । यदवदानानि तेऽवद्यन् । विलोमाकार्षमात्मनः ४६

आज्येन प्रत्यनज्म्येनत् । तत्त आप्यायतां पुनः । अज्यायो यवमात्रात् । आव्याधात्कृत्यतामिदम् । मा रूरुपाम यज्ञस्य । शुद्धँ स्विष्टमिदँ हविः । मनुना दृष्टां घृतपदीम् । मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन् । अवद्याम्येकतोमुखाम् ४७

इडे भागं जुषस्व नः । जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम । सर्वात्मानः सर्वगणाः । ब्रध्न पिन्वस्व । ददतो मे मा क्षायि । कुर्वतो मे मोपदसत् । दिशां क्ळ्प्तिरसि । दिशो मे कल्पन्ताम् । कल्पन्तां मे दिशः ४८

दैवीश्च मानुषीश्च । अहोरात्रे मे कल्पेताम् । अर्धमासा मे कल्पन्ताम् । मासा मे कल्पन्ताम् । ऋतवो मे कल्पन्ताम् । संवत्सरो मे कल्पताम् । क्ळ्प्तिरसि कल्पतां मे । आशानां त्वाशापालेभ्यः । चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यः ४९

विधेम हविषा वयम् । भजतां भागी भागम् । माभागो भक्त । निरभागं भजामः । अपस्पिन्व । ओषधीर्जिन्व । द्विपात्पाहि । चतुष्पादव । दिवो वृष्टिमेरय । ब्राह्मणानामिदँ हविः ५०

सोम्यानाँ सोमपीथिनाम् । निर्भक्तोऽब्राह्मणः । नेहाब्राह्मणस्यास्ति । समङ्क्तां बर्हिर्हविषा घृतेन । समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्ताम् । दिव्यं नभो गच्छतु यत्स्वाहा । इन्द्राणीवाविधवा भूयासम् । अदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्य ५१

उप निषदे सुप्रजास्त्वाय । सं पत्नी पत्या सुकृतेन गच्छताम् । यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीः । दिवि ज्योतिरजरमारभेताम् । दश ते तनुवो यज्ञ यज्ञियाः । ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानः । देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् । यं वां देवा अकल्पयन् ५२

ऊर्जो भागँ शतक्रतू ।एतद्वां तेन प्रीणानि । तेन तृप्यतमँहहौ । अहं देवानाँ सुकृतामस्मि लोके । ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान् । यदाभ्यामिन्द्रो अदधाद्भागधेयम् । अदारसृद्भवत देव सोम । अस्मिन्यज्ञे मरुतो मृडता नः । मा नो विददभि भामो अशस्तिः ५३

मा नो विदद्वृजना द्वेष्या या । ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहताँ सुवीर्यम् । रायस्पोषँ सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा । अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहताँ सुवीर्यम् । रायस्पोषँ सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा । अभिस्तृणीहि परिधेहि वेदिम् । जामिं मा हिँसीरमुया शयाना । होतृषदना हरिताः सुवर्णाः । निष्का इमे यजमानस्य ब्रध्ने ५४

परिस्तृणीत परिधत्ताग्निम् । परिहितोऽग्निर्यजमानं भुनक्तु । अपाँ रस ओषधीनाँ सुवर्णः । निष्का इमे यजमानस्य सन्तु कामदुघाः । अमुत्रामुष्मिँल्लोके । भूपते भुवनपते । महतो भूतस्य पते । ब्रह्माणं त्वा वृणीमहे । अहं भूपतिरहं

भुवनपतिः । अहं महतो भूतस्य पतिः ५५

देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देव सवितरेतं त्वा वृणते । बृहस्पतिं दैव्यं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्रियै । गायत्री त्रिष्टुभे । त्रिष्टुब्जगत्यै । जगत्यनुष्टुभे । अनुष्टुक्पङ्क्त्यै । पङ्क्तिः प्रजापतये ५६

प्रजापतिर्विश्वेभ्यो देवेभ्यः । विश्वे देवा बृहस्पतये । बृहस्पतिर्ब्रह्मणे । ब्रह्म भूर्भुवः सुवः । बृहस्पतिर्देवानां ब्रह्मा । अहं मनुष्याणाम् । बृहस्पते यज्ञं गोपाय । इदं तस्मै हर्म्यं करोमि । यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्वी ५७

अन्तर्दूतश्चरति मानुषीषु । चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय । मह्यं धुक्ष्व यजमानाय कामान् । भूमिर्भूत्वा महिमानं पुपोष । ततो देवी वर्धयते पयाँसि । यज्ञिया यज्ञं वि च यन्ति सँ च । ओषधीराप इह शक्वरीश्च । यो मा हृदा मनसा यश्च वाचा ५८

यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यः श्रुतेन हृदयेनेष्णता च । तस्येन्द्र वज्रेण शिरश्छिनद्मि । ऊर्णामृदु प्रथमानँ स्योनम् । देवेभ्यो जुष्टँ सदनाय बर्हिः । सुवर्गे लोके यजमानँ हि धेहि । मां नाकस्य पृष्ठे परमे व्योमन् । चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय ५९

सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि । स्योना च मे सुषदा चैधि । ऊर्जस्वती च मे पयस्वती चैधि । इषमूर्जं मे पिन्वस्व । ब्रह्म तेजो मे पिन्वस्व । क्षत्रमोजो मे पिन्वस्व । विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व । प्रजां पशून्मे पिन्वस्व ६०

अस्मिन्यज्ञ उप भूय इन्नु मे । अविक्षोभाय परिधीन्दधामि । धर्ता धरुणो

धरीयान् । अग्निर्द्वेषाँसि निरितो नुदातै । विच्छिनद्मि विधृतीभ्याँ सपत्नान् । जातान्भ्रातृब्यान्ये च जनिष्यमानाः । विशो यन्त्राभ्यां विधमाम्येनान् । अहँ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिम् । विश्वं पाप्मानममतिं दुर्मरायुम् ६१

सीदन्ती देवी सुकृतस्य लोके । धृती स्थो विधृती स्वधृती ।प्राणान्मयि धारयतम् । प्रजां मयि धारयतम् । पशून्मयि धारयतम् । अयं प्रस्तर उभयस्य धर्ता । धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपाः । तस्मिन्त्स्रुचो अध्यासादयामि । आरोह पथो जुहु देवयानान् ६२

यत्रर्षयः प्रथमजा ये पुराणाः । हिरण्यपक्षाजिरा सम्भृताङ्गा । वहासि मा सुकृतां यत्र लोकाः । अवाहं बाध उपभृता सपत्नान् । जातान्भ्रातृव्यान्ये च जनिष्यमाणाः । दोहं यज्ञँ सुदुघामिव धेनुम् । अहमुत्तरो भूयासम् । अधरे मत्सपत्नाः । यो मा वाचा मनसा दुर्मरायुः । हृदारातीयादभिदासदग्ने ६३

इदमस्य चित्तमधरं ध्रुवायाः । अहमुत्तरो भूयासम् । अधरे मत्सपत्नाः । ऋषभोऽसि शाक्वरः । घृताचीनाँ सूनुः । प्रियेण नाम्ना प्रिये सदसि सीद । स्योनो मे सीद सुषदः पृथिव्याम् । प्रथयि प्रजया पशुभिः सुवर्गे लोके । दिवि सीद पृथिव्यामन्तरिक्षे । अहमुत्तरो भूयासम् ६४

अधरे मत्सपत्नाः । इयँ स्थाली घृतस्य पूर्णा । अच्छिन्नपयाः शतधार उत्सः । मारुतेन शर्मणा दैव्येन । यज्ञोऽसि सर्वतः श्रितः । सर्वतो मां भूतं भवैष्यच्छ्रयताम् । शतं मे सन्त्वाशिषः । सहस्रं मे सन्तु सूनृताः । इरावतीः पशुमतीः । प्रजापतिरसि सर्वतः श्रितः ६५

सर्वतो मां भूतं भविष्यच्छ्रयताम् । शतं मे सन्त्वाशिषः । सहस्रं मे सन्तु सूनृताः । इरावतीः पशुमतीः । इदमिन्द्रियममृतं वीर्यम् । अनेनेन्द्राय पशवोऽचिकित्सन् । तेन देवा अवतोऽप माम् । इहेषमूर्जं यशः सह ओजः सनेयम् । शृतं मयि श्रयताम् । यत्पृथिवीमचरत्तत्प्रविष्टम् ६६

येनासिञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवत् । येनोपरिष्टा- दधिनोन्महेन्द्रम् । दधि मां धिनोतु । अयं वेदः पृथिवीमन्वविन्दत् । गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय लोकम् । अच्छिद्रं यज्ञं भूरिकर्मा करोतु । अयं यज्ञः समसदद्धविष्मान् । ऋचा साम्ना यजुषा देवताभिः ६७

तेन लोकान्त्सूर्यवतो जयेम । इन्द्रस्य सख्यममृतत्वमश्याम् । यो नः कनीय इह कामयातै । अस्मिन्यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेताम् । अहं प्रजां वीरवतीं विदेय । अग्ने वाजजित् । वाजं त्वा सरिष्यन्तं ।वाजं जेष्यन्तम् । वाजिनं वाजजितम् ६८

वाजजित्यायै संमार्ज्मि । अग्निमन्नादमन्नाद्याय । उपहूतो द्यौः पिता । उप मां द्यौः पिता ह्वयताम् । अग्निराग्नीध्रात् । आयुषे वर्चसे जीवात्वै पुण्याय । उपहूता पृथिवी माता । उप मां माता पृथिवी ह्वयताम् । अग्निराग्नीध्रात् ६९

आयुषे वर्चसे । जीवात्वै पुण्याय । मनो ज्योतिर्जुषतामाज्यम् । विच्छिन्नं यज्ञँ समिमं दधातु । बृहस्पतिस्तनुतामिमं नः । विश्वे देवा इह मादयन्ताम् । यं ते अग्न आवृश्चामि । अहं वा क्षिपितश्चरन् । प्रजां च तस्य मूलं च । नीचैर्देवा निवृश्चत ७०

अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदः । यं चाहं द्वेष्मि यश्च माम् । सर्वाँस्तानग्ने संदह । याँश्चाहं द्वेष्मि ये च माम् । अग्ने वाजजित् । वाजं त्वा ससृवाँसम् ७१

वाजं जिगिवाँसम् । वाजिनं वाजजितम् । वाजजित्यायै संमार्ज्मि । अग्निमन्नादमन्नाद्याय । वेदिर्बर्हिः शृतँ हविः । इध्मः परिधयः स्रुचः । आज्यं यज्ञ ऋचो यजुः । याज्याश्च वषट्काराः । सं मे संनतयो नमन्ताम् । इध्मसंनहने हुते ७२

दिवः खीलोऽवततः । पृथिव्या अध्युत्थितः । तेना सहस्रकाण्डेन । द्विषन्तँ शोचयामसि । द्विषन्मे बहु शोचतु । ओषधे मो अहँ शुचम् । यज्ञ नमस्ते यज्ञ । नमो नमश्च ते यज्ञ । शिवेन मे संतिष्ठस्व । स्योनेन मे संतिष्ठस्व ७३

सुभूतेन मे संतिष्ठस्व । ब्रह्मवर्चसेन मे संतिष्ठस्व । यज्ञस्यर्द्धिमनु संतिष्ठस्व । उप ते यज्ञ नमः । उप ते नमः । उप ते नमः । त्रिष्फलीक्रियमाणानाम् । यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयम् । आपस्तत्प्रवहतादितः ७४

उलूखले मुसले यच्च शूर्पे । आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि । विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीः । अग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि । उद्यन्नद्य मित्रमहः । सपत्नान्मे अनीनशः । दिवैनान्विद्युता जहि । निम्रोचन्नधरान्कृधि ७५

उद्यन्नद्य वि नो भज । पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे । तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमहः । आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य । हरिमाणं च नाशय । शुकेषु मे हरिमाणम् । रोपणाकासु दध्मसि ७६

अथो हारिद्रवेषु मे । हरिमाणं निदध्मसि । उदगादयमादित्यः । विश्वेन सहसा सह । द्विषन्तं मम रन्धयन् । मो अहं द्विषतो रधम् । यो नः शपादशपतः । यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च । सर्वं पापँ समूहताम् ७७यो नः सपत्नो यो रणः । मर्तोऽभिदासति देवाः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किं चन । अवसृष्टः परापत । शरो ब्रह्मसँशितः । गच्छामित्रान्प्रविश । मैषां कं चनोच्छिषः ७८

सन्नेदं पश्य । विधर्तरिदं पश्य । नाकेदं पश्य । रमतिः पनिष्ठा । ऋतं वर्षिष्ठम् । अमृता यान्याहुः । सूर्यो वरिष्ठो अक्षभिर्विभाति । अनु द्यावा-पृथिवी देवपुत्रे । दीक्षासि तपसो योनिः । तपोऽसि ब्रह्मणो योनिः ७९

ब्रह्मासि क्षत्रस्य योनिः । क्षत्रमस्यृतस्य योनिः । ऋतमसि भूर् । आरभे

। श्रद्धां मनसा । दीक्षां तपसा । विश्वस्य भुवनस्याधिपत्नीम् । सर्वे कामा यजमानस्य सन्तु । वातं प्राणं मनसान्वारभामहे । प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वँहसः ८०

ज्योग्जीवा जरामशीमहि । इन्द्र शाक्वर गायत्रीं प्रपद्ये । तां ते युनज्मि । इन्द्र शाक्वर त्रिष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्र शाक्वर जगतीं प्रपद्ये । तां ते युनज्मि । इन्द्र शाक्वरानुष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्र शाक्वर पङ्क्तिं प्रपद्ये ८१

तां ते युनज्मि । आहं दीक्षामरुहमृतस्य पत्नीम् । गायत्रेण छन्दसा ब्रह्मणा च । ऋतँ सत्येऽधायि । सत्यमृतेऽधायि । ऋतं च मे सत्यं चाभूताम् । ज्योतिरभूवँ सुवरगमम् । सुवर्गं लोकं नाकस्य पृष्ठम् । ब्रध्नस्य विष्टपमगमम् । पृथिवी दीक्षा ८२

तयाग्निर्दीक्षया दीक्षितः । ययाग्निर्दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । अन्तरिक्षं दीक्षा । तया वायुर्दीक्षया दीक्षितः । यया वायुर्दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । द्यौर्दीक्षा । तयादित्यो दीक्षया दीक्षितः । ययादित्यो दीक्षया दीक्षितः ८३

तया त्वा दीक्षया दीक्षयामि । दिशो दीक्षा । तया चन्द्रमा दीक्षया दीक्षितः । यया चन्द्रमा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । आपो दीक्षा । तया वरुणो राजा दीक्षया दीक्षितः । यया वरुणो राजा दीक्षया दीक्षितः । आ त्वा दीक्षया दीक्षयामि । ओषधयो दीक्षा ८४

तया सोमो राजा दीक्षया दीक्षितः । यया सोमो राजा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । वाग्दीक्षा । तया प्राणो दीक्षया दीक्षितः । यया प्राणो दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । पृथिवी त्वा दीक्षमाणमनु दीक्षताम् । अन्तरिक्षं त्वा दीक्षमाणमनु दीक्षताम् । द्यौस्त्वा दीक्षमाणमनु दीक्षताम् ८५

दिशस्त्वा दीक्षमाणमनु दीक्षन्ताम् । आपस्त्वा दीक्षमाणमनु दीक्षन्ताम् । ओषधयस्त्वा दीक्षमाणमनु दीक्षन्ताम् । वाक्त्वा दीक्षमाणमनु दीक्षताम् । ऋचस्त्वा दीक्षमाणमनु दीक्षन्ताम् । सामानि त्वा दीक्षमाणमनु दीक्षन्ताम् । यजूँषि त्वा दीक्षमाणमनु दीक्षन्ताम् । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च ८६

आपश्चौषधयश्च । ऊर्क्च सूनृता च । तास्त्वा दीक्षमाणमनु दीक्षन्ताम् । स्वे दक्षे दक्षपितेह सीद । देवानाँ सुम्नो महते रणाय । स्वासस्थस्तनुवा संविशस्व । पितेवैधि सूनव आसुशेवः । शिवो मा शिवमाविश । सत्यं म आत्मा । श्रद्धा मेऽक्षितिः ८७

तपो मे प्रतिष्ठा । सवितृप्रसूता मा दिशो दीक्षयन्तु । सत्यमस्मि । अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः । आजुह्वानः सुप्रतीकः पुरस्तात् । अग्ने स्वां योनिमासीद साध्या । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् ८८

विश्वे देवा यजमानश्च सीदत । एकमिषे विष्णुस्त्वान्वेतु । द्वे ऊर्जे विष्णुस्त्वान्वेतु । त्रीणि व्रताय विष्णुस्त्वान्वेतु । चत्वारि मायोभवाय विष्णुस्त्वान्वेतु । पञ्च पशुभ्यो विष्णुस्त्वान्वेतु । षड्रायस्पोषाय विष्णुस्त्वान्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु । सखायः सप्तपदा अभूम । सख्यं ते गमेयम् ८९

सख्यात्ते मा योषम् । सख्यान्मे मा योष्ठाः । सासि सुब्रह्मण्ये । तस्यास्ते पृथिवी पादः । सासि सुब्रह्मण्ये । तस्यास्तेऽन्तरिक्षं पादः । सासि सुब्रह्मण्ये । तस्यास्ते द्यौः पादः । सासि सुब्रह्मण्ये । तस्यास्ते दिशः पादः ९०

परोरजास्ते पञ्चमः पादः । सा न इषमूर्जं धुक्ष्व । तेज इन्द्रियम् । ब्रह्म-वर्चसमन्नाद्यम् । विमिमे त्वा पयस्वतीम् । देवानां धेनुँ सुदुघामनपस्फु-रन्तीम् । इन्द्रः सोमं पिबतु । क्षेमो अस्तु नः । इमां नराः कृणुत वेदिमेत्य

। वसुमतीँ रुद्रवतीमादित्यवतीम् ९१

वर्ष्मन्दिवः । नाभा पृथिव्याः । यथायं यजमानो न रिष्येत् । देवस्य सवितुः सवे । चतुःशिखरडा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । तस्याँ सुपर्णावधि यौ निविष्टौ । तयोर्देवानामधि भागधेयम् । अप जन्यं भयं नुद । अप चक्राणि वर्तय । गृहँ सोमस्य गच्छतम् । न वा उवेतन्म्रियसे न रिष्यसि । देवाँ इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवः सविता दधातु ९२

यदस्य पारे रजसः । शुक्रं ज्योतिरजायत । तन्नः पर्षदति द्विषः । अग्ने वैश्वानर स्वाहा । यस्माद्भीषावाशिष्ठाः । ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड । नमो रुद्राय मीढुषे । यस्माद्भीषा न्यषदः । ततो नो अभयं कृधि ९३

प्रजाभ्यः सर्वाभ्यो मृड । नमो रुद्राय मीढुषे । उदुस्त्र तिष्ठ प्रतितिष्ठ मा रिषः । मेमं यज्ञं यजमानं च रीरिषः । सुवर्गे लोके यजमानँ हि धेहि । शं न एधि द्विपदे शं चतुष्पदे । यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः । ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड । नमो रुद्राय मीढुषे ९४

य इदमकः । तस्मै नमः । तस्मै स्वाहा । न वा उवेतन्म्रियसे । ।आशानां त्वा । विश्वा आशाः । यज्ञस्य हि स्थ ऋत्वियौ । इन्द्राग्नी चेतनस्य च । हुताहुतस्य तृप्यतम् । अहुतस्य हुतस्य च । हुतस्य चाहुतस्य च । अहुतस्य हुतस्य च । इन्द्राग्नी अस्य सोमस्य । वीतं पिबतं जुषेथाम् । मा यजमानं तमो विदत् । मर्त्विजो मो इमाः प्रजाः । मा यः सोममिमं पिबात् । सँसृष्टमुभयं कृतम् ९५

अनागसस्त्वा वयम् । इन्द्रेण प्रेषिता उप । वायुष्टे अस्त्वँशभूः । मित्रस्ते अस्त्वँशभूः । वरुणस्ते अस्त्वँशभूः । अपां क्षया ऋतस्य गर्भाः । भुवनस्य गोपाः श्येना अतिथयः । पर्वतानां ककुभः प्रयुतो नपातारः । वग्नुनेन्द्रँ ह्वयत । घोषेणामीवाँश्चातयत ९६

युक्ताः स्थ वहत । देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः । एन्द्रमचुच्यवुः परमस्याः परावतः । आस्मात्सधस्थात् । ओरोरन्तरिक्षात् । आ सुभूतमसुषवुः । ब्रह्मवर्चसं म आसुषवुः । समरे रक्षाँस्यवधिषुः । अपहतं ब्रह्मज्यस्य । वाक्च त्वा मनश्च श्रिणीताम् ९७

प्राणश्च त्वापानश्च श्रीणीताम् । चक्षुश्च त्वा श्रोत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । आयुश्च त्वा जरा च श्रीणीताम् । आत्मा च त्वा तनूश्च श्रीणीताम् । शृतोऽसि शृतंकृतः । शृताय त्वा शृतेभ्यस्त्वा । यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः ९८

यो देवानां देवतमस्तपोजाः । तस्मै त्वा तेभ्यस्त्वा । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यम् । त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । तस्य दोहमशीमहि ९९

तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । वाग्जुषाणा सोमस्य तृप्यतु । मित्रो जनान् । प्र स मित्र । ।यस्मान्न जातः परो अन्यो अस्ति । य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानः । त्रीणि ज्योतींषि सचते स षोडशी ।एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे १००

प्र ते महे विदथेऽशँसिषँ हरी ।य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् । इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिरः । इन्द्राधिपतेऽधिपतिस्त्वं देवानामसि । अधिपतिं माम् । आयुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु १०१

इन्द्रश्च सम्राड्वरुणश्च राजा । तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं भक्षयामि । वाग्जुषाणा सोमस्य तृप्यतु । प्रजापतिर्विश्वकर्मा । तस्य मनो देवं यज्ञेन राध्यासम् । अर्थेगा अस्यजहितः । अवसानपतेऽवसानं मे विन्द । नमो रुद्राय वास्तोष्पतये । आयने विद्रवणे १०२

उद्याने यत्परायणे । आवर्तने विवर्तने । यो गोपायति तँ हुवे । यान्यपामित्यान्यप्रतीत्तान्यस्मि । यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामः । जीवा जीवेभ्यो निहराम एनत् । अनृणा अस्मिन्ननृणाः परस्मिन् । तृतीये लोके अनृणाः स्याम । ये देवयाना उत पितृयाणाः १०३

सर्वान्पथो अनृणा आत्तीयेम । इदमू नु श्रेयोऽवसानमागन्म । शिवे नो द्यावापृथिवी उभे इमे । गोमद्धनवदश्ववदूर्जस्वत् । सुवीरा वीरैरनु संचरेम । अर्कः पवित्रँ रजसो विमानः । पुनाति देवानां भुवनानि विश्वा । द्यावापृथिवी पयसा संविदाने । घृतं दुहाते अमृतं प्रपीने । पवित्रमर्को रजसो विमानः । पुनाति देवानां भुवनानि विश्वा । सुवर्ज्योतिर्यशो महत् । अशीमहि गाधमुत प्रतिष्ठाम् १०४

उदस्तांप्सीत्सविता मित्रो अर्यमा । सर्वानमित्रानवधीद्युगेन । बृहन्तं मामकरद्वीरवन्तम् । रथंतरे श्रयस्व स्वाहा पृथिव्याम् । वामदेव्ये श्रयस्व स्वाहान्तरित्ते । बृहति श्रयस्व स्वाहा दिवि । बृहता त्वोपस्तभ्नोमि । आ त्वा ददे यशसे वीर्याय च । अस्मास्वघ्निया यूयं दधाथेन्द्रियं पयः । यस्ते द्रप्सो यस्त उदर्षः १०५

दैव्यः केतुर्विश्वं भुवनमाविवेश । स नः पाह्यरिष्टचै स्वाहा । अनु मा सर्वो यज्ञोऽयमेतु । विश्वे देवा मरुतः सामार्कः । आप्रियश्छन्दाँसि निविदो यजूँषि । अस्यै पृथिव्यै यद्यज्ञियम् । प्रजापतेर्वर्तनिमनुवर्तस्व । अनु वीरैरनुराध्याम गोभिः । अन्वश्वैरनु सर्वैरु पुष्टैः । अनु प्रजयान्विन्द्रियेण १०६

देवा नो यज्ञमृजुधा नयन्तु । प्रति त्तत्रे प्रति तिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रति प्रजायां प्रतितिष्ठामि भव्ये । विश्वमन्याभिवावृधे । तदन्यस्यामधि श्रितम् । दिवे च विश्वकर्मणे । पृथिव्यै चाकरं नमः । अस्कान्द्यौः पृथिवीम् । अस्कानृषभो युवा गाः १०७

स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजनि ।

आ स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहि । ये देवा येषामिदं भागधेयं बभूव । येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः । अग्निहोतृभ्यो देवेभ्यः स्वाहा । उत त्या नो दिवा मतिः १०८

अदितिरूत्यागमत् । सा शन्ताची मयस्करत् । अप स्त्रिधः । उत त्या दैव्या भिषजा । शं नस्करतो अश्विना । यूयातामस्मद्रपः । अप स्त्रिधः । शमग्निरग्निभिस्करत् । शं नस्तपतु सूर्यः । शं वातो वात्वरपाः १०९

अप स्त्रिधः । तदित्पदं न विचिकेत विद्वान् । यन्मृतः पुनरप्येति जीवान् । त्रिवृद्यद्भुवनस्य रथवृत् । जीवो गर्भो न मृतः स जीवात् । प्रत्यस्मै पिपीषते । विश्वानि विदुषे भर । अरंगमाय जग्मवे । अपश्चाद्दध्वने नरे । इन्दुरिन्दुमवागात् । इन्दोरिन्द्रोऽपात् । तस्य त इन्दविन्द्रपीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि ११०

ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचः । ब्रह्म यज्ञानाँ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् । आश्रावितमत्याश्रावितम् । वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनम् । यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् १११

यद्वो देवा अतिपादयानि । वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माँ अभि दुच्छुनायते । अन्यत्रास्मन्मरुतस्तन्निधेतन । ततं म आपस्तदु तायते पुनः । स्वादिष्ठा धीतिरुचथाय शस्यते । अयँ समुद्र उत विश्वभेषजः । स्वाहाकृतस्य समु तृप्णुतर्भुवः । उद्वयं तमसस्परि । ।उदु त्यं। चित्रम् ११२

इमं मे वरुण । तत्त्वा यामि । ।त्वं नो अग्ने । स त्वं नो अग्ने । ।त्वमग्ने अयासि । प्रजापते । ।इमं जीवेभ्यः परिधिं दधामि । मैषां नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीः । तिरो मृत्युं दधतां पर्वतेन । इष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा । भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा

। दौराद्धर्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ११३

ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा । यत इन्द्र भयामहे । ततो नो अभयं कृधि । मघवञ्शग्धि तव तन्न ऊतये । वि द्विषो वि मृधो जहि । स्वस्तिदा विशस्पतिः । वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः । स्वस्तिदा अभयंकरः । आभिर्गीर्भिर्यदतो न ऊनम् ११४

आप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि । भूयिष्ठभाजो अध ते स्याम । अनाज्ञातं यदाज्ञातम् । यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय । त्वँ हि वेत्थ यथातथम् । पुरुषसंमितो यज्ञः । यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय । त्वँ हि वेत्थ यथातथम् । यत्पाकत्रा मनसा दीनदक्षा न । यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन् । यजिष्ठो देवाँ ऋतुशो यजाति ११५

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चत । ऋतस्यर्तेन मामुत । देवा जीवनकाम्या यत् । वाचानृतमूदिम । अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् ११६

ऋतेन द्यावापृथिवी ।ऋतेन त्वँ सरस्वति । ऋतान्मा मुञ्चताँहसः । यदन्यकृतमारिम । सजातशँसादुत वा जामिशँसात् । ज्यायसः शँसादुत वा कनीयसः । अनाज्ञातं देवकृतं यदेनः । तस्मात्त्वमस्मान्जातवेदो मुमुग्धि । यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ११७

शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः । यद्धस्ताभ्यां चकर किल्बिषाणि । अक्षाणां वग्नुमुपजिघ्नमानः । दूरेपश्या च राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि । अदीव्यन्नृणं यदहं चकार । यद्वादास्यन्त्संजगारा जनेभ्यः । अग्निर्मा तस्मादेनसः । यन्मयि माता गर्भे सति ११८

एनश्चकार यत्पिता । अग्निर्मा तस्मादेनसः । यदापिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् । अहिंसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि । यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिंसिम । अगिर्मा तस्मादेनसः । यदाशसा निशसा यत्पराशसा ११९

यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा तस्मादेनसः । अतिक्रामामि दुरितं यदेनः । जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतां नु लोकम् । त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मामृजे । ततो मा यदि किं चिदानशे । अग्निर्मा तस्मादेनसः १२०

गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् । दिवि जाता अप्सु जाताः । या जाता ओषधीभ्यः । अथो या अग्निजा आपः । ता नः शुन्धन्तु शुन्धनीः । यदापो नक्तं दुरितं चराम । यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीत नः । इमं मे वरुण । तत्त्वा यामि । ।त्वं नो अग्ने । स त्वं नो अग्ने । त्वमग्ने अयासि १२१

यत्ते ग्राव्णा चिच्छिदुः सोम राजन् । प्रियाण्यङ्गानि स्वधिता परूँषि । तत्संधत्स्वाज्येनोत वर्धयस्व । अनागसो अधमित्संक्षयेम । यत्ते ग्रावा बाहुच्युतो अचुच्यवुः । नरो यत्ते दुदुहुर्दक्षिणेन । तत्त आप्यायतां तत्ते । निष्ट्यायतां देव सोम । यत्ते त्वचं बिभिदुर्यच्च योनिम् । यदास्थानात्प्रच्युतो वेनसि त्मना १२२

त्वया तत्सोम गुप्तमस्तु नः । सा नः संधासत्परमे व्योमन् । अहाच्छरीरं पयसा समेत्य । अन्योऽन्यो भवति वर्णो अस्य । तस्मिन्वयमुपहूतास्तव स्मः । आ नो भज सदसि विश्वरूपे । नृचक्षाः सोम उत शुश्रुगस्तु । मा नो विहासीद्गिर आवृणानः । अनागास्तनुवो वावृधानः । आ नो रूपं वहतु जायमानः १२३

उपक्षरन्ति जुह्वो घृतेन । प्रियाण्यङ्गानि तव वर्धयन्तीः । तस्मै ते सोम नम इद्वषट्च । उप मा राजन्त्सुकृते ह्वयस्व । सं प्राणापानाभ्याँ समु चक्षुषा

त्वम् । सँ श्रोत्रेण गच्छस्व सोम राजन् । यत्त आस्थितँ शमु तत्ते अस्तु । जानीतान्नः संगमने पथीनाम् । एतं जानीतात्परमे व्योमन् । वृकाः सधस्था विद रूपमस्य १२४

यदागच्छात्पथिभिर्देवयानैः । इष्टापूर्ते कृणुतादाविरस्मै । अरिष्टो राजन्नगदः परेहि । नमस्ते अस्तु चक्षसे रघूयते । नाकमारोह सह यजमानेन । सूर्यं गच्छतात्परमे व्योमन् । अभूद्देवः सविता वन्द्यो नु नः । इदानीमह्न उपवाच्यो नृभिः । वि यो रत्ना भजति मानवेभ्यः । श्रेष्ठं नो अत्र द्रविणं यथा दधत् । उप नो मित्रावरुणाविहावतम् । अन्वादीध्याथामिह नः सखाया । आदित्यानां प्रसितिर्हेतिः । उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु । आप्यायस्व । सं ते १२५

यद्दिदीक्षे मनसा यच्च वाचा । यद्वा प्राणैश्चक्षुषा यच्च श्रोत्रेण । यद्रेतसा मिथुनेनाप्यात्मना । अद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् । यदृचा साम्ना यजुषा । पशूनां चर्मन्हविषा दिदीक्षे । यच्छन्दोभिरोषधीभिर्वनस्पतौ । अद्भ्यो लोका दधिरे तेज इन्द्रियम् १२६

शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् । येन ब्रह्म येन क्षत्रम् । येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा । विश्वे देवा ऋषयो येन प्राणाः । अद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् । अपां पुष्पम-स्योषधीनाँ रसः । सोमस्य प्रियं धाम १२७

अग्नेः प्रियतमँ हविः स्वाहा । अपां पुष्पमस्योषधीनाँ रसः । सोमस्य प्रियं धाम । इन्द्रस्य प्रियतमँ हविः स्वाहा । अपां पुष्पमस्योषधीनाँ रसः । सोमस्य प्रियं धाम । विश्वेषां देवानां प्रियतमँ हविः स्वाहा । वयँ सोम व्रते तव । मनस्तनूषु पिप्रतः । प्रजावन्तो अशीमहि १२८

देवेभ्यः पितृभ्यः स्वाहा । सोम्येभ्यः पितृभ्यः स्वाहा । कव्येभ्यः पितृभ्यः

स्वाहा । देवास इह मादयध्वम् । सोम्यास इह मादयध्वम् । कव्यास इह मादयध्वम् । अनन्तरिताः पितरः सोम्याः सोमपीथात् । अपैतु मृत्युरमृतं न आगन् । वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिव १२९

अभि नः शीयताँ रयिः । सचतां नः शचीपतिः । परं मृत्यो अनु परेहि पन्थाम् । यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजाँ रीरिषो मोत वीरान् । इदमू नु श्रेयोऽवसानमागन्म । यद्गोजिद्धनजिदश्वजिद्यत् । पर्णं वनस्पतेरिव । अभि नः शीयताँ रयिः । सचतां नः शचीपतिः १३० ७

सांग्रहण्येष्ट्या यजते । इमां जनताँ संगृह्णानीति । द्वादशारत्नी रशना भवति । द्वादश मासाः संवत्सरः । संवत्सरमेवावरुन्धे । मौञ्जी भवति । ऊर्ग्वै मुञ्जाः । ऊर्जमेवावरुन्धे । चित्रा नक्षत्रं भवति । चित्रं वा एतत्कर्म १

यदश्वमेधः समृद्ध्यै । पुण्यनाम देवयजनमध्यवस्यति । पुण्यामेव तेन कीर्तिमभिजयति । अपदातीनृत्विजः समावहन्त्या सुब्रह्मण्यायाः । सुवर्गस्य लोकस्य समष्ट्यै । केशश्मश्रु वपते । नखानि निकृन्तते । दतो धावते । स्नाति । अहतं वासः परिधत्ते । पाप्मनोऽपहत्यै । वाचं यत्वोपवसति । सुवर्गस्य लोकस्य गुप्त्यै । रात्रिं जागरयन्त आसते । सुवर्गस्य लोकस्य समष्ट्यै २

चतुष्टय्य आपो भवन्ति । चतुःशफो वा अश्वः प्राजापत्यः समृद्ध्यै । ता दिग्भ्यः समाभृता भवन्ति । दिक्षु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तदवरुन्धे । तासु ब्रह्मौदनं पचति । रेत एव तद्दधाति ३

चतुःशरावो भवति । दिक्ष्वेव प्रति तिष्ठति । उभयतो रुक्मौ भवतः । उभयत एवास्मिन्रुचं दधाति । उद्धरति शृतत्वाय । सर्पिष्वान्भवति मेध्यत्वाय । चत्वार आर्षेयाः प्राश्नन्ति । दिशामेव ज्योतिषि जुहोति । चत्वारि हिरण्यानि ददाति । दिशामेव ज्योतीँष्यवरुन्धे ४

यदाज्यमुच्छिष्यते । तस्मिन्नशनां न्युनत्ति । प्रजापतिर्वा ओदनः । रेत आज्यम् । यदाज्ये रशनां न्युनत्ति । प्रजापतिमेव रेतसा समर्धयति । दर्भमयी रशना भवति । बहु वा एष कुचरोऽमेध्यमुपगच्छति । यदश्वः । पवित्रं वै दर्भाः ५

यद्दर्भमयी रशणा भवति । पुनात्येवैनम् । पूतमेनं मेध्यमालभते । अश्वस्य वा आलब्धस्य महिमोदक्रामत् । स महर्त्विजः प्राविशत् । तन्महर्त्विजां महर्त्विक्त्वम् । यन्महर्त्विजः प्राश्नन्ति । महिमानमेवास्मिन्तद्दधति । अश्वस्य वा आलब्धस्य रेत उदक्रामत् । तत्सुवर्णँ हिरण्यमभवत् । यत्सुवर्णँ हिरण्यं ददाति । रेत एव तद्दधाति । ओदने ददाति । रेतो वा ओदनः । रेतो हिरण्यम् । रेतसैवास्मिन्रेतो दधाति ६

यो वै ब्रह्मणे देवेभ्यः प्रजापतयेऽप्रतिप्रोच्याश्वं मेध्यं बध्नाति । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यः प्रतिप्रोच्य । न देवताभ्य आवृश्च्यते । वसीयान्भवति । यदाह । ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति । ब्रह्म वै ब्रह्मा । ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्याश्वं मेध्यं बध्नाति ७

न देवताभ्य आवृश्च्यते । वसीयान्भवति । देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । व्यृद्धं वा एतद्यज्ञस्य । यदयजुष्केण क्रियते । इमामगृभ्णन्रशनामृतस्येत्यधिवदति यजुष्कृत्यै । यज्ञस्य समृद्ध्यै ८

तदाहुः । द्वादशारत्नी रशना कर्तव्या३ त्रयोदशारत्नी३रिति । ऋषभो वा एष ऋतूनाम् । यथा संवत्सरः । तस्य त्रयोदशो मासो विष्टपम् । ऋषभ एष यज्ञानाम् । यदश्वमेधः । यथा वा ऋषभस्य विष्टपम् । एवमेतस्य विष्टपम् । त्रयोदशमरत्निँ रशनायामुपादधाति ९

यथर्षभस्य विष्टपँ सँस्करोति । तादृगेव तत् । पूर्व आयुषि विदथेषु

कव्येत्याह । आयुरेवास्मिन्दधाति । तया देवाः सुतमाबभूवुरित्याह । भूतिमेवोपावर्तते । ऋतस्य सामन्त्सरमारपन्तीत्याह । सत्यं वा ऋतम् । सत्येनैवैनमृतेनारभते । अभिधा असीत्याह १०

तस्मादश्वमेधयाजी सर्वाणि भूतान्यभिभवति । भुवनमसीत्याह । भूमानमेवोपैति । यन्तासीत्याह । यन्तारमेवैनं करोति । धर्तासीत्याह । धर्तारमेवैनं करोति । सोऽग्निं वैश्वानरमित्याह । अग्नावेवैनं वैश्वानरे जुहोति । सप्रथसमित्याह ११

प्रजयैवैनं पशुभिः प्रथयति । स्वाहाकृत इत्याह । होम एवास्यैषः । पृथिव्यामित्याह । अस्यामेवैनं प्रतिष्ठापयति । यन्ता राडयन्तासि यमनो धर्तासि धरुण इत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वेत्याह । आशिषमेवैतामाशास्ते । स्वगा त्वा देवेभ्य इत्याह । देवेभ्य एवैनँ स्वगा करोति । स्वाहा त्वा प्रजापतय इत्याह । प्राजापत्यो वा अश्वः । यस्या एव देवताया आलभ्यते । तयैवैनँ समर्धयति १२

यः पितुरनुजायाः पुत्रः । स पुरस्तान्नयति । यो मातुरनुजायाः पुत्रः । स पश्चान्नयति । विष्वञ्चमेवास्मात्पाप्मानं विवृहतः । यो अर्वन्तं जिघाँसति तमभ्यमीति वरुण इति श्वानं चतुरक्षं प्रसौति । परो मर्तः परः श्वेति शुनश्च-तुरक्षस्य प्रहन्ति । श्वेव वै पाप्मा भ्रातृव्यः । पाप्मानमेवास्य भ्रातृव्यँ हन्ति । सैध्रकं मुसलं भवति १३

कर्मकर्मैवास्मै साधयति । पौँश्चलेयो हन्ति । पुँश्चल्वां वै देवाः शुचं न्यदधुः । शुचैवास्य शुचँ हन्ति । पाप्मा वा एतमीप्सतीत्याहुः । योऽश्वमेधेन यजत इति । अश्वस्याधस्पदमुपास्यति । वज्री वा अश्वः प्राजापत्यः । वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति । दक्षिणापप्लावयति १४

पाप्मानमेवास्माच्छमलमपप्लावयति । ऐषीक उदूहो भवति । आयुर्वा इषीकाः । आयुरेवास्मिन्दधति । अमृतं वा इषीकाः । अमृतमेवास्मिन्दधति

। वेतसशाखोपसंबद्धा भवति । अप्सुयोनिर्वा अश्वः । अप्सुजो वेतसः । स्वादेवैनं योनिर्निर्मिमीते । पुरस्तात्प्रत्यञ्चमभ्युदूहति । पुरस्तादेवास्मि-न्प्रतीच्यमृतं दधाति । अहं च त्वं च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति । ब्रह्मक्षत्रे एव संदधाति । अभि क्रत्वेन्द्र भूरध ज्मन्नित्यध्वर्युर्यजमानं वाचयत्यभिजित्यै १५

चत्वार ऋत्विजः समुक्षन्ति । आभ्य एवैनं चतसृभ्यो दिग्भ्योऽभिसमीरयन्ति । शतेन राजपुत्रैः सहाध्वर्युः । पुरस्तात्प्रत्यङ्तिष्ठन्प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयँ राजा वृत्रं वध्यादिति । राज्यं वा अध्वर्युः । क्षत्रँ राजपुत्रः । राज्येनैवास्मिन्क्षत्रं दधाति । शतेनाराजभिरुग्रैः सह ब्रह्मा १६

दक्षिणत उदङ्तिष्ठन्प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयँ राजाप्रतिधृष्यो-ऽस्त्विति । बलं वै ब्रह्मा । बलमराजोग्रः । बलेनैवास्मिन्बलं दधाति । शतेन सूतग्रामणिभिः सह होता । पश्चात्प्राङ्तिष्ठन्प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयँ राजास्यै विशः १७

बहुग्वै बह्वश्वायै बह्वजाविकायै । बहुव्रीहियवायै बहुमाषतिलायै । बहुहि-रण्यायै बहुहस्तिकायै । बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै । बहुराय-स्पोषायै राजास्त्विति । भूमा वै होता । भूमा सूतग्रामण्यः । भूम्नैवा-स्मिन्भूमानं दधाति । शतेन क्षत्तसंग्रहीतृभिः सहोद्गाता । उत्तरतो दक्षिणा तिष्ठन्प्रोक्षति १८

अनेनाश्वेन मेध्येनेष्ट्वा । अयँ राजा सर्वमायुरेत्विति । आयुर्वा उद्गाता । आयुः क्षत्तसंग्रहीतारः । आयुषैवास्मिन्नायुर्दधाति । शतँशतं भवन्ति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति चतुःशता भवन्ति । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति १९

यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एतदश्वस्य स्कन्दति । यन्निक्तमनालब्धमुत्सृजन्ति । यत्स्तोक्या अन्वाह । सर्वहुतमेवैनं करोत्यक्सन्दाय । अस्कन्नँ हि तत् । यद्धुतस्य स्कन्दति । सहस्रमन्वाह

। सहस्रसंमितः सुवर्गो लोकः । सुवर्गस्य लोकस्याभिजित्यै २०

यत्परिमिता अनुब्रूयात् । परिमितमवरुन्धीत । अपरिमिता अन्वाह । अपरिमितः सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै । स्तोक्या जुहोति । या एव वर्ष्या आपः । ता अवरुन्धे । अस्यां जुहोति । इयं वा अग्निर्वैश्वानरः २१

अस्यामेवैनाः प्रतिष्ठापयति । उवाच ह प्रजापतिः । स्तोक्यासु वा अहमश्वमेधँ सँस्थापयामि । तेन ततः सँस्थितेन चरामीति । अग्नये स्वाहेत्याह । अग्नय एवैनं जुहोति । सोमाय स्वाहेत्याह । सोमायैवैनं जुहोति । सवित्रे स्वाहेत्याह । सवित्र एवैनं जुहोति २२

सरस्वत्यै स्वाहेत्याह । सरस्वत्या एवैनं जुहोति । पूष्णे स्वाहेत्याह । पूष्ण एवैनं जुहोति । बृहस्पतये स्वाहेत्याह । बृहस्पतय एवैनं जुहोति । अपां मोदाय स्वाहेत्याह । अद्भ्य एवैनं जुहोति । वायवे स्वाहेत्याह । वायव एवैनं जुहोति २३

मित्राय स्वाहेत्याह । मित्रायैवैनं जुहोति । वरुणाय स्वाहेत्याह । वरुणायैवैनं जुहोति । एताभ्य एवैनं देवताभ्यो जुहोति । दशदश संपादं जुहोति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । प्र वा एषोऽस्माल्लोकाच्च्यवते । यः पराचीराहुतीर्जुहोति । पुनःपुनरभ्यावर्तं जुहोति । अस्मिन्नेव लोके प्रतितिष्ठति । एताँ ह वाव सोऽश्वमेधस्य सँस्थितिमुवाचास्कन्दाय । अस्कन्नँ हि तत् । यद्यज्ञस्य सँस्थितस्य स्कन्दति २४

प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात्प्रत्यङ्तिष्ठन्प्रोक्षति । प्रजापतिर्वै देवानामन्नादो वीर्यावान् । अन्नाद्यमेवास्मिन्वीर्यं दधाति । तस्मादश्वः पशूनामन्नादो वीर्यावत्तमः । इन्द्राग्निभ्यां त्वेति दक्षिणतः । इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ । ओज एवास्मिन्बलं दधाति । तस्मादश्वः पशूना-मोजिष्ठो बलिष्ठः । वायवे त्वेति पश्चात् । वायुर्वै देवानामाशुः सारसारितमः

२५

जवमेवास्मिन्दधाति । तस्मादश्वः । पशूनामाशुः सारसारितमः । विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतः । विश्वे वै देवा देवानां यशस्वितमाः । यश एवास्मिन्दधाति । तस्मादश्वः पशूनां यशस्वितमः । देवेभ्यस्त्वे-त्यधस्तात् । देवा वै देवानामपचिततमाः । अपचितिमेवास्मिन्दधाति । तस्मादश्वः पशूनामपचिततमः २६

सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात् । सर्वे वै देवास्त्विषिमन्तो हरस्विनः । त्विषिमेवास्मिन्हरो दधाति । तस्मादश्वः पशूनां त्विषिमान्हरस्वितमः । दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्याह । एभ्य एवैनं लोकेभ्यः प्रोक्षति । सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भुतेभ्य इत्याह । तस्मादश्वमेधयाजिनँ सर्वाणि भुतान्युपजीवन्ति । ब्रह्मवादिनो वदन्ति । यत्प्राजापत्योऽश्वः । अथ कस्मादेनमन्याभ्यो देवताभ्योऽपि प्रोक्षतीति । अश्वे वै सर्वा देवता अन्वायत्ताः । तं यद्विश्वेभ्यस्त्वा भूतेभ्य इति प्रोक्षति । देवता एवास्मिन्नन्वायातयति । तस्मादश्वे सर्वा देवता अन्वायत्ताः २७

यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एतदश्वस्य स्कन्दति । यत्प्रोक्षितमनालब्धमुत्सृजन्ति । यदश्वचरितानि जुहोति । सर्वहुतमेवैनं करोत्यस्कन्दाय । अस्कन्नँ हि तत् । यद्धुतस्य स्कन्दति । ईंकाराय स्वाहेंकृताय स्वाहेत्याह । एतानि वा अश्वचरितानि । चरितैरेवैनँ समर्धयति २८

तदाहुः । अनाहुतयो वा अश्वचरितानि । नैता होतव्या इति । अथो खल्वाहुः । होतव्या एव । अत्र वावैवं विद्वानश्वमेधँ सँस्थापयति । यदश्वचरितानि जुहोति । तस्माद्धोतव्या इति । बहिर्धा वा एनमेतदायतनाद्दधाति । भ्रातृव्यमस्मै जनयति २९

यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति । सावित्रिया इष्ट्याः पुरस्तात्स्विष्टकृतः । आहवनीयेऽश्वचरितानि जुहोति । आयतन एवास्याहुतीर्जुहोति । नास्मै

भ्रातृव्यं जनयति । तदाहुः । यज्ञमुखेयज्ञमुखे होतव्याः । यज्ञस्य क्ल्प्त्यै । सुवर्गस्य लोकस्यानुख्यात्या इति । अथो खल्वाहुः ३०

यद्यज्ञमुखेयज्ञमुखे जुहुयात् । पशुभिर्यजमानं व्यर्धयेत् । अव सुवर्गाल्लोकात्पद्येत । पापीयान्त्स्यादिति । सकृदेव होतव्याः । न यजमानं पशुभिर्व्यर्धयति । अभि सुवर्गं लोकं जयति । न पापीयान्भवति । अष्टाचत्वारिँशतमश्वरूपाणि जुहोति । अष्टाचत्वारिँशदक्षरा जगती ।जागतोऽश्वः प्राजापत्यः समृद्ध्यै । एकमतिरिक्तं जुहोति । तस्मादेकः प्रजास्वर्धुकः ३१

विभूर्मात्रा प्रभूः पित्रेत्याह । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति । अश्वोऽसि हयोऽसीत्याह । शास्त्येवैनमेतत् । तस्माच्छिष्टाः प्रजा जायन्ते । अत्योऽसीत्याह । तस्मादश्वः सर्वान्पशूनत्येति । तस्मादश्वः सर्वेषां पशूनाँ श्रैष्ठ्यं गच्छति ३२

प्र यशः श्रैष्ठ्यमाप्नोति । य एवं वेद । नरोऽस्यर्वासि सप्तिरसि वाज्यसीत्याह । रूपमेवास्यैतन्माहिमानं व्याचष्टे । ययुर्नामासीत्याह । एतद्वा अश्वस्य प्रियं नामधेयम् । प्रियेणैवैनं नामधेयेनाभिवदति । तस्मादप्यामित्रौ संगत्य । नाम्ना चेद्ध्वयेते । मित्रमेव भवतः ३३

आदित्यानां पत्वान्विहीत्याह । आदित्यानेवैनं गमयति । अग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्वहोमाञ्जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति । भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्युत्सृजति सर्वत्वाय । देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायतेत्याह । शतं वै तल्प्या राजपुत्रा देवा आशापालाः । तेभ्य एवैनं परिददाति । ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः । इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेति चतृषु पत्सु जुहोति ३४

एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनमागच्छति । तस्मादश्वः प्रमुक्तो बन्धनं न जहाति । राष्ट्रं वा अश्वमेधः

। राष्ट्रे खलु वा एते व्यायच्छन्ते । येऽश्वं मेध्यँ रक्षन्ति । तेषां य उदृचं गच्छन्ति । राष्ट्रादेव ते राष्ट्रं गच्छन्ति । अथ य उदृचं न गच्छन्ति ३५राष्ट्रादेव ते व्यवच्छिद्यन्ते । परा वा एष सिच्यते । योऽबलोऽश्वमेधेन यजते । यदमित्रा अश्वं विन्देरन् । हन्येतास्य यज्ञः । चतुश्शता रक्षन्ति । यज्ञस्या- घाताय । अथान्यमानीय प्रोक्षेयुः । सैव ततः प्रायश्चित्तिः ३६

प्रजापतिरकामयताश्वमेहेन यजेयेति । स तपोऽतप्यत । तस्य तेपानस्य । सप्तात्मनो देवता उदक्रामन् । सा दीक्षाभवत् । स एतानि वैश्वदेवान्यपश्यत् । तान्यजुहोत् । तैर्वै स दीक्षामवारुन्ध । यद्वैश्वदेवानि जुहोति । दीक्षामेव तैर्यजमानोऽवरुन्धे ३७

सप्त जुहोति । सप्त हि ता देवता उदक्रामन् । अन्वहं जुहोति । अन्वहमेव दीक्षामवरुन्धे । त्रीणि वैश्वदेवानि जुहोति । चत्वार्यौद्ग्रहणानि । सप्त संपद्यन्ते । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेव प्राणान्दी- क्षामवरुन्धे ३८

एकविँशतिं वैश्वदेवानि जुहोति । एकविँशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविँशः । एष सुवर्गो लोकः । तद्दैव्यं क्षत्रम् । सा श्रीः । तद्ब्रध्नस्य विष्टपम् । तत्स्वाराज्यमुच्यते ३९

त्रिँशतमौद्ग्रहणानि जुहोति । त्रिँशदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । त्रेधा विभज्य देवतां जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । एषां लोकानामाप्त्यै । एषां लोकानां क्ळृप्त्यै । अप वा एतस्मात्प्राणाः क्रामन्ति ४०

यो दीक्षामतिरेचयति । सप्ताहं प्रचरन्ति । सप्त वै शीर्षन्याः प्राणः । प्राणा दीक्षा । प्राणैरेव प्राणान्दीक्षामवरुन्धे । पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णाहुतिः । सर्वमेवाप्नोति । अथो इयं वै पूर्णाहुतिः । अस्यामेव प्रतितिष्ठति ४१

प्रजापतिरश्वमेधमसृजत । तँ सृष्टं न किं चनोदयच्छत् । तं वैश्वदेवान्येवोदयच्छन् । यद्वैश्वदेवानि जुहोति । यज्ञस्योद्यत्यै । स्वाहाधिमाधीताय स्वाहा । स्वाहाधीतं मनसे स्वाहा । स्वाहा मनः प्रजापतये स्वाहा । काय स्वाह कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्ये मुख्ये भवतः । प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छते ४२

अदित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहेत्याह । इयं वा अदितिः । अस्या एवैनं प्रतिष्ठायोद्यच्छते । सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहेत्याह । वाग्वै सरस्वती ।वाचैवैन-मुद्यच्छते । पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वहेत्याह । पशवो वै पूषा । पशुभिरेवैनमुद्यच्छते । त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेत्याह । त्वष्टा वै पशूनां मिथुनानाँ रूपकृत् । रूपमेव पशुषु दधाति । अथो रूपैरेवैनमुद्यच्छते । विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वहा विष्णवे निभूयपाय स्वाहेत्याह । यज्ञो वै विष्णुः । यज्ञायैवैनमुद्यच्छते । पूर्णाहुतिमुत्तमां जुहोति । प्रत्युत्तब्ध्यै सयत्वाय ४३

सावित्रमष्टाकपालं प्रातर्निर्वपति । अष्टाक्षरा गायत्री ।गायत्रं प्रातःसवनम् । प्रातःसवनादेवैनं गायत्रियाश्छन्दसोऽधि निर्मिमीते । अथो प्रातःसवनमेव तेनाप्नोति । गायत्रीं छन्दः । सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने । एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिनँ सवनम् । माध्यंदिनादेवैनँ सवनात्त्रिष्टुभश्छन्दसोऽधि निर्मिमीते ४४

अथो माध्यंदिनमेव सवनं तेनाप्नोति । त्रिष्टुभं छन्दः । सवित्र आसवित्रे द्वादशकपालमपराह्णे । द्वादशाक्षरा जगती ।जागतं तृतीयसवनम् । तृतीयसवनादेवैनं जगत्याश्छन्दसोऽधि निर्मिमीते । अथो तृतीयसवनमेव तेनाप्नोति । जगतीं छन्दः । ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः । इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रन्तिः स्वाहेति चतस्र आहुतीर्जुहोति ४५

चतस्रो दिशः । दिग्भिरेवैनं परिगृह्णाति । आश्वत्थो व्रजो भवति ।

प्रजापतिर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् । यदाश्वत्थो व्रजो भवति । स्व एवैनं योनौ प्रतिष्ठापयति ४६

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत । आस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतामित्याह । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्य इषव्यः शूरो महारथोऽजायत । दोग्ध्री धेनुरित्याह । धेन्वामेव पयो दधाति । तस्मात्पुरा दोग्ध्री धेनुरजायत । वोढानड्वानियाह ४७

अनड्ह्येव वीर्यं दधाति । तस्मात्पुरा वोढानड्वानजायत । आशुः सप्तिरित्याह । अश्व एव जवं दधाति । तस्मात्पुराशुरश्वोऽजायत । पुरंधिर्योषेत्याह । योषित्येव रूपं दधाति । तस्मात्स्त्री युवतिः प्रिया भावुका । जिष्णू रथेष्ठा इत्याह । आ ह वै तत्र जिष्णू रथेष्ठा जायते ४८

यत्रैतेन यज्ञेन यजन्ते । सभेयो युवेत्याह । यो वै पूर्ववयसी ।स सभेयो युवा । तस्माद्युवा पुमान्प्रियो भावुकः । आस्य यजमानस्य वीरो जायतामित्याह । आ ह वै तत्र यजमानस्य वीरो जायते । यत्रैतेन यज्ञेन यजन्ते । निकामेनिकामे नः पर्जन्यो वर्षत्वित्याह । निकामेनिकामे ह वै तत्र पर्जन्यो वर्षति । यत्रैतेन यज्ञेन यजन्ते । फलिन्यो न ओषधयः पच्यन्तामित्याह । फलिन्यो ह वै तत्रौषधयः पच्यन्ते । यत्रैतेन यज्ञेन यजन्ते । योगक्षेमो नः कल्पतामित्याह । कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः । यत्रैतेन यज्ञेन यजन्ते ४९

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्मन्नश्वमेधमधत्त । तं देवा अब्रुवन् । एष वाव यज्ञः । यदश्वमेधः । अप्येव नोऽत्रास्त्विति । तेभ्य एतानन्नहोमान्प्रायच्छत् । तानजुहोत् । तैर्वै स देवानप्रीणात् । यदन्नहोमाञ्जुहोति ५०

देवानेव तैर्यजमानः प्रीणाति । आज्येन जुहोति । अग्नेर्वा एतद्रूपम् ।

यदाज्यम् । यदाज्येन जुहोति । अग्निमेव तत्प्रीणाति । मधुना जुहोति । महत्यै वा एतद्देवतायै रूपम् । यन्मधु । यन्मधुना जुहोति ५१

महतीमेव तद्देवतां प्रीणाति । तण्डुलैर्जुहोति । वसूनां वा एतद्रूपम् । यत्तण्डुलाः । यत्तण्डुलैर्जुहोति । वसूनेव तत्प्रीणाति । पृथुकैर्जुहोति । रुद्राणां वा एतद्रूपम् । यत्पृथुकाः । यत्पृथुकैर्जुहोति ५२

रुद्रानेव तत्प्रीणाति । लाजैर्जुहोति । आदित्यानां वा एतद्रूपम् । यल्लाजाः । यल्लाजैर्जुहोति । आदित्यानेव तत्प्रीणाति । करम्बैर्जुहोति । विश्वेषां वा एतद्देवानाँ रूपम् । यत्करम्बाः । यत्करम्बैर्जुहोति ५३

विश्वानेव तद्देवान्प्रीणाति । धानाभिर्जुहोति । नक्षत्राणां वा एतद्रूपम् । यद्धानाः । यद्धानाभिर्जुहोति । नक्षत्राण्येव तत्प्रीणाति । सक्तुभिर्जुहोति । प्रजापतेर्वा एतद्रूपम् । यत्सक्तवः । यत्सक्तुभिर्जुहोति ५४

प्रजापतिमेव तत्प्रीणाति । मसूस्यैर्जुहोति । सर्वासां वा एतद्देवताँ रूपम् । यन्मसूस्यानि । यन्मसूस्यैर्जुहोति । सर्वा एव तद्देवताः प्रीणाति । प्रियङ्गुतण्डुलैर्जुहोति । प्रियाङ्गा ह वै नामैते । एतैर्वै देवा अश्वस्याङ्गानि समदधुः । यत्प्रियङ्गुतण्डुलैर्जुहोति । अश्वस्यैवाङ्गानि संदधाति । दशान्नानि जुहोति । दशाक्षरा विराट् । विराट्कृत्स्नस्यान्नाद्यस्यावरुद्ध्यै ५५

प्रजापतिरश्वमेधमसृजत । तँ सृष्टँ रक्षाँस्यजिघाँसन् । स एतान्प्रजा-पतिर्नक्तँहोमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षाँस्यपाहन् । यन्नक्तँहोमाञ्जुहोति । यज्ञादेव तैर्यजमानो रक्षाँस्यपहन्ति । आज्येन जुहोति । वज्रो वा आज्यम् । वज्रेणैव यज्ञाद्रक्षाँस्यपहन्ति ५६

आज्यस्य प्रतिपदं करोति । प्राणो वा आज्यम् । मुखत एवास्य प्राणं दधाति । अन्नहोमाञ्जुहोति । शरीरवदेवावरुन्धे । व्यत्यासं जुहोति । उभय-स्यावरुध्यै । नक्तं जुहोति । रक्षसामपहत्यै । आज्येनान्ततो जुहोति ५७

प्राणो वा आज्यम् । उभयत एवास्य प्राणं दधाति । पुरस्ताच्चोपरिष्टाच्च । एकस्मै स्वाहेत्याह । अस्मिन्नेव लोके प्रतितिष्ठति । द्वाभ्याँ स्वाहेत्याह । अमुष्मिन्नेव लोके प्रतितिष्ठति । उभयोरेव लोकयोः प्रतितिष्ठति । अस्मिँश्चा-मुष्मिँश्च । शताय स्वाहेत्याह । शतायुर्वै पुरुषः शतवीर्यः । आयुरेव वीर्यमवरुन्धे । सहस्राय स्वाहेत्याह । आयुर्वै सहस्रम् । आयुरेवावरुन्धे । सर्वस्मै स्वाहेत्याह । अपरिमितमेवावरुन्धे ५८

प्रजापतिं वा एष ईप्सतीत्याहुः । योऽश्वमेधेन यजत इति । अथो आहुः । सर्वाणि भूतानीति । एकस्मै स्वाहेत्याह । प्रजापतिर्वा एकः । तमेवाप्नोति । एकस्मै स्वाहा द्वाभ्याँ स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । अभिपूर्वमेव सुवर्गं लोकमेति । एकोत्तरं जुहोति ५९

एकवदेव सुवर्गं लोकमेति । संततं जुहोति । सुवर्गस्य लोकस्य संतत्यै । शताय स्वाहेत्याह । शतायुर्वै पुरुषः शतवीर्यः । आयुरेव वीर्यमवरुन्धे । सहस्राय स्वाहेत्याह । आयुर्वै सहस्रम् । आयुरेवावरुन्धे । अयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह ६०

त्रय इमे लोकाः । इमानेव लोकानवरुन्धे । अर्बुदाय स्वाहेत्याह । वाग्वा अर्बुदम् । वाचमेवावरुन्धे । न्यर्बुदाय स्वाहेत्याह । यो वै वाचो भूमा । तन्न्यर्बुदम् । वाच एव भूमानमवरुन्धे । समुद्राय स्वाहेत्याह ६१

समुद्रमेवाप्नोति । मध्याय स्वाहेत्याह । मध्यमेवाप्नोति । अन्ताय स्वाहेत्याह । अन्तमेवाप्नोति । परार्धाय स्वाहेत्याह । परार्धमेवाप्नोति । उषसे स्वाहा व्युष्टयै स्वाहेत्याह । रातिर्वा उषाः । अहर्व्युष्टिः । अहोरात्रे एवावरुन्धे । अथो अहोरात्रयोरेव प्रतितिष्ठति । ता यदुभयीर्दिवा वा नक्तं वा जुहुयात् । अहोरात्रे मोहयेत् । उषसे स्वाहा व्युष्टयै स्वाहोदेष्यते स्वाहोद्यते स्वाहेत्यनुदिते जुहोति । उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते जुहोति । अहोरात्रयोरव्यतिमोहाय ६२

विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि जुहोति । उभयोरेवैनं लोकयोर्नामधेयं

गमयति । आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावाञ्जुहोति । सर्वमेवैनमस्कन्नँ सुवर्गं लोकं गमयति । अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमाञ्जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति । पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह । यथायजुरेवैतत् । अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षा जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति ६३

पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंँशिनीं दीक्षां जुहोति । एकविंँशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविंँशः । एष सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै । भुवो देवानां कर्मणेत्यृतुदीक्षा जुहोति । ऋतूनेवास्मै कल्पयति । अग्नये स्वाहा वायवे स्वाहेति जुहोत्यनन्तरित्यै ६४

अर्वाङ्यज्ञः संक्रामत्वित्याप्तीर्जुहोति । सुवर्गस्य लोकस्याप्त्यै । भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति । सुवर्गस्य लोकस्य पर्याप्त्यै । आ मे गृहा भवन्त्वित्याभूर्जुहोति । सुवर्गस्य लोकस्याभूत्यै । अग्निना तपोऽन्वभव-दित्यनुभूर्जुहोति । सुवर्गस्य लोकस्यानुभूत्यै । स्वाहाधिमाधीताय स्वाहेति समस्ताइ वैश्वदेवानि जुहोति । समस्तमेव द्विषन्तं भ्रातृव्यमतिक्रामति ६५

दद्भ्यः स्वाहा हनूभ्याँ स्वाहेत्यङ्गहोमाञ्जुहोति । अङ्गेअङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः । अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति । अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति । रूपैरेवैनँ समर्धयति । ओषधीभ्यः स्वाहा मूलेभ्यस्: स्वाहेत्योषधिहोमाञ्जुहोति । द्वय्यो वा ओषधयः । पुष्पेभ्योऽन्याः फलं गृह्णन्ति । मूलेभ्योऽन्याः । ता एवोभयीरवरुन्धे ६६

वनसपतिभ्यः स्वाहेति वनस्पतिहोमाञ्जुहोति । आरण्यस्यान्नाद्यस्यावरुध्यै । मेषस्त्वा पचतैरवत्वित्यपाव्यानि जुहोति । प्राणा वै देवा अपाव्याः । प्राणानेवावरुन्धे । कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपाँ होमाञ्जुहोति । अप्सु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तदवरुन्धे ६७

अम्भाँसि जुहोति । अयं वै लोकोऽम्भाँसि । तस्य वसवोऽधिपतयः । अग्निर्ज्योतिः । यदम्भाँसि जुहोति । इममेव लोकमवरुन्धे । वसूनाँ सायुज्यं गच्छति । अग्निं ज्योतिरवरुन्धे । नभाँसि जुहोति । अन्तरिक्षं वै नभाँसि ६८

तस्य रुद्रा अधिपतयः । वायुर्ज्योतिः । यन्नभाँसि जुहोति । अन्तरिक्षमेवा-वरुन्धे । रुद्राणाँ सायुज्यं गच्छति । वायुं ज्योतिरवरुन्धे । महाँसि जुहोति । असौ वै लोको महाँसि । तस्यादित्या अधिपतयः । सूर्यो ज्योतिः ६९

यन्महाँसि जुहोति । अमुमेव लोकमवरुन्धे । आदित्यानाँ सायुज्यं गच्छति । सूर्यं ज्योतिरवरुन्धे । नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति । अन्नाद्य-स्यावरुध्यै । मयोभूर्वातो अभि वातूस्रा इति गव्यानि जुहोति । पशूनाम-वरुध्यै । प्राणाय स्वाहा व्यानाय स्वाहेति संततिहोमञ्जुहोति । सुवर्गस्य लोकस्य संतत्यै ७०

सिताय स्वाहासिताय स्वाहेति प्रमुक्तीर्जुहोति । सुवर्गस्य लोकस्य प्रमुक्त्यै । पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह । यथायजुरेवैतत् । दत्वते स्वहा-दन्तकाय स्वाहेति शरीरहोमाञ्जुहोति । पितृलोकमेव तैर्यजमानोऽवरुन्धे । कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन्युनक्ति । इमे वै लोकाः परिधयः । इमानेवास्मै लोकान्युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै ७१

यः प्राणतो य आत्मदा इति महिमानौ जुहोति । सुवर्गो वै लोको महः । सुवर्गमेव ताभ्यां लोकं यजमानोऽवरुन्धे । आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति । ब्रह्मवर्चसमेव तैर्यजमानोऽवरुन्धे । जज्ञि बीजमिति जुहोत्यनन्तरित्यै । अग्नये समनमत्पृथिव्यै समनमदिति संनतिहोमाञ्जुहोति । सुवर्गस्य लोकस्य संनत्यै । भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति । अयं वै लोको भूतम् ७२

असौ भविष्यत् । अनयोरेव लोकयोः प्रतितिष्ठति । सर्वस्याप्त्यै । सर्वस्या-

वरुद्ध्यै । यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं जुहोति । सर्वस्याप्त्यै । सर्वस्य जित्यै । सर्वमेव तेनाप्नोति । सर्वं जयति । योऽश्वमेधेन यजते ७३

य उ चैनमेवं वेद । यज्ञँ रक्षाँस्यजिघाँसन् । स एतान्प्रजापतिर्नक्तँहोमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षाँस्यपाहन् । यन्नक्तंहोमाञ्जुहोति । यज्ञादेव तैर्यजमानो रक्षाँस्यपहन्ति । उषसे स्वाहा व्युष्ट्यै स्वाहेत्यन्ततो जुहोति । सुवर्गस्य लोकस्य समष्ट्यै ७४

एकयूपो वैकादशिनी वा । अन्येषां यज्ञानां यूपा भवन्ति । एकविँशिन्यश्वमेधस्य । स्वर्गस्य लोकस्याभिजित्यै । बैल्वो वा खादिरो वा पालाशो वा । अन्येषां यज्ञक्रतूनां यूपा भवन्ति । राज्जुदाल एकविँशत्यरत्निरश्वमेधस्य । सुवर्गस्य लोकस्य समष्ट्यै । नान्येषां पशूनां तेजन्या अवद्यन्ति । अवद्यन्त्यश्वस्य ७५

पाप्मा वै तेजनी ।पाप्मनोऽपहत्यै । प्लक्षशाखायामन्येषां पशूनामवद्यन्ति । वेतसशाखायामश्वस्य । अप्सुयोनिर्वा अश्वः । अप्सुजो वेतसः । स्व एवास्य योनाववद्यति । यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति । आरोकेष्वारण्यान्धारयन्ति । पशूनां व्यावृत्त्यै । आ ग्राम्यान्पशूँल्लभन्ते । प्रारण्यान्त्सृजन्ति । पाप्मनोऽपहत्यै ७६

राज्जुदालमग्निष्ठं मिनोति । भ्रूणहत्याया अपहत्यै । पौतुद्रवावभितो भवतः । पुण्यस्य गन्धस्यावरुध्यै । भ्रूणहत्यामेवास्मादपहत्य । पुण्येन गन्धेनोभयतः परिगृह्णाति । षड्बैल्वा भवन्ति । ब्रमवर्चसस्यावरुद्ध्यै । षट्खादिराः । तेजसोऽवरुध्यै ७७

षट्पालाशाः । सोमपीथस्यावरुध्यै । एकविँशतिः संपद्यन्ते । एकविँशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविँशः । एष सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै । शतं पशवो भवन्ति ७८

शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । सर्वं वा अश्वमेध्याप्नोति । अपरिमिता भवन्ति । अपरिमितस्यावरुद्ध्यै । ब्रह्मवादिनो वदन्ति । कस्मात्सत्यात् । दक्षिणतोऽन्येषां पशूनामवद्यन्ति । उत्तरतो-ऽश्वस्येति । वारुणो वा अश्वः ७९

एषा वै वरुणस्य दिक् । स्वायामेवास्य दिश्यवद्यति । यदितरेषां पशूनामवद्यति । शतदेवत्यं तेनावरुन्धे । चितेऽग्नावधि वैतसे कटेऽश्वं चिनोति । अप्सुयोनिर्वा अश्वः अप्सुजो वेतसः । स्व एवैनं योनौ प्रतिष्ठापयति । पुरस्तात्प्रत्यञ्चं तूपरं चिनोति । पश्चात्प्राचीनं गोमृगम् ८०

प्राणापानावेवास्मिन्त्सम्यञ्चौ दधाति । अश्वं तूपरं गोमृगमिति सर्वहुत एताञ्जुहोति । एषां लोकानामभिजित्यै । आत्मनाभिजुहोति । सात्मानमेवैनँ सतनुं करोति । सात्मामुष्मिँल्लोके भवति । य एवं वेद । अथो वसोरेव धारां तेनावरुन्धे । इलुवर्दाय स्वाहा बलिवर्दाय स्वाहेत्याह । संवत्सरो वा इलुवर्दः । परिवत्सरो बलिवर्दः । संवत्सरादेव परिवत्सरादायुरवरुन्धे । आयुरेवास्मिन्दधाति । तस्मादश्वमेधयाजी जरसा विस्रसामुं लोकमेति ८१

एकविँशोऽग्निर्भवति । एकविँशः स्तोमः । एकविँशतिर्यूपाः । यथा वा अश्वा वर्षभा वा वृषाणः सँस्फुरेरन् । एवमेतत्स्तोमाः सँस्फुरन्ते । यदेकविँशाः । ते यत्समृच्छेरन् । हन्येतास्य यज्ञः । द्वादश एवाग्निः स्यादित्याहुः । द्वादशः स्तोमः ८२

एकादश युपाः । यद्द्वादशोऽग्निर्भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । यद्दश यूपा भवन्ति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । य एकादशः । स्तन एवास्यै सः ८३

दुह एवैनां तेन । तदाहुः । यद्द्वादशोऽग्निः स्याद्द्वादशः स्तोम एकादश यूपाः । यथा स्थुरिणा यायात् । तादृक्तत् । एकविँश एवाग्निः स्यादित्याहुः

। एकविँशः स्तोमः । एकविँशतिर्यूपाः । यथा प्रष्टिभिर्याति । तादृगेव तत् ८४

यो वा अश्वमेधे तिस्रः ककुभो वेद । ककुद्ध राज्ञां भवति । एकविँशोऽनिर्भवति । एकविँशः स्तोमः । एकविँशतिर्यूपाः । एता वा अश्वमेधे तिस्रः ककुभः । य एवं वेद । ककुद्ध राज्ञां भवति । यो वा अश्वमेधे त्रीणि शीर्षाणि वेद । शिरो ह राज्ञां भवति । एकविँशोऽग्निर्भवति । एकविँशः स्तोमः । एकविँशतिर्यूपाः । एतानि वा अश्वमेधे त्रीणि शीर्षाणि । य एवं वेद । शिरो ह राज्ञां भवति ८५

देवा वा अश्वमेधे पवमाने । सुवर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यदश्वमेधेऽश्वेन मेध्येनोदञ्चो बहिष्पवमानँ सर्पन्ति । सुवर्गस्य लोकस्य प्रज्ञात्यै । न वै मनुष्यः सुवर्गं लोकमञ्जसा वेद । अश्वो वै सुवर्गं लोक-मञ्जसा वेद । यदुद्गातोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत् । तादृक्तत् ८६

उद्गातारमपरुद्ध्य । अश्वमुद्गीथाय वृणीते । यथा क्षेत्रज्ञोऽञ्जसा नयति । एवमेवैनमश्वः सुवर्गं लोकमञ्जसा नयति । पुच्छमन्वारभन्ते । सुवर्गस्य लोकस्य समष्ट्यै । हिं करोति । सामैवाकः । हिं करोति । उद्गीथ एवास्य सः ८७

वडबा उपरुन्धन्ति । मिथुनत्वाय प्रजात्यै । अथो यथोपगातार उपगायन्ति । तादृगेव तत् । उदगासीदश्वो मेध्य इत्याह । प्राजापत्यो वा अश्वः । प्रजापतिरुद्गीथः । उद्गीथमेवावरुन्धे । अथो ऋक्सामयोरेव प्रतितिष्ठति । हिरण्येनोपाकरोति । ज्योतिर्वै हिरण्यम् । ज्योतिरेव मुखतो दधाति । यजमाने च प्रजासु च । अथो हिरण्यज्योतिरेव यजमानः सुवर्गं लोकमेति ८८

पुरुषो वै यज्ञः । यज्ञः प्रजापतिः । यदश्वे पशून्नियुञ्जन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । अश्वं तूपरं गोमृगम् । तानग्निष्ठ आलभते । सेनामुखमेव तत्सँश्यति

। तस्माद्राजमुखं भीष्मं भावुकम् । आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे । पूर्वाग्निमेव तं कुरुते ८९

तस्मात्पूर्वाग्निं पुरस्तात्स्थापयन्ति । पौष्णमन्वञ्चम् । अन्नं वै पूषा । तस्मात्पूर्वाग्नावाहार्यमाहरन्ति । ऐन्द्रापौष्णमुपरिष्टात् । ऐन्द्रो वै राजन्योऽन्नं पूषा । अन्नाद्येनैवैनमुभयतः परिगृह्णाति । तस्माद्राजन्योऽन्नादो भावुकः । आग्नेयौ कृष्णग्रीवौ बाहुवोः । बाहुवोरेव वीर्यं धत्ते ९०

तस्माद्राजन्यो बाहुबली भावुकः । त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । सक्थ्योरेव वीर्यं धत्ते । तस्माद्राजन्य ऊरुबली भावुकः । शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते । अथो कवचे एवैते अभितः पर्यूहते । तस्माद्राजन्यः संनद्धो वीर्यं करोति । धात्रे पृषोदरमधस्तात् । प्रतिष्ठामेवैतां कुरुते । अथो इयं वै धाता । अस्यामेव प्रतितिष्ठति । सौर्यं बलक्षं पुच्छे । उत्सेधमेव तं कुरुते । तस्मादुत्सेधं भये प्रजा अभिसँश्रयन्ति ९१ ८

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तमष्टादशिभिरनुप्रायुङ्क्त । तमाप्नोत् । तमाप्त्वाष्टादशिभिरवारुन्ध । यदष्टादशिन आलभ्यन्ते । यज्ञमेव तैराप्त्वा यजमानोऽवरुन्धे । संवत्सरस्य वा एषा प्रतिमा । यदष्टादशिनः । द्वादश मासाः पञ्चर्तवः १

संवत्सरोऽष्टादशः । यदष्टादशिन आलभ्यन्ते । संवत्सरमेव तैराप्त्वा यजमानोऽवरुन्धे । अग्निष्ठेऽन्यान्पशूनुपाकरोति । इतरेषु यूपेष्वष्टादशि- नोऽजामित्वाय । नवनवालभ्यन्ते सवीर्यत्वाय । यदारण्यैः सँस्थापयेत् । व्यवस्येतां पितापुत्रौ । व्यध्वानः क्रामेयुः । विदूरं ग्रामयोर्ग्रामान्तौ स्याताम् २

ऋक्षीकाः पुरुषव्याघ्राः परिमोषिणि आव्याधिनीस्तस्करा अरण्येष्वाजायेरन् । तदाहुः । अपशवो वा एते । यदारण्याः । यदारण्यैः सँस्थापयेत् । क्षिप्रे यजमानमरण्यं मृतँ हरेयुः । अरण्यायतना ह्यारण्याः पशव इति ।

यत्पशून्नालभेत । अनवरुद्धा अस्य पशवः स्युः । यत्पर्यग्निकृतानुत्सृजेत्
३

यज्ञवैशसं कुर्यात् । यत्पशूनालभते । तेनैव पशूनवरुन्धे । यत्पर्यग्नि-कृतानुत्सृजत्ययज्ञवैशसाय । अवरुद्धा अस्य पशवो भवन्ति । न यज्ञवैशसं भवति । न यजमानमरण्यं मृतँ हरन्ति । ग्राम्यैः सँस्थापयति । एते वै पशवः क्षेमो नाम । सं पितापुत्राववस्यतः । समध्वानः क्रामन्ति । समन्तिकं ग्रामयोर्ग्रामातौ भवतः । नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अरण्येष्वाजायन्ते ४

प्रजापतिरकामयतोभौ लोकाववरुन्धीयेति । स एतानुभयान्पशूनपश्यत् । ग्राम्याँश्चारण्याँश्च । तानालभत । तैर्वै स उभौ लोकाववारुन्ध । ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध । आरण्यैरमुम् । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकमवरुन्धे । यदारण्यान् ५

अमुं तैः । अनवरुद्धो वा एतस्य संवत्सर इत्याहुः । य इतेतश्चातुर्मास्यानि संवत्सरं प्रयुङ्क्त इति । एतावान्वै संवत्सरः । यच्चातुर्मास्यानि । यदेते चातुर्मास्याः पशव आलभ्यन्ते । प्रत्यक्षमेव तैः संवत्सरं यजमानोऽवरुन्धे । वि वा एष प्रजया पशुभिर्ऋध्यते । यः संवत्सरं प्रयुङ्क्ते । संवत्सरः सुवर्गो लोकः ६

सुवर्गं तु लोकं नापराध्नोति । प्रजा वै पशव एकादशिनी ।यदेत ऐकादशिनाः पशव आलभ्यन्ते । साक्षादेव प्रजां पशून्यजमानोऽवरुन्धे । प्रजापति-र्विराजमसृजत । सा सृष्टाश्वमेधं प्रविशत् । तां दशिभिरनु प्रायुङ्क्त । तामाप्नोत् । तामाप्त्वा दशिभिरवारुन्ध । यद्दशिन आलभ्यन्ते ७

विराजमेव तैराप्त्वा यजमानोऽवरुन्धे । एकादश दशत आलभ्यन्ते । एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभाः पशवः । पशूनेवावरुन्धे । वैश्वदेवो वा अश्वः । नानादेवत्याः पशवो भवन्ति । अश्वस्य सर्वत्वाय । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः । बहुरूपा भवन्ति । तस्माद्बहुरूपाः

पशवः समृद्ध्यै ८

अस्मै वै लोकाय ग्राम्याः पशव आलभ्यन्ते । अमुष्मा आरण्याः । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकमवरुन्धे । यदारण्यान् । अमुं तैः । उभयान्पशूनालभते । ग्राम्याँश्चारण्याँश्च । उभयोर्लोकयोरवरुद्ध्यै । उभयान्पशूनालभते ९

ग्राम्याँश्चारण्याँश्च । उभयस्यान्नाद्यस्यावरुद्ध्यै । उभयान्पशूनालभते । ग्राम्याँश्चारण्याँश्च । उभयेषां पशूनामवरुद्ध्यै । त्रयस्त्रयो भवन्ति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । ब्रह्मवादिनो वदन्ति । कस्मात्सत्यात् १०

अस्मि ँल्लोके बहवः कामा इति । यत्समानीभ्यो देवताभ्योऽन्येऽन्ये पशव आलभ्यन्ते । अस्मिन्नेव तल्लोके कामान्दधाति । तस्मादस्मिँल्लोके बहवः कामाः । त्रयाणांत्रयाणाँ सह वपा जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । एषां लोकानामाप्त्यै । एषां लोकानां कॢप्त्यै । पर्यग्निकृ-तानारण्यानुत्सृजन्त्यहिँसायै ११

युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरन्तमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परितस्थुष इत्याह १२

इमे वै लोकाः परितस्थुषः । इमनेवास्मै लोकान्युनक्ति । रोचन्ते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति । युञ्जन्त्यस्य काम्येत्याह । कामानेवास्मै युनक्ति । हरी विपक्षसेत्याह । इमे वै हरी विपक्षसा । इमे एवास्मै युनक्ति १३

शोणा धृष्णू नृवाहसेत्याह । अहोरात्रे वै नृवाहसा । अहोरात्रे एवास्मै युनक्ति । एता एवास्मै देवता युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै । केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुञ्चति । यश एवैनँ राज्ञां गमयति । जीमूतस्येव

भवति प्रतीकमित्याह । यथायजुरेवैतत् । ये ते पन्थानः सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचयत्यभिजित्यै १४

परा वा एतस्य यज्ञ एति । यस्य पशुरुपाकृतोऽन्यत्र वेद्या एति । एतँ स्तोतरेतेन पथा पुनरश्वमावर्तयासि न इत्याह । वायुर्वै स्तोता । वायुमेवास्य परस्ताद्दधात्यावृत्त्यै । यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एतदश्वस्य स्कन्दति । यदस्योपाकृतस्य लोमानि शीयन्ते । यद्वालेषु काचानावयन्ति । लोमान्येवास्य तत्संभरन्ति १५

भूर्भुवः सुवरिति प्राजापत्याभिरावयन्ति । प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्धयन्ति । भूरिति महिषी ।भुव इति वावाता । सुवरिति परिवृक्ती ।एषां लोकानामभिजित्यै । हिरण्ययाः काचा भवन्ति । ज्योतिर्वै हिरण्यम् । राष्ट्रमश्वमेधः १६

ज्योतिश्चैवास्मै राष्ट्रं च समीची दधाति । सहस्त्रं भवन्ति । सहस्त्रसंमितः सुवर्गो लोकः । सुवर्गस्य लोकस्याभिजित्यै । अप वा एतस्मात्तेज इन्द्रियं पशवः श्रीः क्रामन्ति । योऽश्वमेधेन यजते । वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति । तेजो वा आज्यम् । तेजो गायत्री ।तेजसैवास्मै तेजोऽवरुन्धे १७

रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति वावाता । तेजो वा आज्यम् । इन्द्रियं त्रिष्टुप् । तेजसैवास्मा इन्द्रियमवरुन्धे । आदित्यास्त्वाञ्जन्तु जागतेन छन्दसेति परिवृक्ती ।तेजो वा आज्यम् । पशवो जगती ।तेजसैवास्मै पशूनवरुन्धे । पत्नयोऽभ्यञ्जन्ति । श्रिया वा एतद्रूपम् १८

यत्पत्नयः । श्रियमेवास्मिन्तद्दधति । नास्मात्तेज इन्द्रियं पशवः श्रीरपकामन्ति । लाजी३ञ्शाची३न्यशो ममा३ँ इत्यतिरिक्तमन्नमश्वायोपाहरन्ति । प्रजा-मेवान्नादीं कुर्वते । एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत इत्याह । प्रजा-यामेवान्नाद्यं दधते । यदि नावजिघ्रेत् । अग्निः पशुरासीदित्यवघ्रापयेत् । अव हैव जिघ्रति । आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी

सधस्थमित्यश्वमनुमन्त्रयते । एषां लोकानामभिजित्यै । समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याप्रियो भवन्ति सरूपत्वाय १६

तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते । योऽश्वमेधेन यजते । होता च ब्रह्मा च ब्रह्मोद्यं वदतः । तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः । दक्षिणतो ब्रह्मा भवति । दक्षिणतआयतनो वै ब्रह्मा । बार्हस्पत्यो वै ब्रह्मा । ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति । तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः । उत्तरतो होता भवति २०

उत्तरतआयतनो वै होता । आग्नेयो वै होता । तेजो वा अग्निः । तेज एवास्योत्तरतो दधाति । तस्मादुत्तरोऽर्धस्तेजस्वितरः । यूपमभितो वदतः । यजमानदेवत्यो वै यूपः । यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्धयतः । किँ स्विदासीत्पूर्वचित्तिरित्याह । द्यौर्वै वृष्टिः पूर्वचित्तिः २१

दिवमेव वृष्टिमवरुन्धे । किँ स्विदासीद्बृहद्वय इत्याह । अश्वो वै बृहद्वयः । अश्वमेवावरुन्धे । किँ स्विदासीत्पिशङ्गिलेत्याह । रात्रिर्वै पिशङ्गिला । रात्रिमेवावरुन्धे । किँ स्विदासीत्पिलिप्पिलेत्याह । श्रीर्वै पिलिप्पिला । अन्नाद्यमेवावरुन्धे २२

कः स्विदेकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति । तेज एवावरुन्धे । क उ स्विज्जायते पुनरित्याह । चन्द्रमा वै जायते पुनः । आयुरेवावरुन्धे । किँ स्विद्धिमस्य भेषजमित्याह । अग्निर्वै हिमस्य भेषजम् । ब्रह्मवर्चसमेवावरुन्धे । किँ स्विदावपनं महदित्याह २३

अयं वै लोक आवपनं महत् । अस्मिन्नेव लोके प्रतितिष्ठति । पृच्छामि त्वा परमन्तं पृथिव्या इत्याह । वेदिर्वै परोऽन्तः पृथिव्याः । वेदिमेवावरुन्धे । पृच्छामि त्वा भुवनस्य नाभिमित्याह । यज्ञो वै भुवनस्य नाभिः । यज्ञमेवावरुन्धे । पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह । सोमो वै वृष्णो अश्वस्य रेतः । सोमपीथमेवावरुन्धे । पृच्छामि वाचः परमं व्योमेत्याह । ब्रह्म वै वाचः परमं व्योम । ब्रहम्वर्चसमेवावरुन्धे २४

अप वा एतस्मात्प्राणाः क्रामन्ति । योऽश्वमेधेन यजते । प्राणाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति । प्राणानेवास्मिन्दधाति । नास्मात्प्राणा अपक्रामन्ति । अवन्तीः स्थावन्तीस्त्वावन्तु । प्रियं त्वा प्रियाणाम् । वर्षिष्ठमाप्यानाम् । निधीनां त्वा निधिपतिँ हवामहे वसो ममेत्याह । अपैवास्मै तद्भनुवते २५

अथो धुवन्त्येवैनम् । अथो न्येवास्मै ह्नुवते । त्रिः परियन्ति त्रय इमे लोकाः । एभ्य एवैनं लोकेभ्यो धुवते । त्रिः पुनः परियन्ति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते । अप वा एतेभ्यः प्राणाः क्रामन्ति २६

ये यज्ञे धुवनं तन्वते । नवकृत्वः परियन्ति । नव वै पूरुषे प्राणाः । प्राणानेवात्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति । अम्बे अम्बाल्यम्बिक इति पत्नीमुदानयति । अह्वतैवैनाम् । सुभगे काम्पीलवासिनीत्याह । तप एवैनामुपनयति । सुवर्गे लोके सं प्रोरर्वाथामित्याह २७

सुवर्गमेवैनां लोकं गमयति । आहमजानि गर्भधमा त्वमजासि गर्भधमित्याह । प्रजा वै पशवो गर्भः । प्रजामेव पशूनात्मन्धत्ते । देवा वा अश्वमेधे पवमाने । सुवर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यत्सूचीभिरसिपथान्कल्पयन्ति । सुवर्गस्य लोकस्य प्रज्ञात्यै । गायत्री त्रिष्टुब्जगतीत्याह २८

यथायजुरेवैतत् । त्रय्यः सूच्यो भवन्ति । अयस्मय्यो रजता हरिरायः । अस्य वै लोकस्य रूपमयस्मय्यः । अन्तरिक्षस्य रजताः । दिवो हरिरायः । दिशो वा अयस्मय्यः । अवान्तरदिशा रजताः । ऊर्ध्वा हरिरायः । दिश एवास्मै कल्पयति । कस्त्वा छ्यति कस्त्वा विशास्तीत्याहाहिँसायै २९

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । ऊर्ध्वामेना-मुच्छ्रयतादित्याह । श्रीर्वै राष्ट्रमश्वमेधः । श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति । वेणुभारं गिराविवेत्याह । राष्ट्रं वै भारः । राष्ट्रमेवास्मै पर्यूहति ।

अथास्या मध्यमेधतामित्याह । श्रीर्वै राष्ट्रस्य मध्यम् ३०

श्रियमेवावरुन्धे । शीते वाते पुनन्निवेत्याह । क्षेमो वै राष्ट्रस्य शीतो वातः । क्षेममेवावरुन्धे । यद्धरिणी यवमत्तीत्याह । विड्वै हरिणी ।राष्ट्रं यवः । विशं चैवास्मै राष्ट्रं च समीची दधाति । न पुष्टं पशु मन्यत इत्याह । तस्माद्राजा पशून्न पुष्यति ३१

शूद्रा यदर्यजारा न पोषाय धनायतीत्याह । तस्माद्वैशीपूत्रं नाभिषिञ्चन्ते । इयं यका शकुन्तिकेत्याह । विड्वै शकुन्तिका । राष्ट्रमश्वमेधः । विशं चैवास्मै । राष्ट्रं च समीची दधाति । आहलमिति सर्पतीत्याह । तस्माद्राष्ट्राय विशः सर्पन्ति । आहतं गभे पस इत्याह । विड्वै गभः ३२

राष्ट्रं पसः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विशं घातुकम् । माता च ते पिता च त इत्याह । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति । अग्रं वृक्षस्य रोहत इत्याह । श्रीर्वै वृक्षस्याग्रम् । श्रियमेवावरुन्धे ३३

प्रसुलामीति ते पिता गभे मुष्टिमतँसयदित्याह । विड्वै गभः । राष्ट्रं मुष्टिः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विश घातुकम् । अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतं वदन्ति । दधिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदन्ति । प्राणा वै सुरभयः । प्राणानेवात्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति । आपो हि ष्ठा मयोभुव इत्यद्भिर्मार्जयन्ते । आपो वै सर्वा देवताः । देवताभिरेवात्मानं पवयन्ते ३४

प्रजापतिः प्रजाः सृष्ट्वा प्रेणानुप्राविशत् । ताभ्यः पुनः संभवितुं नाशक्नोत् । सोऽब्रवीत् । ऋध्नवदित्सः । यो मेऽतः पुनः संभरदिति । तं देवा अश्वमेधेनैव समभरन् । ततो वै त आर्ध्नुवन् । योऽश्वमेधेन यजते । प्रजापतिमेव सम्भरत्यृध्नोति । पुरुषमालभते ३५

वैराजो वै पुरुषः । विराजमेवालभते । अथो अन्नं वै विराट् । अन्नमेवावरुन्धे । अश्वमालभते । प्राजापत्यो वा अश्वः । प्रजापतिमेवालभते । अथो

श्रीर्वा एकशफम् । श्रियमेवावरुन्धे । गामालभते ३६

यज्ञो वै गौः । यज्ञमेवालभते । अथो अन्नं वै गौः । अन्नमेवावरुन्धे । अजावी आलभते भूम्ने । अथो पुष्टिर्वै भूमा । पुष्टिमेवावरुन्धे । पर्यग्निकृतं पुरुषं चारण्याँश्चोत्सृजन्त्यहिँसायै । उभौ वा एतौ पशू आलभ्येते । यश्चावमो यश्च परमः । तेऽस्योभये यज्ञे बद्धाः । अभीष्टा अभिप्रीताः । अभिजिता अभिहुता भवन्ति । नैनं दंद्दणवः पशवो यज्ञे बद्धाः । अभीष्टा अभिप्रीताः । अभिजिता अभिहुता हिँसन्ति । योऽश्वमेधेन यजते । य उ चैनमेवं वेद ३७

प्रथमेन वा एष स्तोमेन राध्वा । चतुष्टोमेन कृतेनायानामुत्तरेऽहन् । एकविँशे प्रतिष्ठायां प्रतितिष्ठति । एकविँशात्प्रतिष्ठाया ऋतूनन्वारोहति । ऋतवो वै पृष्ठानि । ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतिष्ठाय । देवता अभ्यारोहति । शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दः । अन्येऽन्ये वा एते पशव आलभ्यन्ते ३८

उतेव ग्राम्याः । उतेवारण्याः । अहरेव रूपेण समर्धयति । अथो अह्न एवैष बलिर्ह्रियते । तदाहुः । अपशवो वा एते । यदजावयश्चारण्याश्च । एते वै सर्वे पशवः । यद्गव्या इति । गव्यान्पशूनुत्तमेऽहन्नालभते ३९

तेनैवोभयान्पशूनवरुन्धे । प्राजापत्या भवन्ति । अनभिजितस्याभिजित्यै । सौरीर्नव श्वेता वशा अनूबन्धा भवन्ति । अन्तत एव ब्रह्मवर्चसमवरुन्धे । सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वन्द्विनः पशूनालभते । अहोरात्राणामभिजित्यै । पशुभिर्वा एष व्यृध्यते । योऽश्वमेधेन यजते । छगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान्पशूनालभते । पशुभिरेवात्मानँ समर्धयति । ऋतुभिर्वा एष व्यृध्यते । योऽश्वमेधेन यजते । पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते । ऋतुभिरेवात्मानँ समर्धयति । आ वा एष पशुभ्यो वृश्च्यते । योऽश्वमेधेन यजते । पर्यग्निकृता उत्सृजन्त्यनाव्रस्काय ४०

प्रजापतिरकामयत महानन्नादः स्यामिति । स एतावश्वमेधे महिमानावपश्यत् । तावगृह्णीत । ततो वै स महानन्नादोऽभवत् । यः कामयेत महानन्नादः स्यामिति । स एतवश्वमेधे महिमानौ गृह्णीत । महानेवान्नादो भवति । यजमानदेवत्या वै वपा । राजा महिमा । यद्वपां महिम्नोभयतः परियजति । यजमानमेव राज्येनोभयतः परिगृह्णाति । पुरस्तात्स्वाहाकारा वा अन्ये देवाः । उपरिष्टात्स्वाहाकारा अन्ये । ते वा एतेऽश्व एव मेध्य उभयेऽवरुध्यन्ते । यद्वपां महिम्नोभयतः परियजति । तानेवोभयान्प्रीणाति ४१

वैश्वदेवो वा अश्वः । तं यत्प्राजापत्यं कुर्यात् । या देवता अपिभागाः । ता भागधेयेन व्यर्धयेत् । देवताभ्यः समदं दध्यात् । स्तेगान्दँष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति । आज्यमवदानं कृत्वा प्रतिसंख्यायमाहुतीर्जुहोति । या एव देवता अपिभागाः । ता भागधेयेन समर्धयति । न देवताभ्यः समदं दधाति ४२

चतुर्दशैताननुवाकाञ्जुहोत्यनन्तरित्यै । प्रयासाय स्वाहेति पञ्चदशम् । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशः संवत्सर आप्यते । देवासुराः संयत्ता आसन् । तेऽब्रुवन्नग्नयः स्विष्टकृतः । अश्वस्य मेध्यस्य वयमुद्धारमुद्धरामहै । अथैतानभिभवामेति । ते लोहितमुदहरन्त । ततो देवा अभवन् ४३

परासुराः । यत्स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै । भवत्यात्मना । परास्य भ्रातृव्यो भवति । गोमृगकण्ठेन प्रथमामाहुतिं जुहोति । पशवो वै गोमृगः । रुद्रोऽग्निः स्विष्टकृत् । रुद्रादेव पशूनन्तर्दधाति । अथो यत्रैषाहुतिर्हूयते । न तत्र रुद्रः पशूनभिमन्यते ४४

अश्वशफेन द्वितीयामाहुतिं जुहोति । पशवो वा एकशफम् । रुद्रोऽग्निः स्विष्टकृत् । रुद्रादेव पशूनन्तर्दधाति । अथो यत्रैषाहुतिर्हूयते । न तत्र रुद्रः पशूनभिमन्यते । अयस्मयेन कमण्डलुना तृतीयामाहुतिं जुहोत्यायास्यो वै प्रजाः । रुद्रोऽग्निः स्विष्टकृत् । रुद्रादेव प्रजा अन्तर्दधाति । अथो यत्रैषाहुतिर्हूयते । न तत्र रुद्रः प्रजा अभिमन्यते ४५

अश्वस्य वा आलब्धस्य मेध उदक्रामत् । तदश्वस्तोमीयमभवत् । यदश्वस्तोमीयं जुहोति । समेधमेवैनमालभते । आज्येन जुहोति । मेधो वा आज्यम् । मेधोऽश्वस्तोमीयम् । मेधेनैवास्मिन्मेधं दधाति । षट्त्रिँशतं जुहोति । षट्त्रिँशदक्षरा बृहती ४६

बार्हताः पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्धयति । ता यद्भूयसीर्वा कनीयसीर्वा जुहुयात् । पशून्मत्रया व्यर्धयेत् । षट्त्रिँशतं जुहोति । षट्त्रिँशदक्षरा बृहती । बार्हताः पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्धयति ४७

अश्वस्तोमीयँ हुत्वा द्विपदा जुहोति । द्विपाद्वै पुरुषो द्विप्रतिष्ठः । तदेनं प्रतिष्ठया समर्धयति । तदाहुः । अश्वस्तोमीयं पूर्वँ होतव्या३ँ द्विपदा३ इति । अश्वो वा अश्वस्तोमीयम् । पुरुषो द्विपदाः । अश्वस्तोमीयँ हुत्वा द्विपदा जुहोति । तस्माद्द्विपाच्चतुष्पादमत्ति । अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति । द्विपदा हुत्वा । नान्यामुत्तरामाहुतिं जुहुयात् । यदन्यामुत्तरामाहुतिं जुहुयात् । प्र प्रतिष्ठायाश्च्यवेत । द्विपदा अन्ततो जुहोति प्रतिष्ठित्यै ४८

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । यत्संवत्सरमिष्टिभिर्यजते । अश्वमेव तदन्विच्छति । सावित्रियो भवन्ति ४९

इयं वै सविता । यो वा अस्यां नश्यति यो निलयते । अस्यां वाव तं विन्दन्ति । न वा इमाम्कश्चनेत्याहुः । तिर्यङ्नोर्ध्वोऽत्येतुमर्हतीति । यत्सावित्रियो भवन्ति । सवितृप्रसूत एवैनमिच्छति । ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः । यत्सायं धृतीर्जुहोति । अश्वस्य यत्यै धृत्यै ५०

यत्प्रातरिष्टिभिर्यजते । अश्वमेव तदन्विच्छति । यत्सायं धृतीर्जुहोति । अश्वस्यैव यत्यै धृत्यै । तस्मात्सायं प्रजाः क्षेम्या भवन्ति । यत्प्रात-रिष्टिभिर्यजते । अश्वमेव तदन्विच्छति । तस्माद्दिवा नष्टैष एति । यत्प्रात-

रिष्टिभिर्यजते सायं धृतीर्जुहोति । अहोरात्राभ्यामेवैनमन्विच्छति । अथो अहोरात्राभ्यामेवास्मै योगक्षेमं कल्पयति ५१

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । ब्राह्मणौ वीणागाथिनौ गायतः । श्रिया वा एतद्रूपम् । यद्वीणा । श्रियमेवास्मिन्तद्धत्तः । यदा खलु वै पुरुषः श्रियमश्नुते । वीणास्मै वाद्यते । तदाहुः । यदुभौ ब्राह्मणौ गायेताम् ५२

प्रभ्रँशुकास्माच्छ्रीः स्यात् । न वै ब्राह्मणे श्री रमत इति । ब्राह्मणोऽन्यो गायेत् । राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्रँ राजन्यः । तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति । तदाहुः । यदुभौ दिवा गायेताम् । अपास्माद्राष्ट्रं क्रामेत् ५३

न वा ब्राह्मणे राष्ट्रँ रमत इति । यदा खलु वै राजा कामयते । अथ ब्राह्मणं जिनाति । दिवा ब्राह्मणो गायेत् । नक्तँ राजन्यः । ब्रह्मणो वै रूपमहः । क्षत्रस्य रात्रिः । तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति । इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत् । इष्टापूर्तं वै ब्राह्मणस्य ५४

इष्टापूर्तेनैवैनँ स समर्धयति । इत्यजिना इत्ययुध्यथा इत्यमुँ संग्राममहन्निति राजन्यः । युद्धं वै राजन्यस्य । युद्धेनैवैनँ स समर्धयति । अक्ळ्प्ता वा एतस्यर्तव इत्याहुः । योऽश्वमेधेन यजत इति । तिस्रोऽन्यो गायति तिस्रोऽन्यः । षट्त्सम्पद्यन्ते । षड्वा ऋतवः । ऋतूनेवास्मै कल्पयतः । ताभ्याँ सँस्थायाम् । अनोयुक्ते च शते च ददाति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ५५

सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोकेलोक एनं मृत्युर्विन्देत् । मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । लोकाल्लोकादेव मृत्युमवयजते । नैनं लोकेलोके मृत्युर्विन्दति । यदमुष्मै स्वाहामुष्मै स्वाहेति जुहुत्संचक्षीत । बहुं मृत्युममित्रं

कुर्वीत । मृत्यवे स्वाहेत्येकस्मा एवैकां जुहुयात् । एको वा अमुष्मिँल्लोके मृत्युः ५६

अशनयामृत्युरेव । तमेवामुष्मिँल्लोकेऽवयजते । भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति । भ्रूणहत्यामेवावयजते । तदाहुः । यद्भ्रूणहत्यापात्र्याथ । कस्माद्यज्ञेऽपि क्रियत इति । अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः । भ्रूणहत्या वाव मृत्युरिति । यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति ५७

मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा । भ्रूणघ्ने भेषजं करोति । एताँ ह वै मुण्डिभ औदन्यवः । भ्रूणहत्यायै प्रायश्चित्तिं विदां चकार । यो हास्यापि प्रजायां ब्राह्मणँ हन्ति । सर्वस्मै तस्मै भेषजं करोति । जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति । वरुणो वै जुम्बकः । अन्तत एव वरुणमवयजते । खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्धन्जुहोति । एतद्वै वरुणस्य रूपं ।रूपेणैव वरुणमवयजते ५८

वारुणो वा अश्वः । तं देवतया व्यर्धयति । यत्प्राजापत्यं करोति । नमो राज्ञे नमो वरुणायेत्याह । वारुणो वा अश्वः । स्वयैवैनं देवतया समर्धयति । नमोऽश्वाय नमः प्रजापतय इत्याह । प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्धयति । नमोऽधिपतय इत्याह ५९

धर्मो वा अधिपतिः । धर्ममेवावरुन्धे । अधिपतिरस्यधिपतिं मा कुर्वधि-पतिरहं प्रजानां भूयासमित्याह । अधिपतिमेवैनँ समानानां करोति । मां धेहि मयि धेहीत्याह । आशिषमेवैतामाशास्ते । उपाकृताय स्वाहेत्युपाकृते जुहोति । आलब्धाय स्वाहेति नियुक्ते जुहोति । हुताय स्वाहेति हुते जुहोति । एषां लोकानामबिजित्यै ६०

प्र वा एष एभ्यो लोकेभ्यश्च्यवते । योऽश्वमेधेन यजते । आग्नेयमैन्द्रा-ग्नमाश्विनम् । तान्पशूनालभते प्रतिष्ठित्यै । यदाग्नेयो भवति । अग्निः सर्वा देवताः । देवता एवावरुन्धे । ब्रह्म वा अग्निः । क्षत्रमिन्द्रः । यदैन्द्राग्नो भवति ६१

ब्रह्मक्षत्रे एवावरुन्धे । यदाश्विनो भवति । आशिषामवरुद्ध्यै । त्रयो भवन्ति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । अग्नयेऽँहोमुचेऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानुवाक्या भवन्ति सर्वत्वाय ६२

यद्यश्वमुपतपद्विन्देत् । आग्नेयमष्टाकपालं निर्वपेत् । सौम्यं चरुम् । सावित्रमष्टाकपालम् । यदाग्नेयो भवति । अग्निः सर्वा देवताः । देवताभिरेवैनं भिषज्यति । यत्सौम्यो भवति । सोमो वा ओषधीनाँ राजा । याभ्य एवैनं विन्दति ६३

ताभिरेवैनं भिषज्यति । यत्सावित्रो भवति । सवितृप्रसूत एवैनं भिषज्यति । एताभिरेवैनं देवताभिर्भिषज्यति । अगदो हैव भवति । पौष्णं चरुं निर्वपेत् । यदि श्लोणः स्यात् । पूषा वै श्लौण्यस्य भिषक् । स एवैनं भिषज्यति । अश्लोणो हैव भवति ६४

रौद्रं चरुं निर्वपेत् । यदि महती देवताभिमन्येत । एतद्देवत्यो वा अश्वः । स्वयैवैनं देवतया भिषज्यति । अगदो हैव भवति । वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि नागच्छेत् । इयं वा अग्निर्वैश्वानरः । इयमेवैनमर्चिभ्यां परिरोधमानयति । आ हैव सुत्यमहर्गच्छति । यद्यधीयात् ६५

अग्नयेऽँहोमुचेऽष्टाकपालः । सौर्यं पयः । वायव्य आज्यभागः । यजमानो वा अश्वः । अँहसा वा एष गृहीतः । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । यदँहोमुचे निर्वपति । अँहस एव तेन मुच्यते । यजमानो वा अश्वः । रेतसा वा एष व्यृध्यते ६६

यस्याश्वो मेधाय प्रोक्षितोऽध्येति । सौर्यं रेतः । यत्सौर्यं पयो भवति । ।

रेतसैवैनँ स समर्धयति । यजमानो वा अश्वः । गर्भैर्वा एष व्यृध्यते । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । वायव्या गर्भाः । यद्वायव्य आज्यभागो

भवति । गर्भैरेवैनँ स समर्धयति । अथो यस्यैषाश्वमेधे प्रायश्चितिः क्रियते । इष्ट्वा वसीयान्भवति ६७

तदाहुः । द्वादश ब्रह्मौदनान्त्सँस्थिते निर्वपेत् । द्वादशभिर्वेष्टिभिर्यजेतेति । यदिष्टिभिर्यजेत । उपनामुक एनं यज्ञः स्यात् । पापीयाँस्तु स्यात् । आप्तानि वा एतस्य छन्दाँसि । य ईजानः । तानि क एतावदाशु पुनः प्रयुञ्जीतेति । सर्वा वै सँस्थिते यज्ञे वागाप्यते ६८

साप्ता भवति यातयाम्नी ।क्रूरीकृतेव हि भवत्यरुष्कृता । सा न पुनः प्रयुज्येत्याहुः । द्वादशैव ब्रह्मौदनान्त्सँस्थिते निर्वपेत् । प्रजापतिर्वा ओदनः । यज्ञः प्रजापतिः । उपनामुक एनं यज्ञो भवति । न पापीयान्भवति । द्वादश भवन्ति । द्वादश मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति ६९

एष वै विभूर्नाम यज्ञः । सर्वँ ह वै तत्र विभु भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै प्रभूर्नाम यज्ञः । सर्वँ ह वै तत्र प्रभु भवति । यत्रैतेन यज्ञेन यजन्ते । एष वा ऊर्जस्वान्नाम यज्ञः । सर्वँ ह वै तत्रोर्जस्वद्भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै पयस्वान्नाम यज्ञः ७०

सर्वँ ह वै तत्र पयस्वद्भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै विधृतो नाम यज्ञः । सर्वँ ह वै तत्र विधृतं भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै व्यावृत्तो नाम यज्ञः । सर्वँ ह वै तत्र व्यावृत्तं भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै प्रतिष्ठितो नाम यज्ञः । सर्वँ ह वै तत्र प्रतिष्ठितं भवति ७१

यत्रैतेन यज्ञेन यजन्ते । एष वै तेजस्वी नाम यज्ञः । सर्वँ ह वै तत्र तेजस्वि भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै ब्रह्मवर्चसी नाम यज्ञः । आ ह वै तत्र ब्राह्मणो ब्रह्मवर्चसी जायते । यत्रैतेन यज्ञेन यजन्ते । एष वा अतिव्याधी नाम यज्ञः । आ ह वै तत्र राजन्योऽतिव्याधी जायते । यत्रैतेन यज्ञेन यजन्ते । एष वै दीर्घो नाम यज्ञः । दीर्घायुषो ह वै तत्र मनुष्या भवन्ति । यत्रैतेन यज्ञेन यजन्ते । एष वै क्ळ्प्तो नाम यज्ञः । कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः । यत्रैतेन यज्ञेन यजन्ते ७२

तार्प्येणाश्वँ संज्ञपयन्ति । यज्ञो वै तार्प्यम् । यज्ञेनैवैनँ समर्धयन्ति । यामेन साम्ना प्रस्तोतानूपतिष्ठते । यमलोकमेवैनं गमयति । तार्प्ये च कृत्यधीवासे चाश्वँ संज्ञपयन्ति । एतद्वै पशूनाँ रूपम् । रूपेणैव पशूनवरुन्धे । हिरण्यकशिपु भवति । तेजसोऽवरुद्ध्यै ७३

रुक्मो भवति । सुवर्गस्य लोकस्यानुख्यात्यै । अश्वो भवति । प्रजापतेराप्त्यै । अस्य वै लोकस्य रूपं तार्प्यम् । अन्तरिक्षस्य कृत्यधीवासः । दिवो हिरण्यकशिपु । आदित्यस्य रुक्मः । प्रजापतेरश्वः । इममेव लोकं तार्प्येणाप्नोति ७४

अन्तरिक्षं कृत्यधीवासेन । दिवँ हिरण्यकशिपुना । आदित्यँ रुक्मेण । अश्वेनैव मेध्येन प्रजापतेः सायुज्यँ सलोकतामाप्नोति । एतासामेव देवतानाँ सायुज्यम् । सार्ष्टिताँ समानलोकतामाप्नोति । योऽश्वमेधेन यजते । य उ चैनमेवं वेद ७५

आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । तेऽङ्गिरस आदित्येभ्यः । अमुमादित्यमश्वँ श्वेतं भूतं दक्षिणामनयन् । तेऽब्रुवन् । यं नोऽनेष्ट । स वर्योऽभूदिति । तस्मादश्वँ सवर्येत्याह्वयन्ति । तस्माद्यज्ञे वरो दीयते । यत्प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वो नाम ७६

यच्छ्वयदरुरासीत् । तस्मादर्वा नाम । यत्सद्यो वाजन्त्समजयत् । तस्माद्वाजी नाम । यदसुराणां लोकानादत्त । तस्मादादित्यो नाम । अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्य उत्तरवेदिमुपवपति । योनिमन्तमेवैनमायतनवन्तं करोति ७७

योनिमानायतनवान्भवति । य एवं वेद । प्राणापानौ वा एतौ देवानाम् । यदर्काश्वमेधौ । प्राणापानावेवावरुन्धे । ओजो बलं वा एतौ देवानाम् । यदर्काश्वमेधौ । ओजो बलमेवावरुन्धे । अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्य उत्तरवेदिं चिनोति । तावर्काश्वमेधौ । अर्काश्वमेधावेवावरुन्धे । अथो अर्काश्वमेधयोरेव प्रतितिष्ठति

७८

प्रजापतिं वै देवाः पितरम् । पशुं भूतं मेधायालभन्त । तमालभ्योपावसन् । प्रातर्यष्टास्मह इति । एकं वा एतद्देवानामहः । यत्संवत्सरः । तस्मादश्वः पुरस्तात्संवत्सर स्रालभ्यते । यत्प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वः । यत्सद्यो मेधोऽभवत् ७९

तस्मादश्वमेधः । वेदुकोऽश्वमाशुं भवति । य एवं वेद । यद्वै तत्प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वः प्रजापतेः पशूनामनुरूपतमः । स्रास्य पुत्रः प्रतिरूपो जायते । य एवं वेद । सर्वाणि भूतानि सम्भृत्यालभते । समेनं देवास्तेजसे ब्रह्मवर्चसाय भरन्ति । योऽश्वमेधेन यजते ८०

य उ चैनमेवं वेद । एतद्वै तद्देवा एतां देवताम् । पशुं भूतं मेधायालभन्त । यज्ञमेव । यज्ञेन यज्ञमयजन्त देवाः । कामप्रं यज्ञमकुर्वत । तेऽमृतत्वमकामयन्त । तेऽमृतत्वमगच्छन् । योऽश्वमेधेन यजते । देवानामेवायनेनैति ८१

प्राजापत्येनैव यज्ञेन यजते कामप्रेण । स्रपुनर्मारमेव गच्छति । एतस्य वै रूपेण पुरस्तात्प्राजापत्यमृषभं तूपरं बहुरूपमालभते । सर्वेभ्यः कामेभ्यः । सर्वस्याप्त्यै । सर्वस्य जित्यै । सर्वमेव तेनाप्नोति । सर्वं जयति । योऽश्वमेधेन यजते । य उ चैनमेवं वेद ८२

यो वा स्रश्वस्य मेध्यस्य लोमनी वेद । स्रश्वस्यैव मेध्यस्य लोमँल्लोमञ्जुहोति । स्रहोरात्रे वा स्रश्वस्य मेध्यस्य लोमनी ।यत्सायम्प्रातर्जुहोति । स्रश्वस्यैव मेध्यस्य लोमँल्लोमञ्जुहोति । एतदनुकृति ह स्म वै पुरा । स्रश्वस्य मेध्यस्य लोमँल्लोमञ्जुह्वति । यो वा स्रश्वस्य मेध्यस्य पदे वेद । स्रश्वस्यैव मेध्यस्य पदेपदे जुहोति । दर्शपूर्णमासौ वा स्रश्वस्य मेध्यस्य पदे ८३

यद्दर्शपूर्णमासौ यजते । स्रश्वस्यैव मेध्यस्य पदेपदे जुहोति । एतदनुकृति ह स्म वै पुरा । स्रश्वस्य मेध्यस्य पदेपदे जुह्वति । यो वा स्रश्वस्य मेध्यस्य

विवर्तनं वेद । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति । असौ वा आदित्योऽश्वः । स आहवनीयमागच्छति । तद्विवर्तते । यदग्निहोत्रं जुहोति । अश्वस्यैव मेध्यस्य विवर्तनेविवर्तने जुहोति । एतदनुकृति ह स्म वै पुरा । अश्वस्य मेध्यस्य विवर्तनेविवर्तने जुह्वति ८४ ६

संज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत् । संकल्पमानं प्रकल्पमानमुपकल्पमानमुपक्ळ्प्तं क्ळ्प्तम् । श्रेयो वसीय आयत्सम्भूतं भूतम् । चित्रः केतुः प्रभानाभान्त्संभान् । ज्योतिष्माँस्तेजस्वानातपँस्तपन्नभितपन् । रोचनो रोचमानः शोभनः शोभमानः कल्याणः । दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना । आप्यायमाना प्यायमाना प्याया सूनृतेरा । आपूर्यमाणा पूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी ।दाता प्रदातानन्दो मोदः प्रमोदः १

आवेशयन्निवेशयन्त्संवेशनः सँशान्तः शान्तः । आभवन्प्रभवन्त्संभवन्त्संभूतो भूतः । प्रस्तुतं विष्टुतँ सँस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजः समिद्धम् । अरुणं भानुमन्मरीचिमदभितपत्तपस्वत् । सविता प्रसविता दीप्तो दीपयन्दीप्यमानः । ज्वलञ्ज्वलिता तपन्वितपन्त्संतपन् । रोचनो रोचमानः शुम्भूः शुम्भमानो वामः । सुता सुन्वती प्रसुता सूयमानाभिषूयमाणा । पीती प्रपा संपा तृप्तिस्तर्पयन्ती २

कान्ता काम्या कामजातायुष्मती कामदुघा । अभिशास्तानुमन्तानन्दो मोदः प्रमोदः । आसादयन्निषादयन्त्सँसादनः सँसन्नः सन्नः । आभूर्विभूः प्रभूः शम्भूर्भुवः । पवित्रं पवियिष्यन्पूतो मेध्यः । यशो यशस्वानायुरमृतः । जीवो जीविष्यन्त्स्वर्गो लोकः । सहस्वान्त्सहीयानोजस्वान्त्सहमानः । जयन्नभिजयन्त्सुद्रविणो द्रविणोदाः । आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः ३

अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभिजित् । आर्द्रः पिन्वमानोऽन्नवान्रसवानिरावान् । सर्वौषधः सम्भरो महस्वान् । एजत्का जोवत्काः । क्षुल्लकाः शिपिविष्टकाः । सरिस्त्रराः सुशेरवः । अजिरासो गमिष्णवः । इदानीं तदानीमेतर्हि क्षिप्रमजिरम् । आशुर्निमेषः फणो द्रवन्नतिद्रवन् । त्वरँस्त्वरमाण आशुराशीयाञ्जवः । अग्निष्टोम

उक्थ्योऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतूरात्रः । अग्निर्ऋतुः सूर्य ऋतुश्चन्द्रमा ऋतुः । प्रजापतिः संवत्सरो महान्कः ४

भूरग्निं च पृथिवीं च मां च । त्रींश्च लोकान्त्संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । भुवो वायुं चान्तरिक्षं च मां च । त्रींश्च लोकान्त्संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । स्वरादित्यं च दिवं च मां च । त्रींश्च लोकान्त्संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । भूर्भुवः स्वश्चन्द्रमसं च दिशश्च मां च । त्रींश्च लोकान्त्संवत्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ५

त्वमेव त्वां वेत्थ योऽसि सोऽसि । त्वमेव त्वामचैषीः । चितश्चासि संचितश्चास्यग्ने । एतावाँश्चासि भूयाँश्चास्यग्ने । यत्ते अग्ने न्यूनं यदु तेऽतिरिक्तम् । आदित्यास्तदङ्गिरसश्चिन्वन्तु । विश्वे ते देवाश्चितिमापूरयन्तु । चितश्चासि संचितश्चास्यग्ने । एतावाँश्चासि भूयाँश्चास्यग्ने । मा ते अग्नेऽचयेन मातिचयेनायुरावृक्षि । सर्वेषां ज्योतिषां ज्योतिर्यददावुदेति । तपसो जातमनिभृष्टमोजः । तत्ते ज्योतिरिष्टके । तेन मे तप । तेन मे ज्वल । तेन मे दीदिहि । यवद्देवाः । यावदसाति सूर्यः । यावदुतापि ब्रह्म ६

संवत्सरोऽसि परिवत्सरोऽसि । इदावत्सरोऽसीदुवत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि । तस्य ते वसन्तः सिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् ७

अहोरात्राणीष्टकाः । ऋषभोऽसि स्वर्गो लोकः । यस्यां दिशि महीयसे । ततो नो मह आवह । वायुर्भूत्वा सर्वा दिश आवाहि । सर्वा दिशोऽनुविवाहि । सर्वा दिशोऽनुसंवाहि । चित्त्या चितिमापृण । अचित्त्या चितिमापृण । चिदसि समुद्रयोनिः ८

इन्दुर्दक्षः स्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव

आनिषत्तः । नमस्ते अस्तु मा मा हिँसीः । एति प्रेति वीति समित्युदिति । दिवं मे यच्छ । अन्तरिक्षं मे यच्छ । पृथिवीं मे यच्छ । पृथिवीं मे यच्छ । अन्तरिक्षं मे यच्छ । दिवं मे यच्छ । अह्ना प्रसारय । रात्र्या समच । रात्र्या प्रसारय अह्ना समच । कामं प्रसारय । कामँ समच ९

भूर्भुवः स्वः । ओजो बलम् । ब्रह्म क्षत्रम् । यशो महत् । सत्यं तपो नाम । रूपममृतम् । चक्षुः स्रोत्रम् । मन आयुः । विश्वं यशो महः । समं तपो हरो भाः । जातवेदा यदि वा पावकोऽसि । वैश्वानरो यदि वा वैद्युतोऽसि । शं प्रजाभ्यो यजमानाय लोकम् । ऊर्जं पुष्टिं ददद्भ्याववृत्स्व १०

राज्ञी विराज्ञी ।सम्राज्ञी स्वराज्ञी ।अर्चिः शोचिः । तपो हरो भाः । अग्निरिन्द्रो बृहस्पतिः । विश्वे देवा भुवनस्य गोपाः । ते मा सर्वे यशसा सँसृजन्तु ११

असवे स्वाहा । वसवे स्वाहा । विभुवे स्वाहा । विवस्वते स्वाहा । अभिभुवे स्वाहाधिपतये स्वाहा । दिवां पतये स्वाहाँहस्पत्याय स्वाहा । चाक्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा । राज्ञे स्वाहा विराज्ञे स्वाहा । संराज्ञे स्वाहा । स्वराज्ञे स्वाहा । शूषाय स्वाहा सूर्याय स्वाहा । चन्द्रमसे स्वाहा ज्योतिषे स्वाहा । सँसर्पाय स्वाहा । कल्याणाय स्वाहा । अर्जुनाय स्वाहा १२

विपश्चिते पवमानाय गायत । मही न धारात्यन्धो अर्षति । अहिर्ह जीर्णामतिसर्पति त्वचम् । अत्यो न क्रीडन्नसरद्वृषा हरिः । उपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामि । एष ते योनिर्मृत्यवे त्वा । अप मृत्युमप क्षुधम् । अपेतः शपथं जहि । अधा नो अग्न आवह । रायस्पोषँ सहस्रिणम् १३

ये ते सहस्रमयुतं पाशाः । मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया । सर्वानवयजामहे । भक्षोऽस्यमृतभक्षः । तस्य ते मृत्युपीतस्यामृतवतः । स्वगाकृतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि । मन्द्राभिभूतिः केतु- र्यज्ञानां वाक् । असावेहि १४

अन्धो जागृविः प्राण । असावेहि । बधिर आक्रन्दयितरपान । असावेहि । अहस्तोऽस्ता चक्षुः । असावेहि । अपादाशो मनः । असावेहि । कवे विप्रचित्ते श्रोत्र । असावेहि १५

सुहस्तः सुवासाः । शूषो नामास्यमृतो मर्त्येषु । तं त्वाहं तथा वेद । असावेहि । अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः १६

प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः १७

मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्रँ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः १८

रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरँ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः १९

लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलँ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः २०

मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः २१

आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः

। अन्तस्तिष्ठत्वमृतस्य गोपाः २२

प्रजापतिर्देवानसृजत । ते पाप्मना संदिता अजायन्त । तान्व्यद्यत् । यद्व्यद्यत् । तस्माद्विद्युत् । तमवृश्चत् । यदवृश्चत् । तस्माद्वृष्टिः । तस्माद्यत्रैते देवते अभिप्राप्नुतः । वि च हैवास्य तत्र पाप्मानं द्यतः २३

वृश्चतश्च । सैषा मीमाँसाग्निहोत्र एव संपन्ना । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । होष्यन्नप उपस्पृशेत् । विद्युदसि विद्य मे पाप्मानमिति । अथ हुत्वोपस्पृशेत् । वृश्टिरसि वृश्च मे पाप्मानमिति । यक्ष्यमाणो वेष्ट्वा वा । वि च हैवास्यैते देवते पाप्मानं द्यतः २४

वृश्चतश्च । अत्यँहो हारुणिः । ब्रह्मचारिणे प्रश्नान्प्रोच्य प्रजिघाय । परेहि । प्लक्षं दैयाम्पातिं पृच्छ । वेत्थ सावित्रा३न्न वेत्था३ इति । तमागत्य पप्रच्छ । आचार्यो मा प्रा हैषीत् । वेत्थ सावित्रा३न्न वेत्था३ इति । स होवाच वेदेति २५

स कस्मिन्प्रतिष्ठित इति । परोरजसीति । कस्तद्यत्परोरजा इति । एष वाव स परोरजा इति होवाच । य एष तपति । एषोऽर्वाग्रजा इति । स कस्मिन्त्वेष इति । सत्य इति । किं तत्सत्यमिति । तप इति २६

कस्मिन्नु तप इति । बल इति । किं तद्बलमिति । प्राण इति । मा स्म प्राणमतिपृच्छ इति माचार्योऽब्रवीदिति होवाच ब्रह्मचारी ।स होवाच प्लक्षो दैयाम्पातिः । यद्वै ब्रह्मचारिन्प्राणमत्यप्रक्ष्यः । मूर्धा ते व्यपतिष्यत् । अहमु त आचार्याच्छ्रेयान्भविष्यामि । यो मा सावित्रे समवादिष्टेति २७

तस्मात्सावित्रे न संवदेत । स यो ह वै सावित्रं विदुषा सावित्रे संवदते । सहास्मिञ्श्रियं दधाति । अनु ह वा अस्मा असौ तपञ्श्रियं मन्यते । अन्वस्मै श्रीस्तपो मन्यते । अन्वस्मै तपो बलं मन्यते । अन्वस्मै बलं प्राणं मन्यते । स यदाह । संज्ञानं विज्ञानं दर्शा दृष्टेति । एष एव तत् २८
अथ यदाह । प्रस्तुतं विष्टुतँ सुता सुन्वतीति । एष एव तत् । एष ह्येव

तान्यहानि । एष रात्रयः । अथ यदाह । चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति । एष एव तत् । एष ह्येव तेऽह्नो मुहूर्ताः । एष रात्रेः २९

अथ यदाह । पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति । एष एव तत् । एष ह्येव तेऽर्धमासाः । एष मासाः । अथ यदाह । अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति । एष एव तत् । एष ह्येव ते यज्ञक्रतवः । एष ऋतवः ३०

एष संवत्सरः । अथ यदाह । इदानीं तदानीमिति । एष एव तत् । एष ह्येव ते मुहूर्तानां मुहूर्ताः । जनको ह वैदेहः । अहोरात्रैः समाजगाम । तँ होचुः । यो वा अस्मान्वेद । विजहत्पाप्मानमेति ३१

सर्वमायुरेति । अभि स्वर्गं लोकं जयति । नास्यामुष्मिँल्लोकेऽन्नं क्षीयत इति । विजहद्ध वै पाप्मानमेति । सर्वमायुरेति । अभि स्वर्गं लोकं जयति । नास्यामुष्मिँल्लोकेऽन्नं क्षीयते । य एवं वेद । अहीना हाश्वत्थ्यः । सावित्रं विदांचकार ३२

स ह हँसो हिरण्मयो भूत्वा । स्वर्गं लोकमियाय । आदित्यस्य सायुज्यम् । हँसो ह वै हिरण्मयो भूत्वा । स्वर्गं लोकमेति । आदित्यस्य सायुज्यम् । य एवं वेद । देवभागो ह श्रौतर्षः । सावित्रं विदांचकार । तँ ह वागदृश्यमानाभ्युवाच ३३

सर्वं बत गौतमो वेद । यः सावित्रं वेदेति । स होवाच । कैषा वागसीति । अयमहँ सावित्रः । देवानामुत्तमो लोकः । गुह्यं महो बिभ्रदिति । एतावति ह गौतमः । यज्ञोपवीतं कृत्वाधो निपपात । नमो नम इति ३४

स होवाच । मा भैषीर्गौतम । जितो वै ते लोक इति । तस्माद्ये के च सावित्रं विदुः । सर्वे ते जितलोकाः । स यो ह वै सावित्रस्याष्टाक्षरं पदँ श्रियाभिषिक्तं वेद । श्रिया हैवाभिषिच्यते । घृणिरिति द्वे अक्षरे । सूर्य

इति त्रीणि । आदित्य इति त्रीणि ३५

एतद्वै सावित्रस्याष्टाक्षरं पदँ श्रियाभिषिक्तम् । य एवं वेद । श्रिया हैवाभिषिच्यते । तदेतदृचाभ्युक्तम् । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासत इति । न ह वा एतस्यर्चा न यजुषा न साम्नार्थोऽस्ति । यः सावित्रं वेद ३६

तदेतत्परि यद्देवचक्रम् । आर्द्रं पिन्वमानँ स्वर्गे लोक एति । विजहद्विश्वा भूतानि संपश्यत् । आर्द्रो ह वै पिन्वमानः स्वर्गे लोक एति । विजहन्विश्वा भूतानि संपश्यन् । य एवं वेद । शूषो ह वै वार्ष्णेयः । आदित्येन समाजगाम । तँ होवाच । एहि सावित्रं विद्धि । अयं वै स्वर्ग्योऽग्निः पारयिष्णुरमृतात्संभूत इति । एष वाव स सावित्रः । य एष तपति । एहि मां विद्धि । इति हैवैनं तदुवाच ३७

इयं वाव सरघा । तस्या अग्निरेव सारघं मधु । या एताः पूर्वपक्षापरपक्षयो रात्रयः । ता मधुकृतः । यान्यहानि । ते मधुवृषाः । स यो ह वा एता मधुकृतश्च मधुवृषाँश्च वेद । कुर्वन्ति हास्यैता अग्नौ मधु । नास्येष्टापूर्तं धयन्ति । अथ यो न वेद ३८

न हास्यैता अग्नौ मधु कुर्वन्ति । धयन्त्यस्येष्टापूर्तम् । यो ह वा अहोरात्राणां नामधेयानि वेद । नाहोरात्रेष्वार्तिमार्च्छति । संज्ञानं विज्ञानं दर्शा दृष्टेति । एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि । प्रस्तुतं विष्टुतँ सुता सुन्वतीति । एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानि । नाहोरात्रेष्वार्तिमार्च्छति । य एवं वेद ३९

यो ह वै मुहूर्तानां नामधेयानि वेद । न मुहूर्तेष्वार्तिमार्च्छति । चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति । एतेऽनुवाका मुहूर्तानां नामधेयानि । न मुहूर्तेष्वार्तिमार्च्छति । य एवं वेद । यो ह वा अर्धमासानां च मासानां च नामधेयानि वेद । नार्धमासेषु न मासेष्वार्तिमार्च्छति । पवित्रं

पवियिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति । एतेऽनुवाका अर्धमासानां च मासानां च नामधेयानि ४०

नार्धमसेषु न मासेष्वार्तिमार्च्छति । य एवं वेद । यो ह वै यज्ञक्रतूनां चर्तूनां च संवत्सरस्य च नामधेयानि वेद । न यज्ञक्रतुषु नर्तुषु न संवत्सर आर्तिमार्च्छति । अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति । एतेऽनुवाका यज्ञक्रतूनां चर्तूनां च संवत्सरस्य च नामधेयानि । न यज्ञक्रतुषु नर्तुषु न संवत्सर आर्तिमार्च्छति । य एवं वेद । यो ह वै मुहूर्तानां मुहूर्तान्वेद । न मुहूर्तानां मुहूर्तेष्वार्तिमार्च्छति ४१

इदानीं तदानीमिति । एते वै मुहूर्तानां मुहूर्ताः । न मुहूर्तानां मुहूर्तेष्वार्तिमार्च्छति । य एवं वेद । अथो यथा क्षेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति । एवमेवैतान्क्षेत्रज्ञो भूत्वानुप्रविश्यान्नमत्ति । स एतेषामेव सलोकताँ सायुज्यमश्नुते । अप पुनर्मृत्युं जयति । य एवं वेद ४२

कश्चिद्ध वा अस्माल्लोकात्प्रेत्य । आत्मानं वेद । आयमहमस्मीति । कश्चित्स्वं लोकं न प्रतिप्रजानाति । अग्निमुग्धो हैव धुमतान्तः । स्वं लोकं न प्रतिप्रजानाति । अथ यो हैवैतमग्निँ सावित्रं वेद । स एवास्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति ४३

स स्वं लोकं प्रतिप्रजानाति । एष उ चैवैनं तत्सावित्रः । स्वर्गं लोकमभिवहति । अहोरात्रैर्वा इदँ सयुग्भिः क्रियते । इतिरात्रायादीक्षिषत । इतिरात्राय व्रतमुपागुरिति । तानि हानेवं विदुषः । अमुष्मिँल्लोके शेवधिं धयन्ति । धीतँ हैव स शेवधिमनुपरैति । अथ यो हैवैतमग्निँ सावित्रं वेद ४४

तस्य हैवाहोरात्राणि । अमुष्मिँल्लोके शेवधिं न धयन्ति । अधीतँ हैव स शेवधिमनु परैति । भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । तँ ह जीर्णिँ स्थविरँ शयानम् । इन्द्र उपव्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच ४५

तँ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयां चकार । तेषाँ हैकैकस्मान्मुष्टिनाददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरदननूक्तमेव । एहीमं विद्धि । अयं वै सर्वविद्येति ४६

तस्मै हैतमग्निँ सावित्रमुवाच । तँ स विदित्वा । अमृतो भूत्वा । स्वर्गं लोकमियाय । आदित्यस्य सायुज्यम् । अमृतो हैव भूत्वा । स्वर्गं लोक-मेति । आदित्यस्य सायुज्यम् । य एवं वेद । एषो एव त्रयी विद्या ४७

यावन्तँ ह वै त्रय्या विद्यया लोकं जयति । तावन्तं लोकं जयति । य एवं वेद । अग्नेर्वा एतानि नामधेयानि । अग्नेरेव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । वायोर्वा एतानि नामधेयानि । वायोरेव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । इन्द्रस्य वा एतानि नामधेयानि ४८

इन्द्रस्यैव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । बृहस्पतेर्वा एतानि नामधेयानि । बृहस्पतेरेव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । प्रजापतेर्वा एतानि नामधेयानि । प्रजापतेरेव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । ब्रह्मणो वा एतानि नामधेयानि । ब्रह्मण एव सायुज्यँ सलोकतामाप्नोति । य एवं वेद । स वा एषोऽग्निरपक्षपुच्छो वायुरेव । तस्याग्निर्मुखम् । असावादित्यः सिरः । स यदेते देवते अन्तरेण । तत्सर्वँ सीव्यति । तस्मात्सावित्रः ४९ १०

लोकोऽसि स्वर्गोऽसि । अनन्तोऽस्यपारोऽसि । अक्षितोऽस्यक्षय्योऽसि । तपसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १

तपोऽसि लोके श्रितम् । तेजसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनैतृ ।तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद २

तेजोऽसि तपसि श्रितम् । समुद्रस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ ।तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ३

समुद्रोऽसि तेजसि श्रितः । अपां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ४

आपः स्थ समुद्रे श्रिताः । पृथिव्याः प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः । ता व उपदधे कामदुघा अक्षिताः । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ५

पृथिव्यस्यप्सु श्रिता । अग्नेः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री ।तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ६

अग्निरसि पृथिव्याँ श्रितः । अन्तरिक्षस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ७

अन्तरिक्षमस्यग्नौ श्रितम् । वायोः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ ।तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ८

वायुरस्यन्तरिक्षे श्रितः । दिवः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद ९

द्यौरसि वायौ श्रिता । आदित्यस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री ।तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद १०

आदित्योऽसि दिवि श्रितः । चन्द्रमसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ११

चन्द्रमा अस्यादित्ये श्रितः । नक्षत्राणां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १२

नक्षत्राणि स्थ चन्द्रमसि श्रितानि । संवत्सरस्य प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तॄणि विश्वस्य जनयितॄणि । तानि व उपदधे कामदुघान्यक्षितानि । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १३

संवत्सरोऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १४

ऋतवः स्थ संवत्सरे श्रिताः । मासानां प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवत- याङ्गिरस्वद्ध्रुवा सीद १५

मासाः स्थर्तुषु श्रिताः । अर्धमासानां प्रतिष्था युष्मासु । इदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवत- याङ्गिरस्वद्ध्रुवा सीद १६

अर्धमासाः स्थ मासु श्रिताः । अहोरात्रयोः प्रतिष्था युष्मासु । इदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सदयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १७

अहोरात्रे स्थोऽर्धमासेषु श्रिते । भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे । युवयोरिदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्र्यौ विश्वस्य जनयित्र्यौ । ते वामुपदधे कामदुघे अक्षिते । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १८

पौर्णमास्यष्टकामावास्या । अन्नादाः स्थान्नदुघो युष्मासु । इदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः । ता व उपदधे कामदुघा अक्षिताः । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद १९

राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी ।विश्वं भूतमनु प्रभूता । त्वयीदमन्तः । विश्वं यन्तं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री ।तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतया- ङ्गिरस्वद्ध्रुवा सीद २०

ओजोऽसि सहोऽसि । बलमसि भ्राजोऽसि । देवानां धामामृतम् । अमर्त्यस्तपोजाः । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वँ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवा सीद २१

त्वमग्ने रुद्रो असुरो महो दिवः । त्वँ शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शङ्गयः । त्वं पूषा विधतः पासि नु त्मना । देवा देवेषु श्रयध्वम् । प्रथमा द्वितीयेषु श्रयध्वम् । द्वितीयास्तृतीयेषु श्रयध्वम् । तृतीयाश्चतुर्थेषु श्रयध्वम् । चतुर्थाः पञ्चमेषु श्रयध्वम् । पञ्चमाः षष्ठेषु श्रयध्वम् २२

षष्ठाः सप्तमेषु श्रयध्वम् । सप्तमा अष्टमेषु श्रयध्वम् । अष्टमा नवमेषु श्रयध्वम् । नवमा दशमेषु श्रयध्वम् । दशमा एकादशेषु श्रयध्वम् । एकादशा द्वादशेषु श्रयध्वम् । द्वादशास्त्रयोदशेषु श्रयध्वम् । त्रयोदशाश्चतुर्दशेषु श्रयध्वम् । चतुर्दशाः पञ्चदशेषु श्रयध्वम् । पञ्चदशाः षोडशेषु श्रयध्वम् २३

षोडशाः सप्तदशेषु श्रयध्वम् । सपतदशा अष्टादशेषु श्रयध्वम् । अष्टादशा एकान्नविँशेषु श्रयध्वम् । एकान्नविँशा विँशेषु श्रयध्वम् । विँशा एकविँशेषु श्रयध्वम् । एकविँशा द्वाविँशेषु श्रयध्वम् । द्वाविँशास्त्रयोविँशेषु श्रयध्वम् । त्रयोविँशाश्चतुर्विँशेषु श्रयध्वम् । चतुर्विँशाः पञ्चविँशेषु श्रयध्वम् । पञ्चविँशाः षड्विँशेषु श्रयध्वम् २४

षड्विँशाः सप्तविँशेषु श्रयध्वम् । सप्तविँशा अष्टाविँशेषु श्रयध्वम् । अष्टाविँशा एकान्नत्रिँशेषु श्रयध्वम् । एकान्नत्रिँशास्त्रिँशेषु श्रयध्वम् । त्रिँशा एकत्रिँशेषु श्रयध्वम् । एकत्रिँशा द्वात्रिँशेषु श्रयध्वम् । द्वात्रिँशास्त्रयस्त्रिँशेषु श्रयध्वम् । देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिँशाः । उत्तरे भवत । उत्तरवर्त्मान उत्तरसत्वानः । यत्काम इदं जुहोमि । तन्मे समृध्यताम् । वयँ स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा २५

अग्नाविष्णू सजोषसा । इमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् । राज्ञी विराज्ञी ।सम्राज्ञी स्वराज्ञी ।अर्चिः शोचिः । तपो हरो भाः । अग्निः सोमो बृहस्पतिः । विश्वे देवा भुवनस्य गोपाः । ते सर्वे संगत्य । इदं मे प्रावता वचः । वयँ स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा २६

अन्नपतेऽन्नस्य नो देहि । अनमीवस्य शुष्मिणः । प्र प्रदातारं तरिषः । ऊर्जं नो धेहि द्विपदे चतुष्पदे । अग्ने पृथिवीपते । सोम वीरुधां पते । त्वष्टः समिधां पते । विष्णवाशानां पते । मित्र सत्यानां पते । वरुण धर्मणाम्पते २७

मरुतो गणानां पतयः । रुद्र पशूनां पते । इन्द्रौजसां पते । बृहस्पते ब्रह्मणस्पते । आ रुचा रोचेऽहँ स्वयम् । रुचा रुरुचे रोचमानः । अतीत्यादः स्वराभरेह । तस्मिन्योनौ प्रजनौ प्रजायेय । वयँ स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा २८

सप्त ते अग्ने समिधः सप्त जिह्वाः । सप्तर्षयः सप्त धाम प्रियाणि । सप्त होत्रा अनुविद्वान् । सप्त योनीरापृणस्वा घृतेन । प्राची दिक् । अग्निर्देवता । अग्निँ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिक् । इन्द्रो देवता २९

इन्द्रँ स दिशां देवं देवतानामृच्छतु । यो मा एतस्यै दिशोऽभिदासति । प्रतीची दिक् । सोमो देवता । सोमँ स दिशाँ देवं देवतानामृच्छतु । यो मैतस्यै देशोऽभिदासति । उदीची दिक् । मित्रावरुणौ देवता । मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति ३०

ऊर्ध्वा दिक् । बृहस्पतिर्देवता । बृहस्पतिँ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । इयं दिक् । अदितिर्देवता । अदितिँ स दिशां देवीं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । पुरुषो दिक् । पुरुषो मे कामान्त्समर्धयतु ३१

अन्धो जागृविः पाण । असावेहि । बधिर आक्रन्दयितरपान । असावेहि । उषसमुषसमशीय । अहमसो ज्योतिरशीय । अहमसोऽपोऽशीय । वयँ स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा ३२

यत्तेऽचितं यदु चितं ते अग्ने । यत्त ऊनं यदु तेऽतिरिक्तम् । आदित्यास्तदङ्गिरसश्चिन्वन्तु । विश्वे ते देवाश्चितिमापूरयन्तु । चितश्चासि संचितश्चास्यग्ने । एतावाँश्चासि भूयाँश्चास्यग्ने । लोकं पृण च्छिद्रं पृण । अथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिः । अस्मिन्योनावसीषदन् ३३

तया देवतयाङ्गिरस्वद्ध्रुवा सीद । ता अस्य सूददोहसः । सोमँ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशः । त्रिष्वारोचने दिवः । तया देवत-याङ्गिरस्वद्ध्रुवा सीद । अग्ने देवाँ इहावह । जज्ञानो वृक्तवर्हिषे । असि होता न ईड्यः । अगन्म महा मनसा यविष्ठम् ३४

यो दीदाय समिद्धः स्वे दुरोणे । चित्रभानू रोदसी अन्तरुर्वी ।स्वाहुतं विश्वतः प्रत्यञ्चम् । मेधाकारं विदथस्य प्रसाधनम् । अग्निँ होतारं परिभूतमं मतिम् । त्वामर्भस्य हविषः समानमित् । त्वां महो वृणते नरो नान्यं त्वत् । मनुष्वत्त्वा निधीमहि । मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरः ३५

देवान्देवायते यज । अग्निर्हि वाजिनं विशे । ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवम् । स प्रीतो याति वार्यम् । इषँ स्तोतृभ्य आभर । पृष्टो दिवि पृष्टो अग्निः पृथिव्याम् । पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः । स नो दिवा स रिषः पातु नक्तम् ३६

अयं वाव यः पवते । सोऽग्निर्नाचिकेतः । स यत्प्राङ्पवते । तदस्य शिरः । अथ यद्दक्षिणा । स दक्षिणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छम् । यदुदङ्।स उत्तरः पक्षः ३७

अथ यत्संवाति । तदस्य समञ्चनं च प्रसारणं च । अथो सम्पदेवास्य सा

। सँ ह वा ग्रस्मै स कामः पद्यते । यत्कामो यजते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । यो ह वा ग्रग्नेर्नाचिकेतस्यायतनं प्रतिष्ठां वेद । ग्रायतनवान्भवति । गच्छति प्रतिष्ठाम् ३८

हिरगयं वा ग्रग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा । य एवं वेद । ग्रायतनवान्भवति । गच्छति प्रतिष्ठाम् । यो ह वा ग्रग्नेर्नाचिकेतस्य शरीरं वेद । सशरीर एव स्वर्गं लोकमेति । हिरगयं वा ग्रग्नेर्नाचिकेतस्य शरीरम् । य एवं वेद । सशरीर एव स्वर्गं लोकमेति । ग्रथो यथा रुक्म उत्तप्तो भाय्यात् ३९

एवमेव स तेजसा यशसा । ग्रस्मिँश्च लोकेऽमुष्मिँश्च भाति । उरवो ह वै नामैते लोकाः । येऽवरेणादित्यम् । ग्रथ हैते वरीयाँसो लोकाः । ये परेणादित्यम् । ग्रन्तवन्तँ ह वा एष न्नय्यं लोकं जयति । योऽवरेणादित्यम् । ग्रथ हैषोऽनन्तमपारमन्नय्यं लोकं जयति । यः परेणादित्यम् ४०

ग्रनन्तँ ह वा ग्रपारमन्नय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । ग्रथो यथा रथे तिष्ठन्पन्नसी पर्यावर्तमाने प्रत्यपेन्नते । एवमहोरात्रे प्रत्यपेन्नते । नास्याहोरात्रे लोकमाप्नुतः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ४१

उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र ग्रास । तँ ह कुमारँ सन्तम् । दन्निणासु नीयमानासु श्रद्धाविवेश । स होवाच । ततः कस्मै मां दास्यसीति । द्वितीयं तृतीयम् । तँ ह परीत उवाच । मृत्यवे त्वा ददामीति । तँ ह स्मोत्थितं वागभिवदति ४२

गौतम कुमारमिति । स होवाच । परेहि मृत्योर्गृहान् । मृत्यवे वै त्वादामिति । तं वै प्रवसन्तं गन्तासीति होवाच । तस्य स्म तिस्रो रात्रीरनाश्वान्गृहे वसतात् । स यदि त्वा पृच्छेत् । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रतिब्रूतात् । किं प्रथमाँ रात्रिमाश्ना इति ४३

प्रजां त इति । किं द्वितीयामिति । पशूँस्त इति । किं तृतीयामिति ।

साधुकृत्यां त इति । तं वै प्रवसन्तं जगाम । तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवास । तमागत्य पप्रच्छ । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रत्युवाच ४४

किं प्रथमाँ रात्रिमाश्ना इति । प्रजां त इति । किं द्वितीयामिति । पशूँस्त इति । किं तृतीयामिति । साधुकृत्यां त इति । नमस्ते अस्तु भगव इति होवाच । वरं वृणीष्वेति । पितरमेव जीवन्नयानीति । द्वितीयं वृणीष्वेति ४५

इष्टापूर्तयोर्मेऽक्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते ना क्षीयेते । नास्येष्टापूर्ते क्षीयेते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै सोऽप पुनर्मृत्युमजयत् ४६

अप पुनर्मृत्युं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत । स हिरण्यमुदास्यत् । तदग्नौ प्रास्यत् । तदस्मै नाच्छदयत् । तद्द्वितीयं प्रास्यत् । तदस्मै नैवाच्छदयत् । तत्तृतीयं प्रास्यत् ४७

तदस्मै नैवाच्छदयत् । तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत् । तदस्मा अच्छदयत् । तस्माद्धिरण्यं कनिष्ठं धनानाम् । भुञ्जत्प्रियतमम् । हृदयजँ हि । स वै तमेव नाविन्दत् । यस्मै तां दक्षिणामनेष्यत् । ताँ स्वायैव हस्ताय दक्षिणायानयत् । तां प्रत्यगृह्णात् ४८

दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति । सोऽदक्षत दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद । एतद्ध स्म वै तद्विद्वाँसो वाजश्रवसा गोतमाः । अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति । उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति । तेऽदक्षन्त दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद । प्र हान्यं व्लीनाति ४९

तँ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते । उत्तरवेदिसंमित एषोऽग्निरिति वदन्तः । तन्न तथा कुर्यत् । एतमग्निं कामेन व्यर्धयेत् । स एनं कामेन व्यृद्धः । कामेन व्यर्धयेत् । सौम्ये वावैनमध्वरे चिन्वीत । यत्र वा भूयिष्ठा आहुतयो हूयेरन् । एतमग्निं कामेन समर्धयति । स एनं कामेन समृद्धः ५०

कामेन समर्धयति । अथ हैनं पुरर्षयः । उत्तरवेद्यामेव सत्रियमचिन्वत । ततो वै तेऽविन्दन्त प्रजाम् । अभि स्वर्गं लोकमजयन् । विन्दत एव प्रजाम् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथ हैनं वायुर्ऋद्धिकामः ५१

यथान्युप्तमेवोपदधे । ततो वै स एतामृद्धिमार्ध्नोत् । यामिदं वायुर्ऋद्धः । एतामृद्धिमृध्नोति । यामिदं वायुर्ऋद्धः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथ हैनं गोबलो वार्ष्णः पशुकामः । पाङ्क्तमेव चिक्ये । पञ्च पुरस्तात् ५२

पञ्च दक्षिणतः । पञ्च पश्चात् । पञ्चोत्तरतः । एकां मध्ये । ततो वै स सहस्त्रं पशून्प्राप्नोत् । प्र सहस्त्रं पशूनाप्नोति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशस्कामः प्रजननकामः । त्रिवृतमेव चिक्ये ५३

सप्त पुरस्तात् । तिस्रो दक्षिणतः । सप्त पश्चात् । तिस्र उत्तरतः । एकां मध्ये । ततो वै स प्र यशो ज्यैष्ठ्यमाप्नोत् । एतां प्रजातिं प्राजायत । यामिदं प्रजाः प्रजायन्ते । त्रिवृद्वै ज्यैष्ठ्यम् । माता पिता पुत्रः ५४

त्रिवृत्प्रजननम् । उपस्थो योनिर्मध्यमा । प्र यशो ज्यैष्ठ्यमाप्नोति । एतां प्रजातिं प्रजायते । यामिदं प्रजाः प्रजायन्ते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथ हैनमिन्द्रो ज्यैष्ठ्यकामः । ऊर्ध्वा एवोपदधे । ततो वै स ज्यैष्ठ्यमगच्छत् ५५

ज्यैष्ठ्यं गच्छति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । अथ हैनमसावादित्यः स्वर्गकामः । प्राचीरेवोपदधे । ततो वै सोऽभि स्वर्गं लोकमजयत् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । स यदीच्छेत् ५६

तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति । प्राङ होतुर्धिष्णयादुत्सर्पेत् । येयं प्रागाद्यशस्वती ।सा मा प्रोर्णोतु । तेजसा यशसा ब्रह्मवर्चसेनेति । तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति । अथ यदीच्छेत् । भूयिष्ठं मे श्रद्दधीरन् । भूयिष्ठा दक्षिणा नयेयुरिति । दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात् ५७

भूयिष्ठमेवास्मै श्रद्दधते । भूयिष्ठा दक्षिणा नयन्ति । पुरीषमुपधाय । चितिक्लृप्तिभिरभिमृश्य । अग्निं प्रणीयोपसमाधाय । चतस्र एता आहुतीर्जुहोति । त्वमग्ने रुद्र इति । शतरुद्रीयस्य रूपम् । अग्नाविष्णू इति वसोर्धारायाः । अन्नपत इत्यन्नहोमः । सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः ५८

यां प्रथमामिष्टकामुपदधाति । इमं तया लोकमभिजयति । अथो या अस्मिँल्लोके देवताः । तासाँ सायुज्यँ सलोकतामाप्नोति । यां द्वितीयामुपदधाति । अन्तरिक्षलोकं तयाभिजयति । अथो या अन्तरिक्षलोके देवताः । तासाँ सायुज्यँ सलोकतामाप्नोति । यां तृतीयामुपदधाति । अमुं तया लोकमभिजयति ५९

अथो या अमुष्मिँल्लोके देवताः । तासाँ सायुज्यँ सलोकतामाप्नोति । अथो या अमूरितरा अष्टादश । य एवामी उरवश्च वरीयाँसश्च लोकाः । तानेव ताभिरभिजयति । कामचारो ह वा अस्योरुषु च वरीयःसु च लोकेषु भवति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । संवत्सरो वा अग्निर्नाचिकेतः । तस्य वसन्तः शिरः ६०

ग्रीष्मो दक्षिणः पक्षः । वर्षा उत्तरः । शरत्पुच्छम् । मासाः कर्मकाराः ।

अहोरात्रे शतरुद्रीयम् । पर्जन्यो वसोर्धारा । यथा वै पर्जन्यः सुवृष्टं वृष्ट्वा । प्रजाभ्यः सर्वान्कामान्त्संपूरयति । एवमेव स तस्य सर्वान्कामान्त्संपूरयति । योऽग्निं नाचिकेतं चिनुते ६१

य उ चैनमेवं वेद । संवत्सरो वा अग्निर्नाचिकेतः । तस्य वसन्तः शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् । अहोरात्राणीष्टकाः । एष वाव सोऽग्निरग्निमयः पुनर्णवः । अग्निमयो ह वै पुनर्णवो भूत्वा । स्वर्गं लोक- मेति । आदित्यस्य सायुज्यम् । योऽग्निं नाचिकेतं चिनुते । य उ चैन- मेवं वेद ६२ ११

तुभ्यं ता अङ्गिरस्तमश्याम तं काममग्ने । आशानां त्वा । विश्वा आशाः । अनु नोऽद्यानुमतिर् । अन्विदनुमते त्वम् । कामो भूतस्य कामस्तदग्रे । ब्रह्म जज्ञानं। पिता विराजाम् । यज्ञो रायोऽयं यज्ञः । आपो भद्रा आदित्पश्यामि । तुभ्यं भरन्ति यो देह्यः । पूर्वं देवा अपरेण । प्राणापानौ । हव्यवाहँ। स्विष्टम् १

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः २

तमाशाब्रवीत् । प्रजापत आशया वै श्राम्यसि । अहमु वा आशास्मि । मां नु यजस्व । अथ ते सत्याशा भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । आशायै चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्याशाभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्याशा भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहाशायै स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय

स्वाहाग्नये स्विष्टकृते स्वाहेति ३

तं कामोऽब्रवीत् । प्रजापते कामेन वै श्राम्यसि । अहमु वै कामोऽस्मि । मां नु यजस्व । अथ ते सत्यः कामो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमाष्टाकपालं निरवपत् । कामाय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यः कामोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यो ह वा अस्य कामो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहा कामाय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ४

तं ब्रह्माब्रवीत् । प्रजापते ब्रह्मणा वै श्राम्यसि । अहमु वै ब्रह्मास्मि । मां नु यजस्व । अथ ते ब्रह्मणवान्यज्ञो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । ब्रह्मणे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य ब्रह्मणवान्यज्ञोऽभवत् । अनु स्वर्गं लोकमविन्दत् । ब्रह्मणवान्ह वा अस्य यज्ञो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ५

तं यज्ञोऽब्रवीत् । प्रजापते यज्ञेन वै श्राम्यसि । अहमु वै यज्ञोऽस्मि । मां नु यजस्व । अथ ते सत्यो यज्ञो भवष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । यज्ञाय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यो यज्ञोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यो ह वा अस्य यज्ञो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहा यज्ञाय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ६

तमापोऽब्रुवन् । प्रजापतेऽप्सु वै सर्वे कामाः श्रिताः । वयमु वा आपः स्मः

। अस्मान्नु यजस्व । अथ त्वयि सर्वे कामाः श्रयिष्यन्ते । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । अद्भ्यश्चरुम् । अनुमत्यै चरुम् । ततो वै तस्मिन्त्सर्वे कामा अश्रयन्त । अनु स्वर्गं लोकमविन्दत् । सर्वे ह वा अस्मिन्कामाः श्रयन्ते । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहाद्भ्यः स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ७

तमग्निर्बलिमानब्रवीत् । प्रजापतेऽग्नये वै बलिमते सर्वाणि भूतानि बलिँ हरन्ति । अहमु वा अग्निर्बलिमानस्मि । मां नु यजस्व । अथ ते सर्वाणि भूतानि बलिँ हरिष्यन्ति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । अग्नये बलिमते चरुम् । अनुमत्यै चरुम् । ततो वै तस्मै सर्वाणि भूतानि बलिमहरन् । अनु स्वर्गं लोकमविन्दत् । सर्वाणि ह वा अस्मै भूतानि बलिँ हरन्ति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहाग्नये बलिमते स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ८

तमनुवित्तिरब्रवीत् । प्रजापते स्वर्गं वै लोकमनुविवित्ससि । अहमु वा अनुवित्तिरस्मि । मां नु यजस्व । अथ ते सत्यानुवित्तिर्भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । अनुवित्त्यै चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यानुवित्तिरभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्यानुवित्तिर्भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । ऽत्र जुहोति । अग्नये कामाय स्वाहानुवित्त्यै स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति ९

ता वा एताः सप्त स्वर्गस्य लोकस्य द्वारः । दिवः श्येनयोऽनुवित्तयो नाम । आशा प्रथमाँ रक्षति । कामो द्वितीयाम् । ब्रह्म तृतीयाम् । यज्ञश्चतुर्थीम् । आपः पञ्चमीम् । अग्निर्बलिमान्त्षष्ठीम् । अनुवित्तिः सप्तमीम् । अनु

ह वै स्वर्गं लोकं विन्दति । कामचारोऽस्य स्वर्गे लोके भवति । य एताभिरिष्टिभिर्यजते । य उ चैना एवं वेद । तास्वन्विष्टि । पष्ठौहीवरां दद्यात्कँसं च । स्त्रियै चाभारँ समृद्ध्यै १०

तपसा देवा देवतामग्र आयन् । तपसर्षयः स्वरन्वविन्दन् । तपसा सपत्नान्प्रणुदामारातीः । येनेदं विश्वं परिभूतं यदस्ति । प्रथमजं देवँ हविषा विधेम । स्वयंभु ब्रह्म परमं तपो यत् । स एव पुत्रः स पिता स माता । तपो ह यज्ञं प्रथमं संबभूव । श्रद्धया देवो देवत्वमश्नुते । श्रद्धा प्रतिष्ठा लोकस्य देवी ११

सा नो जुषाणोपयज्ञमागात् । कामवत्सामृतं दुहाना । श्रद्धा देवी प्रथमजा ऋतस्य । विश्वस्य भर्त्री जगतः प्रतिष्ठा । ताँ श्रद्धाँ हविषा यजामहे । सा नो लोकममृतं दधातु । ईशाना देवी भुवनस्याधिपत्नी ।आगात्सत्यँ हविरिदं जुषाणम् । यस्माद्देवा जज्ञिरे भुवनं च विश्वे । तस्मै विधेम हविषा घृतेन १२

यथा देवैः सधमादं मदेम । यस्य प्रतिष्ठोर्वन्तरिक्षम् । यस्माद्देवा जज्ञिरे भुवनं च सर्वे । तत्सत्यमर्चदुप यज्ञं न आगात् । ब्रह्माहुतीरुप मोदमानम् । मनसो वशे सर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान् । स नो जुषाण उप यज्ञमागात् । आकूतीनामधिपतिं चेतसां च १३

संकल्पजूतिं देवं विपश्चिम् । मनो राजानमिह वर्धयन्तः । उपहवेऽस्य सुमतौ स्याम । चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अति पाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु । अग्निर्मूर्धा भुवः । अनु नोऽद्यानुमतिरन्विदनुमते त्वम् । हव्यवाहँ स्विष्टम् १४

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो

वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः १५

तं तपोऽब्रवीत् । प्रजापते तपसा वै श्राम्यसि । अहमु वै तपोऽस्मि । मां नु यजस्व । अथ ते सत्यं तपो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । तपसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं तपोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यँ ह वा अस्य तपो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा तपसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति १६

तँ श्रद्धाब्रवीत् । प्रजापते श्रद्धया वै श्राम्यसि । अहमु वै श्रद्धास्मि । मां नु यजस्व । अथ ते सत्या श्रद्धा भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । श्रद्धायै चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्या श्रद्धाभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्य श्रद्धा भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा श्रद्धायै स्वाहा । अनुमत्यि स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति १७

तँ सत्यमब्रवीत् । प्रजापते सत्येन वै श्राम्यसि । अहमु वै सत्यमस्मि । मां नु यजस्व । अथ ते सत्यँ सत्यं भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । सत्याय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यँ सत्यमभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यँ ह वा अस्य सत्यं भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा सत्याय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते

स्वाहेति १८

तं मनोऽब्रवीत् । प्रजापते मनसा वै श्राम्यसि । अहमु वै मनोऽस्मि । मां नु यजस्व । अथ ते सत्यं मनो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । मनसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं मनोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यँ ह वा अस्य मनो हवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा मनसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति १९

तं चरणमब्रवीत् । प्रजापते चरणेन वै श्राम्यसि । अहमु वै चरणमस्मि । मां नु यजस्व । अथ ते सत्यं चरणं भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । चरणाय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं चरणमभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यँ ह वा अस्य चरणं भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा चरणाय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाग्नये स्विष्टकृते स्वाहेति २०

ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः । अपाघा अनुवित्तयो नाम । तपः प्रथमाँ रक्षति । श्रद्धा द्वितीयाम् । सत्यं तृतीयाम् । मनश्चतुर्थीम् । चरणं पञ्चमीम् । अनु ह वै स्वर्गं लोकं विन्दति । कामचारोऽस्य स्वर्गे लोके भवति । य एताभिरिष्टिभिर्यजते । य उ चैना एवं वेद । तास्वन्विष्टि । पष्ठौहीवरां दद्यात्कँसं च । स्त्रियै चाभारँ समृद्ध्यै २१

ब्रह्म वै चतुर्होतारः । चतुर्होतृभ्योऽधि यज्ञो निर्मितः । नैनँ शप्तम् । नाभिचरितमागच्छति । य एवं वेद । यो ह वै चतुर्होतृणां चतुर्होतृत्वं वेद । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । वाचस्पतिर्होता दशहोतृणाम् । पृथिवी होता चतुर्होतृणाम् २२

अग्निर्होता पञ्चहोतॄणाम् । वाग्घोता षड्ढोतॄणाम् । महाहविर्होता सप्तहोतॄणाम् । एतद्वै चतुर्होतॄणां चतुर्होतृत्वम् । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । य एवं वेद । एषा वै सर्वविद्या । एतद्भेषजम् । एषा पङ्क्तिः स्वर्गस्य लोकस्याञ्जसायनिः स्रुतिः २३

एतान्योऽध्यैत्यच्छदिर्दर्शे यावत्तरसम् । स्वरेति । अनपब्रवः सर्वमायुरेति । विन्दते प्रजाम् । रायस्पोषं गौपत्यम् । ब्रह्मवर्चसी भवति । एतान्योऽध्यैति । स्पृणोत्यात्मानम् । प्रजां पितॄन् । एतान्वा अरुण औपवेशिर्विदाञ्चकार २४

एतैरधिवादमपाजयत् । अथो विश्वं पाप्मानम् । स्वर्ययौ । एतान्योऽध्यैति । अधिवादं जयति । अथो विश्वं पाप्मानम् । स्वरेति । एतैरग्निं चिन्वीत स्वर्गकामः । एतैरायुष्कामः । प्रजापशुकामो वा २५

पुरस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदम् । हृदयं यजुषी पत्न्यौ च । दक्षिणतः प्राञ्चं चतुर्होतारम् । पश्चादुदञ्चं पञ्चहोतारम् । उत्तरतः प्राञ्चँ षड्ढोतारम् । उपरिष्टात्प्राञ्चँ सप्तहोतारम् । हृदयं यजूँषि पत्न्यश्च । यथावकाशं ग्रहान् । यथावकाशं प्रतिग्रहाँल्लोकंपृणाश्च । सर्वा हास्यैता देवताः प्रीता अभीष्टा भवन्ति २६

सदेवमग्निं चिनुते । रथसंमितश्चेतव्यः । वज्रो वै रथः । वज्रेणैव पाप्मानं भ्रातृव्यँ स्तृणुते । पक्षःसंमितश्चेतव्यः । एतावान्वै रथः । यावत्पक्षः । रथसंमितमेव चिनुते । इममेव लोकं पशुबन्धेनाभिजयति । अथो अग्निष्टोमेन २७

अन्तरिक्षमुक्थ्येन । स्वरतिरात्रेण । सर्वाँल्लोकानहीनेन । अथो सत्रेण । वरो दक्षिणा । वरेणैव वरँ स्पृणोति । आत्मा हि वरः । एकविँशतिर्दक्षिणा ददाति । एकविँशो वा इतः स्वर्गो लोकः । प्र स्वर्गं लोकमाप्नोति २८

असावादित्य एकविँशः । अमुमेवादित्यमाप्नोति । शतं ददाति । शतायुः

पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । सहस्रं ददाति । सहस्रसंमितः स्वर्गो लोकः । स्वर्गस्य लोकस्याभिजित्यै । अन्विष्टकं दक्षिणा ददाति । सर्वाणि वयाँसि २९

सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । यदि न विन्देत । मन्थानेतावतो दद्यादोदनान्वा । अश्नुते तं कामम् । यस्मै कामायाग्निश्चीयते । पष्ठौहीं त्वन्तर्वतीं दद्यात् । सा हि सर्वाणि वयाँसि । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ३०

हिरण्यं ददाति । हिरण्यज्योतिरेव स्वर्गं लोकमेति । वासो ददाति । तेनायुः प्रतिरते । वेदितृतीये यजेत । त्रिषत्या हि देवाः । ससत्यमग्निं चिनुते । तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात् । नेतरेषु यज्ञेषु । यो ह वै चतुर्होतॄननुसवनं तर्पयितव्यान्वेद ३१

तृप्यति प्रजया पशुभिः । उपैनँ सोमपीथो नमति । एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः । ये ब्राह्मणा बहुविदः । तेभ्यो यद्दक्षिणा न नयेत् । दुरिष्टँ स्यात् । अग्निमस्य वृञ्जीरन् । तेभ्यो यथाश्रद्धं दद्यात् । स्विष्टमेवैतत्क्रियते । नास्याग्निं वृञ्जते ३२

हिरण्येष्टको भवति । यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितम् । तेजो हिरण्यम् । यदि हिरण्यं न विन्देत् । शर्करा अक्ता उपदध्यात् । तेजो घृतम् । सतेजसमेवाग्निं चिनुते । अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा । वीर्येण वा एष व्यृध्यते । योऽग्निं चिनुते ३३

यावदेव वीर्यम् । तदस्मिन्दधाति । ब्रह्मणः सायुज्यँ सलोकतामाप्नोति । एतासामेव देवतानाँ सायुज्यम् । सार्ष्टिताँ समानलोकतामाप्नोति । य एतमग्निं चिनुते । य उ चैनमेवं वेद । एतदेव सावित्रे ब्राह्मणम् । अथो नाचिकेते ३४

यच्चामृतं यच्च मर्त्यम् । यच्च प्राणिति यच्च न । सर्वास्ता इष्टकाः कृत्वा ।

उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । सर्वाः स्त्रियः सर्वान्पुँसः । सर्वं नस्त्रीपुमं च यत् । सर्वास्ताः । यावन्तः पाँसवो भुमेः ३५

संख्याता देवमायया । सर्वास्ताः । यावन्त ऊषाः पशूनाम् । पृथिव्यां पुष्टिर्हिताः । सर्वास्ताः । यावतीः सिकताः सर्वाः । अप्स्वन्तश्च याः स्त्रिताः । सर्वास्ताः । यावतीः शर्करा धृत्यै । अस्यां पृथिव्यामधि ३६

सर्वास्ताः । यावन्तोऽश्मानोऽस्यां पृथिव्याम् । प्रतिष्ठासु प्रतिष्ठिताः । सर्वास्ताः । यावतीर्वीरुधः सर्वाः । विष्ठिताः पृथिवीमनु । सर्वास्ताः । यावतीरोषधीः सर्वाः । विष्ठिताः पृथिवीमनु । सर्वास्ताः ३७

यावन्तो वनस्पतयः । अस्यां पृथिव्यामधि । सर्वास्ताः । यावन्तो ग्राम्याः पशवः सर्वे । आरण्याश्च ये । सर्वास्ताः । ये द्विपादश्चतुष्पादः । अपाद उदरसर्पिणः । सर्वास्ताः । यावदाञ्जनमुच्यते ३८

देवत्रा यच्च मानुषम् । सर्वास्ताः । यावत्कृष्णायसँ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । यावल्लोहायसँ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । सर्वँ सीसँ सर्वं त्रपु । देवत्रा यच्च मानुषम् ३९

सर्वास्ताः । सर्वँ हिरण्यँ रजतम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । सर्वँ सुवर्णँ हरितम् । देवत्रा यच्च मानुषम् । सर्वास्ता इष्टकाः कृत्वा उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवा सीद ४०

सर्वा दिशो दिक्षु । यच्चान्तर्भूतं प्रतिष्ठितम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । अन्तरिक्षं च केवलम् । यच्चास्मिन्नन्तराहितम् । सर्वास्ताः । आन्तरिक्ष्यश्च याः प्रजाः ४१

गन्धर्वाप्सरसश्च ये । सर्वास्ताः । सर्वानुदारान्त्सलिलान् । अन्तरिक्षे

प्रतिष्ठितान् । सर्वास्ताः । सर्वानुदारान्त्सलिलान् । स्थावराः प्रोष्याश्च ये । सर्वास्ताः । सर्वां धुनिँ सर्वान्ध्वँसान् । हिमो यच्च शीयते ४२

सर्वास्ताः । सर्वान्मरीचीन्विततान् । नीहारो यच्च शीयते । सर्वास्ताः । सर्वा विद्युतः सर्वान्त्स्तनयित्नून् । ह्रादुनीर्यच्च शीयते । सर्वास्ताः । सर्वाः स्रवन्तीः सरितः । सर्वमप्सुचरं च यत् । सर्वास्ताः ४३

याश्च कूप्या याश्च नाद्याः समुद्रियाः । याश्च वैशन्तीरुत प्रासचीर्याः । सर्वास्ताः । ये चोत्तिष्ठन्ति जीमूताः । याश्च वर्षन्ति वृष्टयः । सर्वास्ताः । तपस्तेज आकाशं । यच्चाकाशे प्रतिष्ठितम् । सर्वास्ताः । वायुं वयाँसि सर्वाणि ४४

अन्तरिक्षचरं च यत् । सर्वास्ताः । अग्निँ सूर्यं चन्द्रम् । मित्रं वरुणं भगम् । सर्वास्ताः । सत्यँ श्रद्धाँ तपो दमम् । नाम रूपं च भूतानाम् । सर्वास्ता इष्टकाः कृत्वा उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवा सीद ४५

सर्वां दिवँ सर्वान्देवान्दिवि । यच्चान्तर्भूतं प्रतिष्ठितम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवा सीद । यावतीस्तारकाः सर्वाः । वितता रोचने दिवि । सर्वास्ताः । ऋचो यजूँषि सामानि ४६

अथर्वाङ्गिरसश्च ये । सर्वास्ताः । इतिहासपुराणं च । सर्पदेवजनाश्च ये । सर्वास्ताः । ये च लोका ये चालोकाः । अन्तर्भूतं प्रतिष्टितम् । सर्वास्ताः । यच्च ब्रह्म यच्चाब्रह्म । अन्तर्ब्रह्मन्प्रतिष्ठितम् ४७

सर्वास्ताः । अहोरात्राणि सर्वाणि । अर्धमासाँश्च केवलान् । सर्वास्ताः । सर्वानृतून्त्सर्वान्मासान् । संवत्सरं च केवलम् । सर्वास्ताः । सर्वं भूतँ सर्वं भव्यम् । यच्चातोऽधिभविष्यति । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाङ्गिरस्वद्ध्रुवा सीद

४८

ऋचां प्राची महती दिगुच्यते । दक्षिणामाहुर्यजुषामपाराम् । अथर्वणामङ्गिरसां प्रतीची ।साम्नामुदीची महती दिगुच्यते । ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति । मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः । ऋग्भ्यो जाताँ सर्वशो मूर्तिमाहुः । सर्वा गतिर्याजुषी हैव शश्वत् ४९

सर्वं तेजः सामरूप्यँ ह शश्वत् । सर्वँ हेदं ब्रह्मणा हैव सृष्टम् । ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याहुर्योनिम् । सामवेदो ब्राह्मणानां प्रसूतिः । पूर्वे पूर्वेभ्यो वच एतदूचुः । आदर्शमग्निं चिन्वानाः । पूर्वे विश्वसृजोऽमृताः । शतं वर्षसहस्राणि । दीक्षिताः सत्रमासत ५०

तप आसीद्गृहपतिः । ब्रह्म ब्रह्माभवत्स्वयम् । सत्यँ ह होतैषामासीत् । यद्विश्वसृज आसत । अमृतमेभ्य उदगायत् । सहस्रं परिवत्सरान् । भूतँ ह प्रस्तोतैषामासीत् । भविष्यत्प्रति चाहरत् । प्राणो अध्वर्युरभवत् । इदँ सर्वँ सिषासताम् ५१

अपानो विद्वानावृतः । प्रति प्रातिष्ठदध्वरे । आर्तवा उपगातारः । सदस्या ऋतवोऽभवन् । अर्धमासाश्च मासाश्च । चमसाध्वर्यवोऽभवन् । अशँसद्ब्रह्मणस्तेजः । अच्छावाकोऽभवद्यशः । ऋतमेषां प्रशास्तासीत् । यद्विश्वसृज आसत ५२

ऊर्ग्राजानमुदवहत् । ध्रुवगोपः सहोऽभवत् । ओजोऽभ्यष्टौद्ग्राव्णः । यद्विश्वसृज आसत । अपचितिः पोत्रीयामयजत् । नेष्ट्रीयामयजत्त्विषिः । आग्नीध्राद्विदुषी सत्यम् । श्रद्धा हैवायजत्स्वयम् । इरा पत्नी विश्वसृजाम् । आकूतिरपिनड्ढविः ५३

इध्मँ ह क्षुच्चैभ्य उग्रे । तृष्णा चावहतामुभे । वागेषाँ सुब्रह्मण्यासीत् । छन्दोयोगान्विजानती ।कल्पतन्त्राणि तन्वानाहःसँस्थाश्च सर्वशः । अहोरात्रे

पशुपाल्यौ । मुहूर्ताः प्रेष्या अभवन् । मृत्युस्तदभवद्धाता । शमितोग्रो विशां पतिः ५४

विश्वसृजः प्रथमाः सत्त्रमासत । सहस्रसमं प्रसुतेन यन्तः । ततो ह जज्ञे भुवनस्य गोपाः । हिरण्मयः शकुनिर्ब्रह्म नाम । येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पृमान्योनियोनौ । नावेदविन्मनुते तं बृहन्तम् । सर्वानुभुमात्मानँ संपराये । एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् ५५

तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन । पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः । पञ्च पञ्चाशतः पञ्चदशाः । पञ्च पञ्चाशतः सप्तदशाः । पञ्च पञ्चाशत एकविँशाः । विश्वसृजाँ सहस्रसंवत्सरम् । एतेन वै विश्वसृज इदं विश्वमसृजन्त । यद्विश्वमसृजन्त । तस्माद्विश्वसृजः । विश्वमेनाननु प्रजायते । ब्रह्मणः सायुज्यँ सलोकतां यन्ति । एतासामेव देवतानाँ सायुज्यम् । सार्ष्टिताँ समानलोकतां यन्ति । य एतदुपयन्ति । ये चैनत्प्राहुः । येभ्यश्चैनत्प्राहुः ५६ १२ ३

Credits

Sources: *Taittirīya-Brāhmaṇa*
Typescript: Edited by Makoto Fushimi
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection